# आशुबोधव्याकरणम्।

कलिकाता संस्कृतविद्यामन्दिराध्यापकेन

श्रीतारानाथ-तर्कवाचस्पति-भट्टाचार्य्येण

सङ्कलितम्।

तदङ्गसम्भवेन पण्डितकुलपतिना बि, ए, उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

संस्कृतं प्रकाशितञ्च।

तृतीयसंस्करणम्।

कलिकातानगरे

सरस्वतीयन्त्रे मुद्रितम्।

खृं १८९५।

# विज्ञप्तिः ।

---

साम्प्रतिकसम्राट्सभाजितभारतवर्षीयविश्वविद्यालय-समाजाधीश्वरैः अन्यान्य विद्याभ्याससहकारित्व संस्कृतभाषाभ्यासस्य अवश्यविधेयत्वे व्यवस्थापिते (प्रसिडेन्‌सि-कलेजनामक) विद्यालयस्थानामन्तेवासिनां कथङ्कारं स्वल्पेन समयेन आयासेन च संस्कृतभाषाभ्यासः सिध्येत् इत्यत्र इतिकर्त्तव्यताविमुग्धतया संस्कृतभाषाध्यापकैः समाकुलहृदयैः समभावि । तेषु च ( प्रेसिडेन्‌सिकलेजनामक ) विद्यालयस्थ-संस्कृतभाषाध्यापकेन मदन्तेवासिना परमकल्याणिना आयुष्मता समीक्ष्यकारिणा श्रीकृष्णकमल भट्टाचार्य्येणेदं निरणायि "संस्कृतभाषायां नैपुण्यसाधनाय संस्कृत व्याकरणमेव निदानं देशविशेषप्रचलितानाञ्च तत्तद्व्याकरणानां विभिन्नतया व्युत्पत्तिवैजात्याधायकत्वेन विश्वविद्यालयसंसृष्टछात्राणां संस्कृतविद्याभ्यासस्य कुतस्तरामेकरूपता सम्भवेत् कथङ्कारं वा पाठ्यपुस्तकानामेकरूपताविरहे परीक्षा-समये प्रश्नसाम्यम् । प्रश्नसाम्यस्य उत्तरसाम्यनियामकतया तदभावे छात्रदत्तोत्तर-दर्शनेन तेषां व्युत्पत्तिवैलक्षण्यं परीक्षकैः कथं लक्ष्येत, किञ्च प्रचलितव्याकर-णानां कलेवरबाहुल्येन बहुकालकलनीयतया, काठिन्यदोषेण दुरवधारणीयतया, अप्रसिद्धानेकशब्दसाधनोपयोगिसूत्रजालकलितत्वेन, तद्बोधे फलविशेषादर्शनेन, च तदंशे वृथापरिश्रममात्राधायितया, आधुनिकसामाजिकसमयानुपयोगितया च सुप्रसिद्धशब्दसाधनभूयिष्ठं स्वल्पायासकालकलनीयं सुगममभिनवं व्याकरणमन्त-रेण समीहितं न सिध्येदिति ।"

निर्णीय च इत्थं तेन आयुष्मता तथाविधव्याकरणसङ्कलनार्थं सप्रयत्नमह-मभ्यर्थितः । तदभ्यर्थनामनुरुध्यता च मया आशुबोधाख्यमिदं व्याकरणं सङ्क-लितम् ।

पाणिनीयागमस्यैव सर्वप्रस्थानेषु श्रेष्ठतया प्रामाणिकैर्मल्लिनाथजयमङ्गल-प्रभृतिभिः काव्यादिव्याख्यातृभिः पाणिनिसूत्राणामेव प्रमाणत्वेन उपन्यस्ततया व्युत्पित्सूनां तत्परिज्ञानस्य अत्यावश्यकत्वेन तत्परिज्ञानार्थमेव प्रायेण अत्र ग्रन्थे पाणिनीयानि सूत्राणि समाहृतानि समाहृताश्च प्रायस्तदीयप्रत्ययादिसंज्ञाः । तत्तत्-सूत्रस्थवार्त्तिकभाष्याद्यनुसारीण्यपि कानिचित् सूत्राणि सङ्कलितानि सूत्रान्तरा-दुपकर्षणीयानि, अनुवर्त्तनीयानि, अनुषञ्जनीयानि, च पदानि तत्तत्सूत्रेषु सन्नि-वेशितानि क्वचित् सूत्रस्थानि दुरवबोधानि पदानि सुखावबोधैः पर्य्यायशब्दैः

परिवर्त्तितानि क्वचिच्च छिन्नान्यपि सूत्राणि एकत्र निबद्धानि । एवं सूत्राणि सङ्कलय्य संस्कृत्य कानिचिच्च सूत्राणि स्वयं विरचय्य वृत्त्या व्याख्याय च उदाहरणैः समलङ्कृतानि ।

अस्मिंश्च ग्रन्थे सूत्रपाठानुसारिणी, प्रक्रियाकौमुदीसिद्धान्तकौमुदीप्रभृतिपरिगृहीता वा परिपाटी न समादृता किन्तु सुखावबोधार्थमन्यादृगेव समवलम्बिता । तथाहि तिङ्कृदन्तबोधमन्तरेण तदुपजीविस्त्रीप्रत्ययकारकविभक्त्यादीनां ज्ञातुमशक्यतया तिङ्कृदन्तनिरूपणानन्तरञ्च तन्निरूपणे तद्बोधस्य शक्यसम्पादकतया तिङ्कृदन्तनिरूपणानन्तरमेव स्त्रीप्रत्ययादिनिरूपणं कृतम् । तिङन्तेषु भ्वाद्यदादिक्रमेण सर्वेषामेव लकाराणामेकस्मिन्नेव प्रकरणे कौमुद्यामुदाहरणम् इह तु लडादिषु चतुर्ष्वेव लकारेषु गणभेदेन शबादिकार्य्यविशेषदर्शनात् इतरेषु च लुङादिषु षट्सु तददर्शनात् तत्तद्गणक्रमेण लडादिचतुर्लकारनिरूपणानन्तरमेव सर्वगणीयसाधारणलुङाद्युदाहरणम् । तद्धितेषु च कौमुद्यां न कोऽपि क्रमोऽवलम्बितो लक्ष्यते इह तु प्रथमान्तादिक्रमेणैव मत्वर्थादिप्रत्ययानामुदाहरणम् अन्ते च विभक्तिस्थानिकानामन्येषाञ्च अव्ययतद्धितानाम् ।

छात्राणामभ्याससौकर्य्याय अनिड्धातूनां, धात्वादेशस्य, शब्दादेशस्य, परस्मैपदात्मनेपदव्यवस्थायाः, धातुभेदेन घञादिव्यवस्थायाश्च बोधिकाः कारिका रचिता न तत्र सूत्राणि उद्धृतानि बोधसौकर्य्याय ग्रन्थबाहुल्यमपि अङ्गीकृतम् ।

अत्र च ग्रन्थे पाणिन्यागमसिद्धाः सर्व्व एव सुप्रसिद्धाः समासाः सन्निवेशिता न पुनर्मुग्धबोध इव प्रादिसमासगतिसमासोपपदादिसमासा उपेक्षिताः । मुग्धबोधे सर्वाभ्यः प्रकृतिभ्यः सर्वार्थे ( ढषे कादित्यादिना, विकारसंत्रेत्यादिना, च सूत्रेण ) कतिपयतद्धितानाम्, धातुमात्रात् ( घञलनटोऽघे इति सूत्रेण ) घञादेश्च विधानादव्यवस्था इह तु तद्दोषपरिहाराय अर्थविशेष एव प्रकृतिविशेषात् तद्धितविशेषस्य, धातुभेदाच्च घञादिभेदस्य, निर्देशः ।

लघुकौमुदीग्रन्थश्च पाणिनीयागममनुसरन्नपि काठिन्यांशे मुग्धबोधादहीनत्वात् विषयप्रतिपादनांशे न्यूनतादोषदूषितत्वाच्च समीहितसाधनानुपयोगित्वेन उपेक्षाभाजनमेव प्रेक्षावताम् ।

सूत्रस्थादिपदग्राह्यगणेषु ये स्वल्पास्तेऽत्रैव ग्रन्थे क्वचित् स्वरूपतः, क्वचिच्च उदाहरणतः, प्रदर्शिताः । ये तु बहुसंख्यकास्ते मत्सङ्कलितसरलालङ्कृते १८२० संवत्सरे मयैव मुद्रिते सिद्धान्तकौमुदीग्रन्थे द्रष्टव्याः तदुद्भावनार्थञ्च तत्र तत्र पत्राङ्का उट्टङ्किताः ।

पठनपाठनासौकर्य्याय कार्य्यविशेषविधायकानां पूर्व्वोक्तानां सूत्राणां स्थलविशेषे स्मरणार्थं पत्राङ्का उल्लिखिताः ।

णत्वणत्वविधायकानि सूत्राणि क्वचित् प्रकरणमध्ये क्वचिच्च प्रकरणसमाप्तौ सङ्कलितानि ।

णत्वप्रसङ्ग इदमप्यत्राभिधीयते संस्कृतभाषाभिज्ञेन उत्तरनगरवासिना श्रीमता मणीदयेन मोक्षमूलरेण इंलण्डीयभाषया स्वरचितव्याकरणस्य मुखबन्धे ६ पत्रे इदमुद्दङ्कितम् "अष्टौऽग्रगामिनीति (८, ३, ९२ सूत्रे) पाणिनिना यदणत्वनिर्देशः कृतस्तत् कथङ्कारं सिध्येत् स्वोक्तणत्वविधायकसूत्रानुसारेण तत्र णत्वस्यैव सम्भवादिति ।"

अत्र इदं प्रतिविधीयते । पूर्वपदात् संज्ञायामग इति (८,४, ३) सूत्रेण सर्वनामशब्दस्य संज्ञाशब्दतया णत्वे सम्भावितेऽपि सूत्रकारेण सर्वादीनि सर्वनामानीति (१, २, २७) सूत्रे यत् सर्वनामशब्दे अणत्वं निर्दिष्टं तत्समर्थनाय तत्सूत्रभाष्यकृता "इह सर्वनामानीति पूर्वपदात् संज्ञाया मग इति णत्वं प्राप्नोति तस्य प्रतिषेधो वक्तव्यः सर्वनामसंज्ञायां निपातनात् णत्वं न भविष्यतीति । किमेतन्निपातनं नाम अथ कः प्रतिषेधो नाम अविशेषेण किञ्चिदुक्त्वा विशेषेण नेत्युच्यते तत्र व्यक्तमाचार्य्यस्यायमभिप्रायो गम्यते इदं न भवतीति, निपातनमप्येवंजातीयकमेव अविशेषेण णत्वमुक्त्वा विशेषेण निपातनं क्रियते तत्र व्यक्तमाचार्य्यस्यायमभिप्रायो गम्यते इदं न भवतीति (मु० १४४ । ४५ प०) ग्रन्थेन अत्र यथा निपातनादेव णत्वाभाव इत्युक्तम् तथाऽत्रापि सांदृष्टिकन्यायेन "एकत्र निर्णीतः शास्त्रार्थो बाधकमन्तरेणान्यत्रापि प्रवर्त्तते" इति न्यायेन च निपातनादेव णत्वाभावः सेत्स्यति णत्वविधायकसूत्रविरोधेन सूत्रकृतो निर्देशस्य निपातनात् णत्वाभावसाधकस्य उभयत्र तुल्यत्वात् तत्र हि पूर्वपदात् संज्ञायामग इति सूत्रेण सम्भावितप्रसङ्गं णत्वम् इह तु प्रातिपदिकान्तनुम्विभक्तिषु च (८,४, ११) सूत्रेण, कुमति च (८,४, १३) सूत्रेण च सम्भावितप्रसङ्गं णत्वं तत्र तद्बाधकञ्च सर्वनामानीत्याचार्य्येण अणत्वस्य निर्देशः इह तु अग्रगामिनीति तथा निर्देशः तथा च आक्षेपसमाधानयोः उभयत्र तुल्यत्वात् निपातनादेवात्र णत्वाभावः कल्प्यते सूत्रविरोधिकार्य्यवर्त्तन सूत्रकृतो निर्देशस्य निपातनात्तदभावकल्पकताया बहुष दर्शनात् । विस्तरभयाच्च तदुदाहरणानि नेह प्रदर्शितानि सुगमानि च तानि भाष्याद्यभिज्ञैः ।

अतएव भाष्यकृता पिष्टपेषणदोषभिया, चर्वितचर्वणकलङ्कशङ्कया अनवौचित्यदोषदर्शनेन वा अष्टौऽग्रगामिनीति सूत्रे नैव व्याख्यातम् । किञ्च प्रातिपदिकान्तनुम्विभक्तिषु चेति प्रकरणविहितणत्वस्य निषेधार्थं वार्त्तिककृता युवादेर्नेति सूत्रमारब्धं तत्र च युवादेराकृतिगणत्वस्य सर्वनिबन्धसम्मतत्वेन ऽग्रगामिन् शब्दस्य तद्गणान्तःपातित्वेन न णत्वकार्य्यभागिता ।

किन्तु प्राचीनग्रन्थेषु भाष्यानुसारेण संग्रामशब्द इव अग्रगामिन् शब्देऽपि निपातनादेव णत्वाभावः सेत्स्यतीत्याशयेन युवादेराकृतिगणत्वेऽपि तद्गणमध्येऽग्रगामिन्शब्दो न पठितः संक्षिप्तसारकारैस्तु सन्धिपादे णत्वप्रकरणे प्रागुक्तवार्त्तिकसूत्रसमानार्थकस्य न युवादेरिति सूत्रस्य वृत्तौ युवादिगणेऽग्रगामिन्शब्दः पठितः। मयापि युवादेर्नेति सूत्रवृत्तौ अग्रगामिन्शब्दः युवादिगणे स्पष्टार्थमेव सन्निवेशितः।

अपि च क्षुभ्नादिषु च (८, ४, ३९) सूत्रे क्षुभ्नादेराकृतिगणत्वस्य सर्वनिबन्धसम्मतत्वेन अविच्छिन्नलक्षणो णत्वप्रतिषेधः क्षुभ्नादिषु द्रष्टव्य इति भाष्यकारोक्त्या च णत्वनिषेधकसूत्राभावे सर्वेषामेव सर्वसम्मतागत्ववतां क्षुभ्नादिषु पाठस्य कल्प्यत्वलाभात् तद्गणीयतयापि णत्वाभावः सेत्स्यति।

अत्र च नानास्थानीयेषु विभिन्नपुस्तकेषु प्रक्रियाकौमुदी सिद्धान्तकौमुदीप्रभृतिग्रन्थेषु अष्टाध्यायीपुस्तकेषु च अणत्वनिर्देशोपलम्भेः संक्षिप्तसारेऽग्रगामिन् शब्दस्य युवादिषु स्पष्टं पाठाच्च णत्वशङ्का कथञ्चिदपि नोदेति इत्येवं अग्रगामिन् शब्दे णत्वाभावे स्थिरीकृते मोक्षमूलरसमुद्भाविता शङ्का निरालम्बैव प्रतिभाति।

इदन्तु वक्तुमशक्यं यद् बाणबोधं सर्वथा परिशुद्धमनवद्यञ्च समपद्यत किन्तु, यावता परिश्रमेण शुद्धिमनवद्यताञ्चाभिपद्येत तावान् परिश्रमः स्वीकृतः यदि प्रमादात् मम अत्र स्खलितं सुधीभिर्लक्ष्येत तत्कृपया परिशोधनीयमित्यलं पल्लवितेन शिवमस्तु।

कलिकाता
संस्कृतपाठशाला
१९२४ संवत्सरे

श्रीतारानाथ शर्म्मणः।

---

# आशुबोधस्य सूचीपत्रम्

इद्यादिकार्य्यान्तरोपयोगी वर्णः इत्संज्ञः स्यात्। यथा णप्प्रत्ययादौ णकारादिः इद्याद्यर्थः।

१॰ १॰

लोपोऽनुच्चारणम् ॥ २ ॥

प्रयोगकाले अनुच्चारणं लोपसंज्ञं स्यात्।

१॰ १ः ६ः॰१॰ १॰

लोपो लुब्लुकौ तयोश्च कार्य्यान्तरं प्रयो-

१॰

जनम् ॥ ३ ॥

लोपः एव लुप्संज्ञः लुक्संज्ञश्च स्यात्। लुपि लुकि च सन्ध्यभावादिरूपं प्रयोजनम्। यथा हर एहि इत्यत्र यलुपि न सन्धिः। हे वारि इत्यत्र सम्बुद्धिलुकि न गुणः।

६॰ १॰ ७॰

इतो लोपः प्रयोगे ॥ ४ ॥

इतसंज्ञकस्य प्रयोगे लोपः स्यात्। प्रयोगे इत्युक्तेः निमित्तविधानादौ निर्देशे न लोपः तेन इकः यणचि इत्यादौ इक् यण् अच् इत्येषु ककाराद्युच्चारणम्।

३॰ ३॰ १॰ १॰ ६॰

अन्त्येनेता सहित आद्यवर्णः स्वस्य तन्म-

ध्यगानाञ्च संज्ञा ॥ ५ ॥

इत्संज्ञकेन अन्त्यवर्णेन सहितः आद्यवर्णः स्वस्य तन्मध्यगानां च संज्ञा भवेत्। यथा अणिति* णकारसहितः अवर्णः स्वस्य अवर्णस्य इवर्णस्य उवर्णस्य च संज्ञा। एवम् अन्यत्र अपि। ततश्च अण्* अक् अच् अट् अण् अम् अश् अल्। ८। इक्

इच् इण्। २। उक्। १। ऋक्। १। एङ् एच्। २। ऐच्।१। हश् हल्। २। यण् यम् यञ् यय् यर्। ५। वश्, वल्। २। मय्। १। ङम्। १। झष् झय् झर् झल्। ४। भष्। १। जश्। १। बश्। १। खय्। खर्। २। छव्। १। चय् चर्।२। शर्, शल्। २। पाणिनीयवार्त्तिकादौ एताः ४१ प्रत्याहार-संज्ञाः व्यवहृताः। एतासां मध्ये प्रायशः सर्वाः एव अत्र अपि उपयोगिन्यः भविष्यन्ति। प्रत्याहारेषु इत्संज्ञकानां न ग्रहणम्।

७· १· १· १·

## आद्योच्चारणे ऽन्त्यो हल् इत्संज्ञः॥ ६॥

आद्योच्चारणकाले अन्ते उच्चारितः हल्वर्णः इत्संज्ञः स्यात्। यथा माहेश्वरसूत्रेषु णादयः।

१· ·१·

## अनुनासिकोऽच्॥ ७॥

आद्योच्चारणे अनुनासिकः अच् इत्संज्ञः स्यात्। यथा स्तोः श्चुना श्चुँ इत्यत्र चोः उकारः।

६:· १·

## अचां स्वरसंज्ञा॥ ८॥

अच्संज्ञकवर्णानां स्वरसंज्ञा स्यात्।

६:· १· १·

## स्वराणामुच्चारणकालभेदो मात्रा॥ ९॥

स्वरवर्णानाम् उच्चारणकालविशेषस्य मात्रासंज्ञा स्यात्।

६· १·

## एकमात्रस्य ह्रस्वः॥ १०॥

एकमात्राकाले उच्चार्य्यमाणस्य स्वरवर्णस्य ह्रस्वसंज्ञा स्यात्।

६॰ १॰
द्विमात्रस्य दीर्घः ॥ ११ ॥

द्वयोः मात्रयोः काले उच्चार्य्यमाणस्य स्वरवर्णस्य दीर्घसंज्ञा स्यात्।

६॰ १ः
लृभिन्नाको ह्रस्वदीर्घौ ॥ १२ ॥

लृकारभिन्नानाम् अक्संज्ञकस्वराणां ह्रस्वदीर्घौ संज्ञा भवतः।

यथा अ इ उ ऋ लृ एते ह्रस्वाः। आ ई ऊ ॠ इत्येते दीर्घाः। एवम् अनुनासिकाः अपि।

६॰ १॰
एचो दीर्घः ॥ १३ ॥

एच्संज्ञकवर्णानां दीर्घसंज्ञा स्यात्।

१ः॰ १ः॰ १ः॰
ह र भिन्ना अमोऽनुनासिकाः ॥ १४ ॥

ह, र, इत्याभ्यां भिन्नाः अम्संज्ञकाः वर्णाः अनुनासिकाः स्युः। यथा अँ इँ उँ। यँ वँ लँ इत्यादि।

३ः १॰
मुखनासिकाभ्यामुच्चार्य्यमाणः अनुना-
१॰
सिकः ॥ १५ ॥

मुखस्थकण्ठादिस्थाननासिकाभ्याम् उच्चार्य्यमाणः वर्णः अनुनासिकसंज्ञः स्यात्।

१ः॰ १ः॰ ॰१॰
अणोऽनुनासिकाश्च ॥ १६ ॥

अण्संज्ञकाः वर्णाः अनुनासिकाः अपि स्युः।

च

१:   १   १

वर्ण एकस्थानोच्चार्य्याः मिथः सवर्णाः ॥ १७ ॥

सवर्गादि: एक स्थाने उच्चार्य्यमाणाः वर्णाः परस्परं सवर्णसंज्ञाः स्युः यथा अ आ, अ आँ इत्येते कालकृतमात्राभेदे अपि वर्णाः कण्ठस्थाने उच्चार्य्यमाणाः सवर्णाः। एवं क ख ग घ ङ्यः अपि।

तत्र वर्णानां स्थानानि। अवर्ण हकार क ख ग घ ङ विसर्गाणां कण्ठः। इवर्ण च छ ज झ ञ य शानां तालु। ऋवर्ण ट ठ ड ढ ण र षाणां मूर्द्धा। लृकार त थ द ध न ल सानां दन्तमूलम्। उवर्ण प फ ब भ मानाम् ओष्ठौ। ञ म ङ ण नानां नासिका च। एकारैकारयोः कण्ठतालू। ओकारौकारयोः कण्ठोष्ठम्। वकारस्य दन्तौष्ठम्। अनुस्वारस्य नासिका। एषु समस्थानजाः सवर्णाः।

६:   १:   ६:   १:   १:

अचाम् अचो हलां हलः सवर्णाः ॥ १८ ॥

उक्तस्थानमध्ये एकत्र स्थाने उच्चार्य्यमाणानाम् अपि अचाम् अचः एव सवर्णाः न हलः। एवं हलां हलः एव सवर्णाः न अचः। तेन अकारहकारौ, इकारशकारौ च एकस्थानजौ अपि न मिथः सवर्णौ।

१:   १:

यणोऽन्तःस्थाः ॥ १९ ॥

यण्संज्ञकाः वर्णाः अन्तःस्थसंज्ञाः स्युः।

१:   १:

शल ऊष्माणः ॥ २० ॥

शल्संज्ञका: शषसहा: वर्णा: ऊष्मसंज्ञा: स्यु:।

१· ६:· ·१· १:·
**अन्त:स्था ऊष्मणां न सवर्णा: ॥ २१ ॥**विसंज्ञा

अन्त:स्था: वर्णा: ऊष्मणां तुल्यस्थाना: अपि न सवर्णा:।
तथाच यशयो: रषयोश्च एकस्थानजयो: अपि न सा॰,

१· ·१· १·
**अनादिश्योऽण् सवर्णग्राहक:— ॥ २२ ॥**संज्ञा

अनादिश्यमाना: अण्संज्ञका: वर्णा: सवर्णग्राहका:। तेन अ आ अँ आँ इत्यादिवर्णचतुष्कस्य, अ इति, ए एँ इत्यादिवर्णद्वयस्य, ए इति, य यँ इत्यादिवर्णद्वयस्य च, य इत्यादिर्ग्राहक:। एवञ्च अणादिसूत्रे अ, इत्यादिपदेन ह्रस्वदीर्घानुनासिकाननुनासिकानां सर्वेषां ग्रहणम्। अनादेश्य: इति किं त्यदादीनाम इत्यादौ अ, इति सवर्णग्राहक: यथा न स्यात्।

·१· ·१· १· ·१·
**उदित् चय् आदिश्यमानोऽपि ॥ २३ ॥**

उकारेतश्चटतकपा: वर्णा: आदिश्यमाना: अपि सवर्णग्राहका: स्यु:। तेन चु, इत्यादि, च छ ज झ ञ इत्यादे: ग्राहकम्। आदिश्यमान: अपि इत्युक्ते: स्तो: श्चुना श्चु इत्यादौ आदेशे अपि सवर्णग्रहणम्।

१:· १:·
**वर्णान्ता अक: ॥ २४ ॥**

वर्णान्ता: अक्संज्ञकवर्णा: सवर्णग्राहका:। यथा अवर्ण इत्यादि अ आ, अँ आँ इत्यादीनां ग्राहक:।

१:· १:· ·१·

**चयो वर्गशब्दान्तास्च ॥ २५ ॥**

वर्गशब्दान्ता: चय्संज्ञकवर्णा: सवर्णग्राहका:। यथा चवर्गादि: चछजझञादीनां ग्राहक:।

५:· १: १: १··१·

**वर्णेभ्य: कारतकारशब्दौ इतौ तदन्तस्च**

६· १·

**तुल्यकालस्य ग्राहक: ॥ २६ ॥**

वर्णेभ्य: परं समुचार्य्यमाणौ कारतकारशब्दौ इतौ भवत: तदन्तस्च तुल्यकालस्य ग्राहकौ न सवर्णानाम्। यथा अकार: अत् इत्यादि अ, अँ इति तुल्यमात्रस्य एव ग्राहक: न तु आ, आँ इत्येतयो: अतुल्यमात्रयो: अपि।

·१· १· १· ·१·६·

**आदारैज् वृद्धि: सा चाच: ॥ २७ ॥**

आत्, आर्, ऐच्, एते वृद्धिसंज्ञा: स्यु:। सा च अच: स्थाने स्यात्। तथाच वृद्धिविधाने यत्र स्थानिपदं न श्रूयते तत्र, अच: इति षष्ठ्यन्तपदम् अस्मात् सूत्रात् अनुषञ्जनीयम्। अचां मध्ये च अवर्णस्य स्थाने आत्, इवर्णस्य, एदैतोस्च स्थाने ऐ, उवर्णस्य, ओदैतोस्च स्थाने औ, ऋवर्णस्य स्थाने च आर्, इत्येते भवन्ति। प्रसिद्धप्रयोगे आल् इत्यस्य उदाहरणाभावात् आल: न वृद्धिसंज्ञा कृता।

·१· १· १· ·१·६·

**अदरलेङ् गुण: स चेक: ॥ २८ ॥**

अत्, अर्, अल्, एङ्, एते गुणसंज्ञा: स्यु:। स: च इक: स्थाने स्यात्। तथाच गुणविधाने यत्र स्थानिपदं न श्रूयते

तत्र इकः इति षष्ठ्यन्तपदम् अस्मात् सूत्रात् अनुषज्जनीयम् तत्र समस्थानत्वात् इवर्णस्थाने ए, उवर्णस्थाने ओ, ऋवर्णस्थाने अर्, लृकारस्थाने अल्। अकारस्तु इकः असमस्थानतया न कस्य अपि आदेशः तथापि अतः गुणे इति पररूपोपयोगार्थम् एव तस्य गुणसंज्ञा कृता।

·१· १· १· १· ·१· ·१·

**अर्थवद्धातुरप्रत्ययः प्रातिपदिकं नाम च ॥ २९ ॥**

धातुप्रत्ययाभ्यां भिन्नः सार्थकः शब्दः प्रातिपदिकसंज्ञः नामसंज्ञश्च स्यात्।

१:· १:· १:· १:·

**गणपठिताः क्रियावाचिनो भ्वादयो धातवः ॥ ३० ॥**

भू सत्तायाम् इत्यादिपाणिनीयगणेषु सत्तादिरूपक्रियावाचितया पठिताः भूप्रभृतयः धातुसंज्ञाः स्युः। हिरुगाद्यव्ययाः गणपठिताः अपि न क्रियावाचिनः इति न ते धातवः समाम्नाताः तु लाक्षणिकधातवः।

७· १:· १:· १· ·१·

**क्रियायोगे प्रादय उपसर्गा गतिश्च ॥ ३१ ॥**

क्रियया सह सम्बन्धे प्रादयः उपसर्गसंज्ञाः गतिसंज्ञाश्च स्युः। प्र, परा, अप, सम्, अनु, अव, निस्, निर्, दुस्, दुर्, वि, आङ्, नि, अधि, अपि, अति, सु, उत्, अभि, प्रति, परि, उप। एते प्रादयः।

१:· १:· १·

**अद्रव्यवाचिनश्चादयो निपाताः ॥ ३२ ॥**

अद्रव्यार्थाः चादयः निपातसंज्ञाः स्युः । च, वा, ह, अह, एव, एवम्, नूनम्, शश्वत्, युगपत्, भूयस्, चेत्, कच्चित्, हन्त, माङ्, नञ्, यावत्, तावत्, वषट्, वौषट्, स्वाहा, स्वधा, तथाहि, खलु, अथ, सुष्ठु, स्म ( उपसर्गप्रतिरूपाः प्रादयः ) अहम्, अस्ति, अ, उ, यथा, हे, है, अङ्ग, अये, विषु, यत्, तत्, आहोस्वित्, व, वट्, चाटु, हुम्, इव, आतु, अद इत्यादयः चादयः । एतेषाम् अर्थभेदास्तु मत्कृतायां सरलाख्यायां सिद्धान्तकौमुदीव्याख्यायां पूर्वार्द्धे २०१ पृष्ठे द्रष्टव्याः । निपातोपसर्गयोः नामत्वम् अपि इच्छन्ति केचित् । तेन ततः सुबादयः स्युः तेषां च लुक् इति भेदः ।

१· १·

**नामधातूपसर्गनिपाताः प्रकृतिः ॥ ३३ ॥**

नामादयः प्रकृतिसंज्ञाः स्युः ।

५· १· १· १· १·

**प्रकृतेः परं विधीयमानः सार्थकः शब्दः**

१· १· ·१· १·

**प्रत्ययो निरर्थकस्तु विकरणः ॥ ३४ ॥**

उक्तप्रकृतिभ्यः उत्तरं विधीयमानः सार्थकः सुबादिः शब्दः प्रत्ययसंज्ञः स्यात् । निरर्थकः तु तथाभूतः शबादिविकरणसंज्ञः स्यात् । बहुच्प्रत्ययः तु प्रकृतेः परम् एव विधीयते । तस्य प्रयोगकाले तु प्राङ्निपातः । तत्र नामप्रकृतिकाः सुप्तद्धितादयः । धातुप्रकृतिकाः तिङ्कृदादयः । उभयप्रकृतिकाः क्यजादयः । तद्धिताः पुनः निपातोपसर्गप्रकृतिकाः अपि । तेन नतरां सुतराम् इत्यादि ।

१· १· १·

**संख्यावाचकः प्रत्ययो विभक्तिः ॥ ३५ ॥**

एकत्वादिसंख्यावाचकाः सुपः तिङश्च प्रत्ययाः विभक्तिसंज्ञाः स्युः ।

६· १:·
विभक्तेरेकैकसार्थकभागा एकवचनद्विवचन-
१:·
बहुवचनसंज्ञाः ॥ ३६ ॥

सुपः तिङश्च एकैकसार्थकभागाः क्रमेण एकवचनादिसंज्ञाः स्युः । यथा सुपः सुँ इत्येकवचनम् । औ इति द्विवचनम् । जस् इति बहुवचनम् । एवं तिङः तिप् इत्येकवचनम् । तस् इति द्विवचनम् । अन्ति इति बहुवचनम् इत्यादिक्रमेण ज्ञेयम् ।

१· १·
विभक्त्यन्तं पदम् ॥ ३७ ॥

सुबन्तं तिङन्तं च पदसंज्ञं स्यात् ।

६· १· १·
पदस्यावसानं पदान्तः ॥ ३८ ॥

उक्तरूपपदस्य चरमावयवः पदान्तसंज्ञः स्यात् । समासादौ लुप्तविभक्तिम् आश्रित्य पदान्तत्वस्वीकारः । तेन वागीशः इत्यादौ समस्ते अपि वाक् इति भागस्य पदान्ततया जस् ।

३· १:· १:· १·
अचानन्तरिता हलः संयोगः ॥ ३९ ॥

अचा व्यवधानरहिताः हल्वर्णाः संयोगसंज्ञाः स्युः ।

१: १:
ह्रस्वदीर्घौ लघुगुरू ॥ ४० ॥

ह्रस्वं लघुसंज्ञं दीर्घं च गुरुसंज्ञं स्यात् ।

·१· ७· ·१·

**लघु संयोगे गुरु ॥ ४१ ॥**

संयोगे परे लघु, गुरुसंज्ञं स्यात् ।

१· १· १·

**परः सन्निकर्षः संहिता ॥ ४२ ॥**

वर्णानाम् अव्यवधानेन सन्निधिः संहितासंज्ञः स्यात् । संहिता च भाष्ये नियमिता । यथा ।

संहितैकपदे नित्या नित्या धातूपसर्गयोः ।

नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥ इति ।

समासे तु अवान्तरविभक्तिमन्ति बहुपदानि सन्ति, तेन पृथग्निर्देशः ।

७· १· १·

**संहितायां कार्य्यविशेषः सन्धिः ॥ ४३ ॥**

पूर्वत्र परत्र च स्थितयोः वर्णयोः सन्निकर्षविशेषे उत्पद्यमानः कार्य्यविशेषः सन्धिसंज्ञः स्यात् ।

इति प्रसङ्गागतकार्य्यसहितसंज्ञाप्रकरणम् ।

---

## अथ परिभाषाप्रकरणम् ।

२· ·१· १· ६·

**शास्त्रीयसंज्ञां विना शब्दः स्वरूपस्य**

१·

**ग्राहकः— ॥ ४४ ॥**

शब्दशास्त्रे व्याकरणे या संज्ञा कृता तत्संज्ञाशब्दम् अपहाय सर्वत्र शब्दः स्वरूपस्य एव ग्राहकः स्यात् ।

यथा राजाहःसखिभ्यष्टः इत्यादौ राजा इत्यादिः शब्दः स्वरूपस्य ग्राहकः न तु तदर्थकभूपत्यादिशब्दानाम् अपि । व्याकरणकृतसंज्ञः तु कर्मादिशब्दः न स्वरूपमात्रस्य ग्राहकः किन्तु तदर्थबोधकशब्दान्तरस्य अपि, तेन कर्मण्यण् इत्यादौ कर्मशब्देन पारिभाषिकस्य अपि कर्मणः ग्रहणात् कर्मकारः इव कुम्भकारः इत्यादि सिध्यति ।

·१· ६· ·१·

**क्वचित् तदन्तस्यापि ॥ ४५ ॥**

क्वचित् ( समासविधानात् अन्यत्र ) सूत्रे श्रूयमाणः शब्दः स्वरूपस्य स्वान्तस्य च ग्राहकः । यथा एरच् इत्यत्र इवर्णस्य इवर्णान्तस्य च ग्रहणात् इणः, चिजिप्रभृतेश्च अच् तेन प्रत्ययः इव चयः, जयः इत्यादि अपि सिध्यति ।

३· ७· ६· ·१· १·

**सप्तम्या वर्णग्रहणे तदादेश्च ग्रहणम् ॥४६॥**

यत्र वर्णविशेषात् परं सप्तमीनिर्देशेन कार्य्यम् उपदिश्यते तत्र तद्वर्णस्य तदादिकस्य च ग्रहणम् । यथा अचि श्नुधातु-भ्रुवाम् इत्यादौ सप्तम्यन्तेन अच्शब्देन अचः, अजादेश्च ग्रहणात् भ्रुवौ इत्यत्र केवले अचि इव, भ्रुवः इत्यत्र अजादौ अपि उवङ् ।

३· ७· ·१· १·

**सन्धिसूत्रेण लुपि न सन्धिः * ॥ ४७ ॥**

सन्धिसूत्रेण लुपा लोपे आद्यन्तयोः सन्धिः न स्यात् । यथा हर एहि, हर एति इत्यादौ यविसर्गयोः लुपा लोपात्

* लुपा लोपे तस्मिन् परे कार्य्यं न भवति ।

न पूर्वपरयोः सन्धिः। सन्धिसूत्रेण इति किं राज-उचितः राजोचितः इत्यादौ अन्यसूत्रेण नलोपात् सन्धिः यथा स्यात् ।

१· १· १·
**अनिश्चितार्था षष्ठी स्थानसम्बन्धार्था ॥४८॥**

अवयवादिरूपविशेषार्थानवगमे षष्ठी स्थानसम्बन्धार्थिका स्यात्। स्थानं च प्रसक्तिः। प्रसक्तस्य अन्यथाभावः स्थानसम्बन्धः। यथा आद्यन्तः इत्यत्र आदि इति इकारस्य उच्चारणासक्तौ तस्य उच्चारणम् अन्यथा कृत्वा इकः यणचि इति यणविधानात् यण् उच्चारयितव्यः। अनिश्चितेति किं शासः उपधायाः इदित्यादौ शासः इति षष्ठी अवयवसम्बन्धार्थतया निर्णीता इति तत्र मा भूत् इत्येतदर्थम्। तथाच तत्र उपधायाः एव स्थानित्वं न शासः।

३· १· ·१·
**स्थानषष्ठ्या निर्दिष्टं स्थानि ॥ ४९ ॥**

स्थानसम्बन्धार्थकषष्ठ्या निर्दिष्टं स्थानिसंज्ञं स्यात्।

६: ६· ·१· १· ६· ·१·
**पूर्वपरयोरेकादेशस्य सह संज्ञा तस्य च**
१: १:
**स्थानिनौ पूर्वपरौ ॥ ५० ॥**

पूर्वपरयोः एकादेशस्य सह इति संज्ञा। तदादेशे च स्थानिनिमित्तोभयम् एव स्थानि स्यात्। एकादेशस्य क्वचित् पूर्वरूपः क्वचित् च पररूपः। यथा अमि पूर्वरूपः इत्यादिना देवम् नदीम् इत्यादि, एङः पररूपः इत्यादिना च प्रेजते इत्यादि सिध्यति।

६· १·
**स्थानिनोऽन्यथाभाव आदेः**

स्थानिनः अन्यथाभावः आदेशसंज्ञः स्यात्। अन्यथाभावश्च सर्वरूपपरिवृत्त्या एकदेशपरिवृत्त्या वा यथापूर्वम् अनुच्चारणम्। तत्र ईकः यणचि इत्यादौ सर्वरूपपरिवृत्तिः। त्यदादीनाम् अ इत्यादौ च एकदेशपरिवृत्तिः। लोपः अपि यथापूर्वम् अनुच्चारणात् आदेशः एव। तत्र हर एति इत्यादौ विसर्गस्य सर्वथा अनुच्चारणम् हर एहि इत्यादौ च एकदेशस्य यकारस्य अनुच्चारणम्।

७· ·१· १·
वर्णाश्रितभिन्नविधौ स्थानिवदादेशः ॥५२॥

स्थानिनः वर्णाश्रितविधिम् अपहाय आदेशः स्थानिवत् भवति। वर्णेत्यादि किम्, स्थानिनः क्त्वाप्रत्ययस्य वलादितया तदादेशस्य ल्यपः स्थाने आर्द्धधातुकस्येड्वलादेः इति इट्प्रसङ्गः यथा न स्यात्।

६· १· १·
स्थानिनः सदृश आदेशः ॥ ५३ ॥

आदिश्यमानस्य अनेकत्वे स्थानिनः सदृशः आदेशः स्यात्। सादृश्यञ्च समस्थानजाततया ग्राह्यम्। तेन झलां जश् इत्यादिना झलां स्थाने जश्प्राप्तौ चकारस्थाने जकारः, टकारस्थाने च डकारः इत्यादिक्रमेण आदेशः न तु भिन्नस्य अनजः अपि।

७· ५· १·
स्थानिसाम्यासम्भवे निमित्तसाम्यादादेशः ॥ ५४ ॥

यत्र स्थानिसाम्यं गृहीत्वा कार्य्यविशेषः सम्पादयितुं न

शक्यते तत्र निमित्तसाम्यात् अपि कार्य्यविशेषः स्यात्। यथा अनुस्वारस्य ययि यम् इत्यत्र पररूपनिमित्तसामान्यात् यकारे परे यँकारः ककारादिषु परेषु तु ङादिः इत्यादिक्रमेण जायते। तेन यय्यँस्यते शङ्कते इत्यादि।

१: ६· ७·

## ह्रस्वदीर्घावचः स्थाने ॥ ५५ ॥

अचः स्थाने एव ह्रस्वदीर्घौ विधीयेते। तेन यत्र अन्य-स्थानिपदं न श्रूयते तत्र अचः इति षष्ठ्यन्तं पदम् एतत्-सूत्रात् अनुषञ्जनीयम्।

१: १: ६·

## यस्यादेशौ—टित्कितौ तस्याद्यन्ताव-

१:

## यवौ ॥ ५६ ॥

यस्य आदेशः टकारेत् सः तस्य आद्यावयवः, यस्य च ककारेत् तस्य अन्त्यावयवः स्यात्। यथा भविता इत्यादौ आर्द्ध-धातुकस्येड्वलादेः इत्यनेन जायमानः वलादेः तकारस्य आदेशः इट्, टित्, तेन तकारपूर्वावयवः। पुण्यकृत् इत्यादौ च ह्रस्वस्य तुक् इत्यादिना जायमानः ह्रस्वस्य आदेशः तुक्, कित्, तेन ह्रस्वस्य ऋतः अन्त्यावयवः।

·१· ६:· ६· ५· ५· १·

## मिदचां मध्येऽन्त्यादचः परः ॥ ५७ ॥

यस्य स्थानिनः आदेशः मकारेत् तस्य स्थानिनः अचां मध्ये यः अन्त्यः अच् तस्मात् परः स्यात्। यथा क्रष्टा इत्यादौ ऋदुपधस्य अनिटः अम् इत्यादिना विहितः अम्, मित् तेन अन्त्यात् अचः परः एव जायते।

१· १·
स्थानिषष्ठी चरमवर्णविकारार्था ॥ ५८ ॥

उक्तार्गतः स्थानिषष्ठ्या निर्देशे स्थानिनः चरमवर्णस्य एव विकारः स्यात्। यथा त्यदादीनामः इत्यादौ अन्त्यवर्णस्य एव विकारकारकः अकारादेशः।

·१· १· १· ·१· ६· ·१·
ङिदादेशोऽनेकवर्णवानपि चरमवर्णस्यैव ॥ ५९ ॥

स्थानिनः आदेशः यदि ङकारेत् तदा सः अनेकवर्णवान् अपि स्थानिनः चरमवर्णस्य विकाराय स्यात् न तु सर्वावयवस्य। यथा गोरवङ् इत्यादौ ङकारेत् अवङ् अनेकवर्णवान् अपि ओकाररूपान्त्यस्य एव विकारकारी न तु सर्वस्य।

१· ·१· ·१· १· ६·
अनेकवर्णवान् शिच्चादेशः सर्वावयवस्य ॥ ६० ॥

अनेकवर्णवान्, शकारेत् च आदेशः स्थानिनः सर्वावयवविकारकारी स्यात्। यथा टास्थाने ना, ङेस्थाने च स्मै, इत्यादिः अनेकवर्णवान्, जस्शसोः शिः इत्यादौ शकारेत् च शिः, आदेशः सर्वावयवविकारकारी। अत्र इत्संज्ञकवर्णं विहाय अनेकवर्णता बोध्या।

१· १·
सप्तमी वाच्यगम्योपपदपरत्वार्था ॥ ६१ ॥

सूत्रेषु निर्दिश्यमाना सप्तमी प्रकरणवशात् अभिधेयं, गम्यत्वम् उपपदं परत्वं च प्रकाशयति। यथा कर्मणि द्वितीया

इत्यादौ कर्मरूपम् अभिधेयम्, लिङ्निमित्ते लृङ् क्रियाऽनिष्पत्तौ इत्यादौ क्रियाऽनिष्पत्तिरूपं द्योत्यम्, (कर्मण्यण् इत्यादौ उपपदरूपम्, इको यणचि इत्यादौ परत्वरूपं च अर्थं सप्तमी प्रकाशयति।

१· १· ६··१· ४·

**परार्था सप्तमी अव्यवहितपूर्वस्यैव कार्य्याय ॥ ६२ ॥**

परत्वप्रकाशकसप्तमी वर्णान्तराव्यवहितपूर्वस्य एव तत्तत्कार्य्याय स्यात्। यथा अचि श्नुधातुभ्रुवाम् इति सूत्रे अचि परे भ्रू शब्दस्य एव उवङ् न तु भ्रूमूलशब्दस्य अपि तस्य मूलशब्देन व्यवधानात्।

६· ४· १·

**अव्यवहितपरस्य कार्य्याय पञ्चमी ॥ ६३ ॥**

सूत्रे निर्दिश्यमाना पञ्चमी वर्णान्तराव्यवहितपरस्य एव कार्य्याय स्यात्। यथा प्रस्योढोढ़ि इत्यादिसूत्रे प्रशब्दस्य अवर्णात् परस्य ऊढ़िशब्दस्य ऊकारस्य अव्यवहितस्य एव वृद्धिः न तु ढि-इत्यस्य व्यवहितस्य अपि।

५· १· ६· १· ६·६·

**पञ्चम्याः परं यस्य विहितं तस्यादेः ॥ ६४ ॥**

पञ्चम्यन्तात् परं यस्य कार्य्यं विहितं तस्य आदेः एव स्यात् न तु अन्त्यस्य। यथा पूर्वोक्तोदाहरणे ऊढ़िशब्दस्य आदेः एव वृद्धिः न अन्त्यस्य।

१· १· ६··

**यथासङ्ख्यमादेशः समानाम् ॥ ६५ ॥**

समेषु उद्देश्येषु समानां विधानं यथासंख्यं स्यात्। परिभाषा च नियमविशेषरूपा।

दीपो यथा प्रभाद्वारा सर्वगेहप्रकाशकः।
परिभाषा तथा बुद्ध्या सर्वशास्त्रोपकारिका॥

इति परिभाषाप्रकरणम्।

## अच्सन्धिः।

६· १· ७·
**इको यणचि— ॥ ६६ ॥**

इकः स्थाने यण् स्यात् अचि परे।

तत्र इस्थाने य, उस्थाने व, ऋस्थाने र इति। यथा आदि-अन्त आद्यन्तः। नदी-अम्बु नद्यम्बु। साधु-अन्नम् साध्वन्नम्। वधू-अन्तःपुरम् वध्वन्तःपुरम्। मातृ-अर्चनम् मात्रर्चनम्। एवं मुनि-आदि मुन्यादि। नदी-आदि नद्यादि। वाणी-उक्तिः वाण्युक्तिः। नदी-ऋद्धिः नद्यृद्धिः। नदी-एजते नद्येजते। वारि-ऐक्यम् वार्य्यैक्यम्। दधि-ओदनः दध्योदनः इत्यादि। सवर्णे अकि परे तु दीर्घरूपैकादेशः विशेषः अग्रे वक्ष्यते।

६· १ः ७· ·१· ६ः ·१· ·१·
**एचोऽयवायावः पदान्ते तु तेषां वा लुप् ॥ ६७ ॥**

एचः स्थाने क्रमेण अय्, अव्, आय्, आव्, एते आदेशाः स्युः अचि परे। पदान्ते तु तेषाम् अन्त्यस्य लुप् वा स्यात्। यथा मुने-ए मुनये। साधो-ए साधवे। नै-अकः नायकः।

गो-अक: पावक:। पदान्ते तु अग्रे-आगत: अग्रआगत: अग्रयागत:। साधो एहि साधएहि साधवेहि। सन्धिसूत्रेण लुपा लोपात् पुन: न सन्धि:। समासादौ तु न, गवीश्वर: इत्येव। अत्र अन्त्यलोपविधानात् अन्त्यौ यवौ न इत्संज्ञौ।

६· ·१· ७· ·१·

गोरवङ् समासे वा ॥ ६८ ॥

अचि परे समासे गोशब्दस्य अवङ् आदेश: स्यात्। ङ इत्। तेन अन्तादेश: न तु सर्वादेश:। गो-ईश्वर: अवङि वक्ष्यमाणेन गुणे गवेश्वर: गवीश्वर:।

६: १·

इन्द्राक्षयोर्नित्यम् ॥ ६९ ॥

इन्द्राक्षयो: अचि परे पूर्वोक्तं नित्यं स्यात्। गो-इन्द्र: गवेन्द्र:। गो-अक्ष: गवाक्ष:।

६· ६· ७· १· ·१·

गोरोतोऽति सन्धिर्वा ॥ ७० ॥

समासे गोशब्दस्य ओकारस्य अकारे परे सन्धि: वा स्यात्। गो-अर्चनम् गोअर्चनम् गवार्चनम्। पक्षे वक्ष्यमाणपूर्वरूपैकादेशात् गोऽर्चनम् अपि।

६: ६: ७· ७·

ओदौतोरवावौ यि प्रत्यये ॥ ७१ ॥

यकारादौ प्रत्यये परे ओकारौकारयो: स्थाने क्रमेण अव् आव् एतौ स्त:। गो-यम् गव्यम्। नौ-यम् नाव्यम्। प्रत्यये किं गोयानम् इत्यादौ न।

६· ६: ·१·

धातोस्तन्निमित्तयोरेव ॥ ७२ ॥

यकारादिप्रत्ययनिमित्तयोः एव धातोः ओकारौकारयोः स्थाने अवावौ स्तः, न तु अन्यनिमित्तयोः। ओ-यम् भव्यम्। औ-यम् भाव्यम्। तन्निमित्तयोः किम् अन्यनिमित्तयोः मा भूत् तेन औयते औयत इत्यादौ न। आङ्पूर्वस्य वेञः संप्रसारणे कृते कर्मणि वाच्ये लटि लङि च रूपम्। अत्र ओकारादिः एकादेशनिमित्तः न तु यादिनिमित्तः।

५· ६· ·१· १·

## आद्‌—इकः सह—गुणः ॥ ७३ ॥

अवर्णात् परस्य इकः गुणरूपः सह (पूर्वपरयोः एकादेशः) स्यात्। जन—इन जनेन। परा-इतः परेतः। नर-ईश्वरः नरेश्वरः। रमा-ईश्वरः रमेश्वरः। लोक-उक्तिः लोकोक्तिः। नाना-उक्तिः नानोक्तिः। धन-ऊनः धनोनः। देव-ऋषिः देवर्षिः। राजा-ऋषिः राजर्षिः।

१· ६·

## वृद्धिरेचः ॥ ७४ ॥

अवर्णात् परस्य एचः वृद्धिरूपः सह ( पूर्वपरयोः एकादेशः ) स्यात्। धन-एषणा धनैषणा। नाना-एषणा नानैषणा। जल-ओघः जलौघः। नाना-ओदनः नानौदनः। मत-ऐक्यम् मतैक्यम्। रोग-औषधम् रोगौषधम्। पीड़ा-औषधम् पीड़ौषधम्।

६· १·

## ऋतस्य तृतीयासमासे ॥ ७५ ॥

अवर्णात् परस्य ऋतशब्दस्य आदेः ऋकारस्य सह वृद्धिः स्यात् तृतीयासमासे। शीतेन-ऋतः शीतार्त्तः। अन्यसमासे तु परम ऋतः परमर्त्तः।

६' १'
**ऊठश्च ॥ ७६ ॥**

अवर्णात् परस्य ऊठः सह वृद्धिः स्यात् । भार-ऊढः भारौढः ।

६' ६:
**स्वस्येरेरिणोः ॥ ७७ ॥**

स्वशब्दस्य अवर्णात् परस्य ईर, ईरिण्, इत्येतयोः आदेः ईकारस्य सह वृद्धिः स्यात् । स्व-ईरम् स्वैरम् । स्व-ईरिन् स्वैरी । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्य अपि ग्रहणम् इति सिद्धान्तात् स्त्रियाम् अपि स्वैरिणी । एवं सर्वत्र ।

**प्रस्योहोढोढ्येषैष्याणाम् ॥ ७८ ॥**

प्रशब्दस्य अवर्णात् परेषाम् ऊह, ऊढ, ऊढि, एष, एष्य, इत्येतेषाम् आदेः अचः सह वृद्धिः स्यात् । प्र-ऊहः प्रौहः । प्र-ऊढः प्रौढः । स्त्रियां प्रौढा । प्र-ऊढिः प्रौढिः । सार्थकग्रहणसम्भवे निरर्थकस्य न ग्रहणम् इति सिद्धान्तात् क्तान्तम् एव सार्थकम् ऊढपदेन गृह्यते न तु निरर्थकः क्तवत्वेकदेशः अपि । तेन तत्र प्रोढवान् इत्येव । प्र-एषः प्रैषः । प्र-एष्यः प्रैष्यः । वक्ष्यमाणपररूपापवादः । प्रेषः प्रेष्यः इत्येते तु ईष गतिहिंसादौ इत्यस्मात् घञि ण्यति च ईषः ईष्यः इति सिद्धयोः शब्दयोः प्रादिसमासे गुणेन सिद्धे ।

६' ६' ६'
**उपसर्गस्य धातोर्ऋतः ॥ ७९ ॥**

उपसर्गस्य अवर्णात् परस्य धातोः ऋकारस्य सह वृद्धिः

स्यात्। अप-ऋच्छति अपार्च्छति। परा-ऋच्छति परार्च्छति। अत्र ऐ:त्यक इति वक्ष्यमाणः पक्षे सन्धिनिषेधः न।

६: ६·

एत्येधत्योरैङ्: ॥ ८० ॥

उपसर्गस्य अवर्णात् परयोः एति, एधति, इत्यनयोः धात्वोः एङः सह वृद्धिः स्यात्। पररूपापवादः। उप-एति उपैति। परा-एति परैति। प्र-एधते प्रैधते। परा-एधते परैधते

६· १·

एङः पररूपः—॥ ८१ ॥

उपसर्गस्य अवर्णात् परस्य धातोः एङः पररूपः पूर्वपरयोः एकादेशः स्यात्। वृद्ध्यपवादः। प्र-एजते प्रेजते। परा-एजते परेजते। प्र-ओषति प्रोषति। परा-ओषति परोषति।

५· ६:

अवर्णादोमादिष्टाङोः ॥ ८२ ॥

सर्वस्मात् अवर्णात् परयोः ओम्, आदिष्टाङ्, इत्यनयोः पररूपः एकादेशः स्यात्। वेद-ओङ्कारः वेदोङ्कारः। विद्या-ओङ्कारः विद्योङ्कारः। आ इतः एतः, अप-एतः अपेतः। आ-उतः ओतः, प्र-ओतः प्रोतः।

६· ७· १·

ओष्ठस्य समासे वा ॥ ८३ ॥

अवर्णात् परस्य ओष्ठशब्दस्य आदेः पररूपः एकादेशः वा स्यात् समासे। पक्षे वृद्धिः। अधर-ओष्ठः अधरोष्ठः अधरौष्ठः। असमासे तु तवौष्ठः इत्येव।

१:· १:·

## मनीषाद्या निपात्याः ॥ ८४ ॥

मनीषाद्याः साधनसूत्राभावे अपि पररूपादिना साध्याः। मनस्-ईषा मनीषा। कुल-अटा कुलटा। सीम-अन्तः सीमन्तः। पतत्-अञ्जलिः पतञ्जलिः। सार-अङ्गः सारङ्गः। इत्याद्याः।

५· ५· ६· १·

## पदान्तस्थाद् एङोऽतः पूर्वरूपः ॥ ८५ ॥

पदान्तस्थात् एङः परस्य अकारस्य पूर्वरूपः सह (पूर्वपरयोः एकादेशः) स्यात्। भूपते-अव भूपतेऽव। साधो-अवेहि साधोऽवेहि।

६· ७· ७· १·

## अकः सवर्णेऽकि दीर्घः ॥ ८६ ॥

सवर्णे अकि परे अकः दीर्घरूपः सह (पूर्वपरयोः एकादेशः) स्यात्। मिष्ट-अन्नम् मिष्टान्नम्। लता-अन्तः लतान्तः। भूमि-इन्द्रः भूमीन्द्रः। धरणी-इन्द्रः धरणीन्द्रः। कवि-ईश्वरः कवीश्वरः। नदी-ईशः नदीशः। साधु-उक्तम् साधूक्तम्। वधू-उपेतः वधूपेतः। मधु-ऊनः मधूनः। पितृ-ऋद्धिः पितृद्धिः।

६:· ६:· ७· ·१· १·

## द्विवचनस्थानामीदूदेतामचि न सन्धिः ॥ ८७ ॥

द्विवचनसंज्ञकविभक्त्यवयवस्थानाम् ईकार, ऊकार, एकार, इत्येषाम् अचि परे सन्धिः न स्यात्। कवी एतौ। साधू इमौ। लते इमे। पचेते एतौ। एधेते इमौ।

६· ६·

## बहुवचनस्यामीत्वस्य ॥ ८८ ॥

बहुवचनस्य अमी इति शब्दस्य अचि परे सन्धिः न

स्यात्। अमी आययुः। बहुवचनस्यस्य किम्, अमः रोगः तद्वान् अमो तस्य सन्धिः भवति एव। अमी-अयम् अम्ययम्।

६· ६· ·१· ६·
एकमात्रस्वरस्य ओदन्तस्य च निपातस्य ॥ ८९ ॥

एकस्वरवर्णात्मकस्य उप्रभृतेः ओकारान्तस्य च निपातस्य अचि परे सन्धिः न स्यात्। उ उमापते, उ अवनीपते। अहो ईश्वरः। अत्र अचि इति अनुवृत्तेः पूर्वस्वरेण स्यात् एव। भूप-उ भूपो। देव-अहो देवाहो।

७· ६· ·१·
ऋत्यको वा ॥ ९० ॥

अक्संज्ञकवर्णानाम् ऋकारे परे सन्धिः वा स्यात्। सप्त-ऋषीणाम् सप्तर्षीणाम्।

इति अच्सन्धिप्रकरणम्।

---

## हल्सन्धिः।

६· ३· ·१· ·१· ५·
स्तोः श्चना श्चुँ न शात् ॥ ९१ ॥

शकारचवर्गाभ्यां योगे (पूर्वत्र परत्र वा तेषाम् अन्यतमस्य स्थितौ) सकारस्य स्थाने शकारः, तवर्गस्य च स्थाने चवर्गः स्यात् न तु शकारात् परस्य। भूपतिस्-शेते भूपतिश्शेते। विपक्षस्-चिन्तयति विपक्षश्चिन्तयति। उद्यत्-चन्द्र उद्यच्चन्द्रः। याच्-ना याच्ञा। राजन्-जय राजञ्जय। शकारात् तु प्रश्नः।

३· ·१·

ष्टुना ष्टुः — ॥ ९२ ॥

षकारटवर्गाभ्यां योगे (पूर्वत्र परत्र वा तेषाम् अन्यतमस्य स्थितौ) सकारस्य स्थाने षकारः, तवर्गस्य च स्थाने टवर्गः स्यात्। मनस्-षष्ठम् मनष्षष्ठम्। हिमाद्रेस्-टङ्कः हिमाद्रेष्टङ्कः। इष्-त इष्टः। तत्-टीका तट्टीका।

·१· ५· ५·

न पदान्तस्याट्टोः ॥ ९३ ॥

पदान्तस्थात् टवर्गात् परस्य पूर्वोक्तं कार्य्यं न स्यात्। षट्ते। निट्सु। टोः इत्युक्तेः पदान्तस्थात् षकारात् भवति एव। चतुष्-तयम् चतुष्टयम्।

·१· ·१· ·१· १ः· १ः·

षण्णां षण्णवतिः षण्णगर्य्य एते निपात्याः ॥ ९४ ॥

·१· ६· ७·

न तोः षि ॥ ९५ ॥

तवर्गस्य षकारे परे पूर्वोक्तं कार्य्यं न स्यात्। गच्छत् षष्ठम्। गच्छन् षट्पदः।

६· ७· १·

तोर्लि लः ॥ ९६ ॥

लकारे परे तवर्गस्य स्थाने लः स्यात्। चलत्-लेखनी चलल्लेखनी। भवान्-लिखति भवाँल्लिखति। नकारस्थाने जातः लकारः अनुनासिकः एव।

६ः· ·१· ७· ७·

झलां जश् पदान्ते—ऽशि ॥ ९७ ॥

पदान्ते स्थितानां झलां स्थाने जश् स्यात् अशि परे। वाक्-ईशः वागीशः। दीव्यत्-रवम् दीव्यद्रवम्।

६· ७· १· ·१·

## चरः—पञ्चमे पञ्चमो—वा ॥ ९८ ॥

पदान्ते स्थितानां चरप्रत्याहारवर्णानां स्थाने स्वस्ववर्गीयपञ्चमवर्णे परे स्वस्ववर्गीयः पञ्चमः वा स्यात्। पक्षे जश्। बृहत्-नाम बृहन्नाम बृहद्नाम। चलत्-मणिः चलन्मणिः चलद्मणिः।

७· ७· १·

## प्रत्यये मे नित्यम् ॥ ९९ ॥

पदान्तस्थस्य चरः स्थाने मकारादौ प्रत्यये परे पूर्वोक्त कार्य्यं नित्यं स्यात्। वाक्-मयम् वाङ्मयम्। चित्-मयम् चिन्मयम्। अप्-मयम् अम्मयम्।

५· ६· ·१· ·१·

## चरो—हो झष् वा ॥ १०० ॥

पदान्ते स्थितात् चरः परस्य हकारस्य स्थाने झष् वा स्यात्। चरः स्थाने तु ( ९७ सू० ) जश्। वाक्-हीनः वाग्-घीनः वाग्हीनः। पतत्-हविः पतद्धविः पतद्हविः इत्यादि।

६· १· ७·

## शश्छोऽटि ॥ १०१ ॥

पदान्ते स्थितात् चरः परस्य शकारस्य स्थाने अटि परे छः वा स्यात्। बृहत्-शान्तिः बृहच्छान्तिः बृहच्शान्तिः। तकारस्य स्थाने अत्र ( ९१सू० ) चुत्वम्। अटि किं वाक्-श्चोतति इत्यत्र यथा न स्यात्।

६· १· ७·
## मोऽनुस्वारो—हलि ॥ १०२ ॥

पदान्ते स्थितस्य मस्य हलि परे अनुस्वार: स्यात्। ग्रामम्-गत: ग्रामंगत:। पदान्ते किं, गम्यते इत्यादौ न।

७· ६: ७·
## अपदान्ते म्नोर्झलि ॥ १०३ ॥

अपदान्ते स्थितस्य, मस्य, नस्य च झलि परे अनुस्वार: स्यात्। रम्-स्यते रंस्यते। यशान्-सि यशांसि। बृन्-हितम् बृंहितम्। झलि किं, गम्यते मन्यते इत्यादौ न।

६· ७· ·१· ७· ·१· ·१·
## अनुस्वारस्य ययि यम् पदान्ते तु वा ॥१०४॥

यय्प्रत्याहारवर्णेषु परेषु अपदान्ते स्थितस्य अनुस्वारस्य स्थाने यम् स्यात्। तत्र यवलेषु यँ वँ लँ:, वर्गेषु तु स्वस्व-वर्गीय: पञ्चम: इति विशेष:। पदान्ते तु वा स्यात्। यं-यस्यते यय्यँस्यते। वं-वन्यते वव्वँन्यते। अं-चति अञ्चति। वं-टति वण्टति। मं-थति मन्थति। अं-कति अङ्कति। लिं-पति लिम्पति। पदान्ते तु सं-यन्ता सय्यँन्ता। सं-वत्सर: सव्वँत्सर:। यं-लोकम् यल्लोकम्। सं-चलति सञ्चलति। सं-तनोति सन्तनोति। सं-गच्छति सङ्गच्छति। सं-पद्यते सम्पद्यते।

६:· ·१· ७·
## झलां—जश् झशि ॥ १०५ ॥

अपदान्ते स्थितानां झल्संज्ञकवर्णानां स्थाने झश्संज्ञक-वर्णेषु परेषु जश् आदेश: स्यात्। लभ्-धम् लब्धम्। दुघ्-धम् दुग्धम्। बुध्-धम् बुद्धम्। निष्-भ्याम् निड्भ्याम्। यस्य

एकस्थानिकः डः। मस्‌-जति मज्जति। तस्य एकस्थानिकः
दः तस्य ( ८१ सू० ) चुत्वम्। पदान्ते तु पत्ते चर् भविष्यति।
गोधुक् गोधुग्।

७· ·१·

## खरि चर्॥ १०६॥

अपदान्ते स्थितानां झलां स्थाने खरि परे चर् स्यात्।
आरभ्‌-स्यते आरप्स्यते। मधुलिढ्‌-सु मधुलिट्सु। बुभुध्‌-
सति बुभुत्सति। धोघ्‌-ष्यति धोक्ष्यति। भेद्‌-ता भेत्ता।
निड्‌-सु निट्सु। आस्‌-ते आस्ते। चय् इति अनभिधाय
चर् इत्युक्तेः सस्थाने सः एव न तु तः। एवं षस्थाने षः एव
न तु टः। तेन वस्ता द्रष्टः इत्यादि सिद्धम्।

८· १: ३·

## पदान्ते जश्‌चरौ पर्य्यायेण॥ १०७॥

पदान्तस्थानां झलां स्थाने जश्, चर्, इत्येतौ पर्य्यायेण
स्याताम्। ककुभ्‌-ककुब् ककुप्। मधुलिढ्‌-मधुलिड् मधु-
लिट्। युध्‌-युद् युत्। गोधुघ्‌-गोधुग् गोधुक्। एवं विद्‌-
विद् वित्। वाक्‌-वाग् वाक्। षवड्‌-षवड् षवट् इत्यादि।

६· ७· ७· ·१· १· ७·

## पुमोऽम्परे-खयि सुँग्‌-न ख्याशब्दे॥१०८॥

अम्प्रत्याहारः परः परवर्त्ती यस्य सः अम्परः तस्मिन् खयि
परे पदान्ते स्थितस्य पुमस् इति शब्दस्य संयोगान्तलोपे पुम्
इति भागस्य स्थाने सुँक् इत्यागमः ( स्थानिनः अविकारका-
रकादेशः ) स्यात् न तु ख्याशब्दे परे। उक्तौ इतौ कित्त्वात्

न्तावयवः। पुम्-कोकिलः पुंस्कोकिलः *। पुम्-प्रयत्नः पुंस्-प्रयत्नः। पुम्-खरः पुंस्खरः। अम् परे किं, पुंक्षयः। खयि किं, पुंरूपम्। ख्याशब्दे परे तु, पुंख्यानम्।

६· ७· ६·
**नश्छव्यप्रशान्॥ १०९॥**

पदान्ते स्थितस्य नस्य अम्परे छवि परे रुँक् इत्यागमः स्यात्। न तु क्विबन्तप्रशाम्शब्दस्य। राजन् त्राहि राजँस्त्राहि। सौ परे अनुस्वारस्य अनुनासिकता इति सिद्धान्तः।

७· ५· ६· १· ७·
**पदान्ते ह्रस्वाद् ङमो द्वित्वमचि॥ ११०॥**

पदान्ते स्थितस्य ह्रस्वात् परस्य ङम्संज्ञकवर्णस्य अचि परे द्वित्वं स्यात्। सन्-एति सन्नेति। ह्रस्वात् किं, भवान् आगतः इत्यादौ दीर्घात् यथा न स्यात्। पदान्ते इति अनुवृत्तौ सत्याम् अपि पुनः पदान्ते इति ग्रहणं समासे क्वचित् मा भूत् तेन सनन्तः यङन्तः इत्यादौ न।

५· ६· ५· ·१· ७· ·१·
**अचश्छो दीर्घात् तु पदान्ते वा॥ १११॥**

अचः परस्य छकारस्य द्वित्वं स्यात्। दीर्घात् अचः परस्य तु पदान्ते वा स्यात्। वृक्षच्छाया। चेच्छिद्यते। पदान्ते तु, लताच्छाया लताछाया हरितकीच्छाया हरितकीछाया।

इति हल्सन्धिः।

* पुंस्कोकिलः इत्यत्र रुकः सस्य विसर्गः अपि अयस्कान्तादित्वात् पुनः सत्वम्।

## विसर्गसन्धिः।

५· १· १·
### अन्त्यात् पूर्व उपधा ॥ ११२ ॥

अन्त्यवर्णात् पूर्ववर्णः उपधासंज्ञः स्यात्।

### विसर्गस्य—सँ—च्छवि ॥ ११३ ॥

छवि परे विसर्गस्य स्थाने सँः स्यात्। अकारः इत्। मेघः-छादकः मेघश्छादकः, विपन्नः-चिन्तयति विपन्नश्चिन्तयति (९१सू०) सस्य शः। लोकः-तनोति लोकस्तनोति।

५· ७:· ७·
### अतः कृकमिकुम्भपात्रेषु समासे ॥ ११४ ॥

कृधातुकमिधातुजातशब्द, कुम्भ, पात्र, शब्देषु परेषु अकारात् परस्य विसर्गस्य स्थाने समासे सः स्यात्। अयः-कारः अयस्कारः, अहः-करः अहस्करः, तेजःकामः तेजस्कामः। पयः-कुम्भः पयस्कुम्भः। पयः-पात्रम् पयस्पात्रम्। अतः किं, वाः कुम्भः। एवम् असमासे जनः कर्त्ता इत्यादौ न।

७· ·१· ७· ·१· ·१· १·
### शरि वा खर्परे तु वा लोपः ॥ ११५ ॥

शरि परे विसर्गस्य सँः स्यात् वा। खर्परे शरि तु तस्य लोपः वा स्यात्। शिशुः-शेते शिशुश्शेते। जनाः-षट् जनाष्षट्। सकारस्य शे परे (९१सू०) शत्वम्। षे परे च (९२सू०) षत्वम्। बालकः-स्वपिति बालकस्स्वपिति। खर्परे तु, धीरः-स्थाता धीरस्थाता धीरस्स्थाता। बुद्धिः-स्फुरति बुद्धिस्फुरति बुद्धिस्स्फुरति। द्वाः-स्थः द्वास्थः द्वास्स्थः।

१: १:
## तमस्काण्डादयो निपात्याः ॥ ११६ ॥

तमस्काण्डम् । अयस्काण्डम् । मेदस्पिण्डम् । भास्करः । भ्रातुष्पुत्रः । इत्यादयः ।

६. ७.
## अनव्ययस्थस्य कप्रत्यये ॥ ११७ ॥

अव्ययस्थभिन्नस्य विसर्गस्य कप्रत्यये परे सँः स्यात् । उरोरः-क उरोरस्कम् । वक्ष्यमाणस्य अव्ययस्य तु न प्रातस्तः-क ।

५. १.
## इणः षँः— ॥ ११८ ॥

इण्संज्ञकवर्णात् परस्य अनव्ययस्थस्य विसर्गस्य कप्रत्यये परे षः स्यात् । अकारः इत् । सर्पिः-कम् सर्पिष्कम् ।

६. १. ६. ७:
## इदुदुपधस्य चाप्रत्ययस्य कखपफेषु ॥११९॥

कखपफेषु परेषु इकारोकारोपधस्य प्रत्ययभिन्नस्य विसर्गस्य स्थाने षँः स्यात् । निः-प्रत्यूहम् निष्प्रत्यूहम् । आविः-कृतम् आविष्कृतम् । दुः-कृतम् दुष्कृतम् । अप्रत्ययस्य किं, कविः करोति, वायुः करोति इत्यादौ न ।

६: ६. १. ७. १. १.
## इसुसोरेकवाक्ये वा समासे तु नित्यम् ॥ १२० ॥

कखपफेषु परेषु इस्, उस्, इत्येतयोः विसर्गस्य स्थाने एकवाक्ये षँः वा स्यात् । समासे तु नित्यं स्यात् । सर्पिः-करोति सर्पिष्करोति । धनुः-करोति धनुष्करोति । एकवाक्ये

किं अस्तु हविः पिब चीरम् इति वाक्यद्वये मा भूत्। समासे तु हविष्कुण्डम्। धनुष्खण्डम्। इत्यादि एकम् एव।

५· ·१· ७:

**अत उदद्वशोः ॥ १२१ ॥**

अवि हशि च परे अकारात् परस्य विसर्गस्य स्थाने उत् स्यात्। लोकः-अत्र लोकोऽत्र। दृष्टः-अस्ति दृष्टोऽस्ति। (७३सू॰) गुणः (८५सू॰) पूर्वरूपञ्च। नृपः-मान्यः नृपोमान्यः। अतः किम्, लोका अत्र इत्यादौ मा भूत्।

५: ·१· ७·

**अवर्णभोभ्यां लुबशि ॥ १२२ ॥**

अवर्ण, भो, इत्येताभ्यां परस्य विसर्गस्य लुप् स्यात् अशि परे। लोकाः-अत्र लोकाअत्र। भोः-एहि भोएहि। सन्धिसूत्रेण लुपा लोपात् पुनः न सन्धिः।

५· १·

**इचो रँः—॥ १२३ ॥**

इचः परस्य विसर्गस्य रँः स्यात् अशि परे। अकारः इत्। कविः-अत्र कविरत्र। धनुः-आनय धनुरानय। मुनेः-मानः मुनेर्मानः। साधोः भोगः साधोर्भोगः।

५· ६·

**आत् रजातस्य ॥ १२४ ॥**

अशि परे अवर्णात् परस्य रजातस्य विसर्गस्य स्थाने रँः एव स्यात् न तु उत् लुप् वा। पुनः-अत्र पुनरत्र। पितः-अत्र पितरत्र। द्वाः-आगतः द्वारागतः। वाः-गतम् वार्गतम्।

६: ७· ·१·

**अहरादीनां पतिशब्दे वा ॥ १२५ ॥**

पतिशब्दे परे अहर्, गिर्, धुर्, इत्येषां शब्दानां रजातस्य विसर्गस्य स्थाने रँः स्याद् वा। अहः-पतिः अहर्पतिः। गीः-पतिः गीर्पतिः गीष्पतिः। धूः-पतिः धूर्पतिः धूष्पतिः। उभयत्र पक्षे ( ११८ सू० ) षत्वम्।

६· १· ७:·

## अह्नो न क, विभक्ति, रूप, रात्रेषु ॥१२६॥

अह्नः रजातस्य विसर्गस्य स्थाने क, विभक्त्यादिपरेषु रँः न स्यात्। अहः अहस्करः करः। अहः भिस् अहोभिः। अहः-रूपम् अहोरूपम्। अहोरात्रः। काशिकायां तु रमात्रे न। तेन अहोरत्नम् अहोरमणीयता इत्यादि रूपम् इति स्थितम्।

६· ७· ६· ७· ·१· १· ६· १· ·१·

## रो रि ढो ढि च लोपः पूर्वाणो दीर्घश्च ॥ १२७ ॥

रेफे परे रेफस्य, ढकारे परे ढकारस्य च लोपः स्यात्। तस्मिन् सति च पूर्वस्थितस्य अण्संज्ञवर्णानां दीर्घः स्यात्। भूपतिः-राजते भूपतीराजते। गुढ्-ढः गूढः। अणः इत्युक्तेः ऋकारस्य न दीर्घः। परिवृढ्-ढः परिवृढः।

५: ६· १· ७·

## तदेतद्भ्यां सोर्लोपो हलि ॥ १२८ ॥

तदेतद्भ्यां परस्य सोः लोपः स्यात् हलि परे। सः-याति सयाति। एषः-गत एषगतः।

इति विसर्गसन्धिः।

## शब्दसंज्ञा ।

·१· ·१· ·१· ·१· ·१· ·१· ·१·

सुँ औ जस् (१) अम् औट् शस् (२) टा

·१· ·१· ·१· ·१· ·१· ·१· ·१·

भ्याम् भिस् (३) ङे भ्याम् भ्यस् (४) ङसिँ भ्याम्

·१· ·१· ·१· ·१· ·१· ·१· ·१·

भ्यस् (५) ङस् ओस् आम्(६) ङि ओस् सुप्(७)

१: ·१·

एते सुप् * ॥ १२९ ॥

एते सुप्संज्ञाः स्युः। तेषु जशटङपाः इतः न अन्ये मादयः। सुङस्योरच् च अनुनासिकतया इत्।

·१· १: १:

त्रिशस्ते प्रथमादयः ॥ १३० ॥

ते एकविंशतिः प्रत्ययाः क्रमेण त्रिकं त्रिकं प्रथमा, द्वितीया, तृतीया, चतुर्थी, पञ्चमी, षष्ठी, सप्तमी संज्ञाः स्युः।

७· ६· १· १·

सम्बोधने प्रथमाया एकवचनं संबुद्धिः ॥१३१॥

सम्बोधनार्थंप्रथमायाः एकवचनं संबुद्धिसंज्ञं स्यात्।

·१· ६· १·

सुडक्लीवस्य सर्वनामस्थानम्— ॥ १३२ ॥

---

* जसादिषु अस्थानाम् अपि सकारादीनां नेत्त्वं न विभक्तौ तु स्मा इति पाणिनिना विभक्तिस्थतवर्गसकारमकाराणाम् इत्त्वस्य निषेधात् औटि टकारः सुट्प्रत्याहारार्थः।

सुँ, औ, जस्, अम्, औट् इत्ययं सुट्प्रत्याहारः सर्वनामस्थानसंज्ञः स्यात्, क्लीवलिङ्गस्य तु न। वक्ष्यमाणभसंज्ञायाः पुरस्तात् अपवादः ।

७· १· ·१·
क्लीवे शिरेव ॥ १३३ ॥

क्लीवलिङ्गे जस्-शस्स्थान-जातः शिः एव सर्वनामस्थानसंज्ञः स्यात् । न अन्यः । पूर्ववत् भसंज्ञापवादः ।

७· ७· १·
असर्वनामस्थाने स्वादौ पदम् ॥ १३४ ॥

सर्वनामस्थानभिन्ने स्वादौ प्रत्यये परे पूर्वं पदसंज्ञं स्यात् ।

७· ७· १· ·१· ·१· १·
याजादौ नामप्रत्यये भं न तु पदम् ॥१३५॥

यकारादौ अजादौ च नामप्रकृतिकप्रत्यये परे पूर्वं भसंज्ञं स्यात्, न तु पदसंज्ञम् । नामप्रत्यये इत्युक्तेः धातुप्रत्यये न ।

६ः· १· १·
अचामन्त्याजादिष्टिः ॥ १३६ ॥

अचां मध्ये अन्त्याजादिवर्णः टिसंज्ञः स्यात् ।

१ः· १ः· १ः· ·१·
षान्तनान्ताः संख्यावाचकाः डत्यन्ताश्च

·१·
षट् ॥ १३७ ॥

षान्ताः नान्ताश्च संख्यावाचकाः डतिप्रत्ययान्ताश्च शब्दाः षट्संज्ञकाः स्युः ।

१ः ·१·
बहु, गण, वतु-डत्यन्ताः संख्यावत् कार्य्य-
१ः·
भाजः ॥ १३८ ॥

बहुगणशब्दौ वतु-डति-प्रत्ययान्तौ च संख्यावाचकवत् कार्य्यं भजन्ते। बत्कारणानुङीपि न तथात्वम्। तेन यावती बह्वी इत्यादौ संख्यावाचितया न ङीब्निषेधः।

१ः १ः १·
ईदूतौ—नित्यस्त्रीलिङ्गौ—नदी—॥१३९॥

लिङ्गान्तरानभिधायकौ नित्यस्त्रीलिङ्गौ ईकारान्तः ऊकारान्तश्च एतौ शब्दौ नदीसंज्ञौ स्तः। वातप्रमीप्रभृतिः तु पुंबोधकः स्त्रीबोधकश्च, तेन न तस्य नदीत्वम्।

१· १· १ः
अस्त्री—नेयङुवङ्स्थानी—॥ १४० ॥

इयङ्, उवङ्, स्थानीभूतौ नित्यस्त्रीलिङ्गौ स्त्रीशब्दभिन्नौ ईदूदन्तौ नदीसंज्ञौ न स्तः। यथा हे श्रीः, हे भ्रूः। स्त्रीशब्दस्य तु स्यात् एव। हे स्त्रि।

७· ·१·
आमि वा— ॥ १४१ ॥

आमि परे स्त्रीभिन्नौ पूर्वोक्तौ शब्दौ नदीसंज्ञौ वा स्तः। यथा श्रीणां, श्रियाम्। भ्रूणां, भ्रुवाम्। स्त्रीशब्दस्य तु स्त्रीणाम् इत्येव।

७· १ः ·१·
ङिति इदुदन्तौ च ॥ १४२ ॥

ङिति परे नित्यस्त्रीलिङ्गौ, स्त्रीभिन्नौ इयङुवङ्स्थानिनौ

ईदूदन्तौ, इदुदन्तौ च नदीसंज्ञौ वा स्तः। यथा श्रियै श्रिये। भ्रुवै भ्रुवे। सर्वत्र स्त्रीशब्दस्य तु नित्यम् एव, तेन स्त्रियै इत्येव। मत्यै मतये। धेन्वै धेनवे। अनित्यस्त्रीलिङ्गौ तु न। शुचये, साधवे।

१: १: १·

## इदुदन्तावनदीसखी घिः—॥ १४३ ॥

नदीसंज्ञशब्द-सखिशब्द-भिन्नौ इदुदन्तौ घिसंज्ञौ स्तः।

१· ७· ·१·

## पतिः समास एव ॥ १४४ ॥

समासे एव पतिशब्दः घिसंज्ञः स्यात्। न अन्यत्र।

१· १· ७: १· ·१·

## प्रकृतिरङ्गं प्रत्ययविकरणयोर्विकरणादिस्तु-

७·

## प्रत्यये ॥ १४५ ॥

प्रत्ययविकरणयोः परयोः प्रकृतिः, प्रत्यये परे विकरणागमादिश्च अङ्गसंज्ञः स्यात्। यथा भवति इत्यत्र अपि विकरणे, भविता इत्यादौ ताप्रत्यये च परे भूप्रकृतेः अङ्गसंज्ञा तथा तनोति इत्यादौ तु उविकरणस्य एव तिप्रत्यये अङ्गसंज्ञा, ततश्च तस्य गुणः।

१:· १:·

## सर्वादीनि—सर्वनामानि— ॥ १४६ ॥

सर्वादयः शब्दाः सर्वनामसंज्ञाः स्युः। सर्व, विश्व, उभ, उभय, डतर-डतम-प्रत्ययान्त, इतर, अन्य, अन्यतर, त्वत्, त्व, नेम, सम, सिम, पूर्व, पर, दक्षिण, उत्तर, अपर, अधर, स्व, अन्तर, त्यद्, तद्, यद्, एतद्, अदस्, इदम्, एक, द्वि,

युष्मद्, अस्मद्, भवत्, किम्, इति सर्वादिः। उभशब्दः नित्यं द्विवचनान्तः, तस्य इह पाठस्तु अकजर्थः, तेन उभकौ इत्यादि। कप्रत्यये तु उभयत्र इत्यादिवत् उभयकौ इत्येव स्यात् समासादिवृत्तौ उभशब्दात् अयचः नित्यत्वात्। अन्यतरशब्दग्रहणेन अन्यतमस्य न। त्वत्त्वौ अन्यार्थौ। नेमः इति अर्द्धवाची। समः सर्वार्थकः। अत्र अर्थविशेषः यथा।

समोऽतुल्ये व्यवस्थायां पूर्वाद्योऽन्तरोऽपुरि।
बाह्यदेशोत्तरीये च स्वस्त्वज्ञातिधनाभिधः॥

व्यवस्था दिग्देशकालानाम् अवधिनियमः। पुरि विशेष्यायां न इत्यर्थः। बाह्यदेशः भिन्नदेशसम्बन्धः।

७· ·१·

## दिङ्नामसमासे वा॥ १४७॥

दिङ्नामवाचकसमासे सर्वनामसंज्ञा वा स्यात्। उत्तरस्याः पूर्वस्याश्च अन्तराला दिक् उत्तरपूर्वा। उत्तरपूर्वस्यै उत्तरपूर्वायै।

१:· ·१·

## संज्ञोपसर्जनीभूतानि न—॥ १४८॥

तानि सर्वादीनि संज्ञाभूतानि इतरविशेषणभूतानि च न सर्वनामसंज्ञानि स्युः। तत्र संज्ञायाम्, सर्वाय। विशेषणे, प्रियसर्वाय अतिसर्वाय।

७· ७· ·१·

## तृतीयासमासे तद्योग्यवाक्ये च॥ १४९॥

तृतीयासमासे तद्योग्यवाक्ये च न उक्तसंज्ञानि स्युः। मासपूर्वाय, मासेन पूर्वाय।

७· ७· ·१· ·१·
## द्वन्द्वोत्तरपदे जसि तु वा ॥ १५० ॥

द्वन्द्वसमासोत्तरपदस्थानि तानि न सर्वनामसंज्ञानि स्युः। जसि तु वा स्युः। वर्णाश्रमेतराणाम्। जसि तु वर्णाश्रमेतरे वर्णाश्रमेतराः। उत्तरपदे इत्युक्तेः पूर्वपदस्थस्य स्यात् एव। तेन पूर्वपरे दिशौ इत्यादौ पूर्वाशब्दस्य सर्वनामतया पुंवद्भावः।

प्रथमचरमतयाय-प्रत्ययान्ताल्पार्द्धकतिपय-
१ः· १· ·१·
## नेमाः पूर्वाद्याश्च ॥ १५१ ॥

प्रथमाद्याः अष्टौ पूर्वाद्याः गणोक्ताश्च नव एते सप्तदश शब्दाः जसि सर्वनामसंज्ञाः वा स्युः। प्रथमे प्रथमाः। द्वये द्वयाः। द्वितये द्वितयाः। पूर्वे पूर्वाः इत्यादि।

१ः· ७·
## तीयप्रत्ययान्ताः ङिति ॥ १५२ ॥

ङिति परे तीयप्रत्ययान्तशब्दाः सर्वनामसंज्ञाः वा स्युः। द्वितीयस्मै द्वितीयाय। तृतीयस्याः तृतीयायाः।

६· ·१· १·
## यणः इक् संप्रसारणम् ॥ १५३ ॥

यणः स्थाने आदिश्यमानः इक् संप्रसारणसंज्ञः स्यात्। तत्र अपि स्थानिसाम्यात् यस्थाने इः, वस्थाने उः, रस्थाने ऋः इत्येवं विशेषः।

७· १· १·
## सम्बोधने प्रथमामन्त्रितम् ॥ १५४ ॥

सम्बोधनार्थप्रथमा आमन्त्रितसंज्ञा स्यात्।

१·　१·　१ः·　·१·　१·
## द्विरुक्तो धातुर्जक्षित्यादयश्चाभ्यस्तम् ॥ १५५॥

कृतद्वित्वः धातुः जक्षित्यादयश्च अभ्यस्तसंज्ञाः स्युः ।

जक्ष, जागृ, दरिद्रा च चकास्तिः शास्तिरेव च ।
दीधी वेवी च विज्ञेयः जक्षादिः सप्तको गणः ॥

१·　१·
## स्वरादिनिपातमव्ययम् ॥ १५६ ॥

स्वरादयः वक्ष्यमाणाः ( ३२ सू० ) उक्ताः निपाताश्च एते अव्ययसंज्ञाः स्युः ।

इति शब्दसाधनोपयोगिसंज्ञाप्रकरणम् ।

## परिभाषा ।

७·　१·　१·
## प्रत्ययलोपे प्रत्ययनिमित्तं कार्य्यम् ॥१५७॥

प्रत्ययलोपे प्रत्ययनिमित्तं गुणादिकार्य्यं भवेत् । यथा कवे साधो इत्यादौ सम्बुद्धिलोपे अपि तन्निमित्तः गुणः । अत्र लोपे इत्युक्तेः लोपशब्देन लोपे एव कार्य्यं न तु लुका लोपे अपि, तेन कति यति इत्यादौ जसः लुका लोपे न गुणः ।

·१·　१·　७·　·१·
## नलुबसिद्धः संज्ञासुब्विधावेव * ॥ १५८ ॥

संज्ञाविधौ सुपि परे सुपः स्थाने वा विधाने एव नलुप् असिद्धः स्यात्, न अन्यत्र । यथा पञ्च ब्राह्मणाः इत्यादौ लुप्त-

* न लुप् इव नलोपः अपि अन्यत्र सिद्धः तेन राज्यम् इत्यत्र नलोपे तस्य सिद्धतया तत्पूर्वस्य अवर्णस्य लोपः ।

नकारान्तत्वे अपि षट्संज्ञा। तेन संख्यावाचकतया षट्संज्ञकत्वात् ङीपः निषेधः, नान्ततया आपश्च न प्राप्तिः। सति तु सिद्धत्वे नान्तत्वाभावेन षट्संज्ञाऽप्रसक्तौ, ङीपः आपश्च निषेधः न स्यात्। सुपि विधौ, राजभ्याम् इत्यादौ अतः दीर्घः यञि इति दीर्घः न, नलुपः असिद्धत्वात्। सुपः स्थाने विधौ यथा अतः भिस् ऐस् इत्यनेन राजभिः इत्यादौ न ऐस्। सति च सिद्धत्वे ऐस् स्यात्। एषु एव असिद्धः इत्युक्तेः स्थानिषु इत्यादौ षत्वम्। राजीयते राजायते इत्यादौ च क्यजादिपरे ईकारः दीर्घश्च स्यात् एव। एवं दामोदरः इत्यादौ सन्धिः भवति एव।

६· ·१· ७·

## एच इग् ह्रस्वादेशे ॥ १५९ ॥

एचः स्थाने ह्रस्वे आदिश्यमाने इक् एव स्यात्। तत्र अपि एकस्थानिकतया एदैतोः स्थाने इः, ओदौतोः स्थाने च उः स्यात्।

७· ·१· १·

## संप्रसारणे न संप्रसारणम् ॥ १६० ॥

संप्रसारणे परे न पुनः संप्रसारणम्। यथा यूनः इत्यादौ युवन् इत्यस्य वकारस्य संप्रसारणे उ, इत्यस्मिन् कृते यु इत्यत्र य् इत्यस्य इकाररूपं न पुनः संप्रसारणम्।

१· ५· ·१:

## अङ्गकार्य्यं सन्धिकार्य्यात् बलवत् ॥ १६१ ॥

अङ्गनिमित्तम् अङ्गस्थानिकार्य्यं वा अङ्गकार्य्यं तत् च बलवत्त्वेन सन्धिकार्य्यस्य बाधकं स्यात्। यथा नर-आ इति

स्थिते सवर्णदीर्घं प्रसक्तं बाधित्वा टास्थाने इन एव भवति इत्यादि ऊह्यम् ।

इति शब्दसाधनोपयोगिपरिभाषाप्रकरणम् ।

---

## अजन्तपुंलिङ्गाः ।

५· १:·

### प्रातिपदिकात् सुपः ॥ १६२ ॥

प्रातिपदिकात् सुप्संज्ञकाः प्रत्ययाः स्युः । तेषाम् अर्थविशेषास्तु वक्ष्यन्ते ।

७:· १:·

### एकद्विबहुषु एकवचनद्विवचनबहुवचनानि ॥ १६३ ॥

एकत्वार्थे विभक्तेः एकवचनं, द्वित्वार्थे द्विवचनं, बहुत्वार्थे च बहुवचनं स्यात् ।

७· ७· ·१·

### जातिपरनिर्देशे एकस्मिन्—वा—बहुवच-

१· ७·

### नम्—असंख्याप्रयोगे ॥ १६४ ॥

जातिपरनिर्देशे एकस्मिन् अपि अर्थे बहुवचनं वा स्यात् । संख्यारूपविशेषणप्रयोगे तु न । यवः यवाः वा । एकस्मिन् इत्युक्तेः व्रीहियवौ इमौ इति द्विवचने न संख्यारूपविशेषणप्रयोगे तु एकः यवः इत्यादौ न ।

५· ७·

### गुप्रादौ गौरवे ॥ १६५ ॥

गौरवे युष्मच्छब्दात् एकस्मिन् अपि अर्थे बहुवचनं वा स्यात्। त्वं मे गुरुः इत्यर्थे यूयं मे गुरवः।

५· ५· ७: ·१·

**अविशेषणादस्मदो द्वयोश्च ॥ १६६ ॥**

अविशेषणात् अस्मच्छब्दात् एकत्वे द्वित्वे च अर्थे बहुवचनं वा स्यात्। अहं वदामि आवां वदावः इत्यर्थे पक्षे वयं वदामः इति। सविशेषणस्य तु न, तेन सच्छात्रः अहं वदामि इत्येव स्यात् एवं द्वित्वे अपि।

नर-स् इति स्थिते शब्दसाधनाय प्रक्रिया अभिधीयते।

७· ६: ७· ७· ·१· १·

**पदान्ते रसयोः खरि अवसाने च विसर्गः ॥ १६७ ॥**

खरि परे अवसाने च पदान्ते स्थितयोः रसयोः स्थाने विसर्गः स्यात्। पदान्ते इत्युक्तेः चस्कन्द पुस्फोर इत्यादौ न। इति सस्य विसर्गे नरः। नर-औ (७४ सू०) वृद्धौ नरौ। नर-अस्।

५· ७· ·१· १·

**अतो जसि, सह पूर्वसवर्णदीर्घः ॥ १६८ ॥**

जसि परे अकारस्य पूर्वसवर्णदीर्घरूपः एकादेशः स्यात्। अतः गुणे इति वक्ष्यमाणपररूपापवादः। इति एकादेशदीर्घे विसर्गः। नराः। सम्बोधने एकवचने तु भेदः। यथा हे नरस् इति स्थिते।

५:· ६· ६· ·१· १·

**एङ्ह्रस्वनदीभ्यः सम्बुद्धेः शसादेश्च लोपः ॥ १६९ ॥**

एङन्तात् ह्रस्वान्तात् नदीसंज्ञकात् च परस्य सम्बुद्धेः, शस—आदेश लोपः स्यात्। इति सम्बुद्धिलोपे हे नर। सम्बोधनस्य स्पष्टप्रतीत्यर्थं हेभोः-प्रभृति-शब्दाः अपि प्रयुज्यन्ते। नर-अम् इति स्थिते।

७· १· ·१· ६·

## अमि पूर्वरूपः सहाकः— ॥ १७० ॥

अमि परे अगन्ताङ्गस्य पूर्वरूपः सह (पूर्वपरयोः एकादेशः) स्यात्। अमि इति (१२८ सू०) विहितामः अपि ग्रहणम्। इति पूर्वरूपे, नरम्। नर-औ। प्राग्वत् वृद्धिः। नरौ। नर-अस् इति स्थिते।

६· ७· ७· ·१· १·

## ह्रस्वस्य शसि नामि च दीर्घः ॥ १७१ ॥

ह्रस्वस्य अगन्तस्य शसि नामि च दीर्घः स्यात्।

५· ६· ६· १· ७·

## ह्रस्वाच्छसोऽन्त्यस्य नः पुंसि † ॥ १७२ ॥

ह्रस्वात् परस्य शसः अन्त्यस्य स् इत्यस्य स्थाने नँः इत्यादेशः स्यात् पुंलिङ्गे। अकारः इत्। अन्त्यस्य इत्युक्तेः (६४ सू०) पञ्चम्याः परम् इत्यस्य अपवादः। नरान्। नर-आ इति स्थिते।

* शसादेश इत्यादिग्रहणं स्पष्टार्थम्। तदग्रहणे अपि पञ्चम्याः परम् इत्यादिना (६४ सू०) तल्लाभात्। एवम् अन्यत्र अपि।

† अन्त्यस्य इत्युक्तिः प्रक्रियालाघवार्थम्। तदनुक्तौ पञ्चम्याः परम् इत्यादिना आदिस्थाने आदेशे अपि संयोगान्तलोपेन रूपसाधनम् इति प्रक्रियागौरवम्।

५· ६· ·१· ६ः· १ः·
अतो भिस ऐस् टाङेङसिङसामिनयात्स्याः
॥ १७३ ॥

अकारान्तात् अङ्गात् परस्य भिसः स्थाने ऐस्, टास्थाने इनः, ङेस्थाने यः, ङसिस्थाने आत्, ङसः स्थाने च स्यः इत्येवं क्रमेण एते आदेशाः स्युः । अनेकवर्णत्वात् सर्वादेशः । इति इने (७३सू०) गुणे च कृते ।

५· ६· १· ७· ७·
ऋरषेभ्यो नो णोऽपदान्ते एकपदेऽट्कुप्व-
७· ·१·
नुस्वारव्यवधानेऽपि * ॥ १७४ ॥

ऋवर्णरकारषकारेभ्यः परस्य अपदान्ते स्थितस्य नस्य णः स्यात् निमित्तनिमित्तिनोः एकपदे स्थितौ अटा कवर्गेण पवर्गेण अनुस्वारेण च एतैः व्यस्तैः समस्तैः वा व्यवधाने अपि । अकारः इत् । यथा ऋवर्णात्, ऋणम्, तृणम् । रेफात्, तीर्णम्, शीर्णम् । षात्, कृष्णः, विष्णुः । अपदान्ते किं, नरान् इत्यादौ न । निमित्तं ऋवर्णादि निमित्ती नकारः तयोः एकदस्थले किम्, पितृनतिः मातृनमनम् दुर्नाम इत्यादौ न । अटा व्यवधाने यथाः करणम् तोषणं पोषणम् । कव-र्गेण वृक्णम् रुग्णः । पवर्गेण अर्पणं दर्पणः । अनुस्वारेण बृंहणम् वृंहणम् इत्याद्युदाहरणानि द्रष्टव्यानि । प्रकृते च अनेन णत्वे कृते नरेण । नर+भ्याम् इति स्थिते ।

---

* ऋकारग्रहणं स्पष्टार्थम् । तदग्रहणे अपि रकारग्रहणेन एव रूपसिद्धेः ऋकारस्य रकारादित्वं भाष्यादौ स्पष्टतया स्वीकृतत्वात् ।

६· १· ७· ७· ७· ·१·
## अतो दीर्घो यञि सुपि तिङि च ॥ १७५ ॥

यञादौ सुपि, तिङि च परे अकाराङ्गस्य दीर्घः स्यात्। नराभ्याम्। सुपि तिङि इत्युक्तेः केशवः अङ्गना इत्यादौ यञादौ तद्धिते न। अङ्गस्य इत्युक्तेः भवामि इत्यादौ णपः अकारस्य अपि दीर्घार्थः। नर-भिस् ( १७३ सू० ) ऐसि वृद्धौ विसर्गे च कृते। नरैः। नर-ए ( १६३ सू० ) ये, यञादितया तस्मिन् परे दीर्घः। नराय। प्राग्वत् नराभ्याम् नर-भ्यस् इति स्थिते।

६· ·१· ७ः ७· ·१·
## अत एद् बहुवचनसुप्सभोरोसि च ॥१७६॥

सादौ भादौ च बहुवचनसंज्ञकसुपि ओसि च परे अकारान्ताङ्गस्य एत् स्यात्। इति एकारे कृते सस्य विसर्गः। नरेभ्यः। नर-अस् ( १७३ सू० ) आति सवर्णदीर्घे च नरात् नराभ्याम् नरेभ्यः। प्राग्वत्। ङसः स्ये कृते। नरस्य। नर-ओस् ( १७६ सू० ) एकारे ( ६७ सू० ) अयादेशे विसर्गे च कृते। नरयोः। नर-आम् इति स्थिते।

५· ·१· ६·
## ह्रस्वनद्यापो नुडामः ॥ १७७ ॥

ह्रस्वान्तात् नदीसंज्ञकात् आबन्तात् च परस्यामः स्थाने नुँडागमः स्यात्। उटौ इतौ। टित्त्वात् आदौ आगमः इति नुटि दीर्घे च कृते णत्वम्। नराणाम्। नर-इ इति स्थिते। ( ७३ सू० ) गुणे कृते नरे। नर-ओस् नरयोः। प्राग्वत्। नर-सु ( १७६ सू० ) एति कृते।

५· ७· ६: ·६· ६·
इण्कोरपदादौ आदेशप्रत्यययोरसात् सस्य
१· ६:· ·१· ७· ·१·
षँः शासिवसिघसीनाञ्च नुम्विसर्गव्यवधानेऽपि
॥ १७८ ॥

इण्संज्ञकवर्णेभ्यः कवर्गात् च परस्य अपदादौ स्थितस्य आदेशप्रत्ययावयवस्य सात्प्रत्ययभिन्नस्य शासिवसिघसीनाञ्च सस्य षँः स्यात् नुम्विसर्गव्यवधानेऽपि। अः इत्। यथा इणः: आजिषु साधुषु मातृषु नरेषु गोषु नौषु चतुर्षु हलषु। कोः, वाक्षु त्वक्षु।

नुमा, व्यवधाने हवींषि यजूंषि। विसर्गेण, सर्पिःषु यजुःषु। सर्पिष्षु यजुष्षु इत्यादौ तु विसर्गस्थाने सकारे कृते तस्य एव अनेन षत्वे तद्योगे (८२सू०) षत्वम्। अत्र नुम् इत्युक्तेः पुंसु सुहिंसु इत्यादौ न तत्रानुस्वारे अपि नुम्रूपत्वाभावात् इति। प्रकृते च अनेन सु इत्यस्य षत्वे। नरेषु। एवं जनमानवादयो अकारान्ताः साध्याः। सर्वनामशब्देषु तु विशेषः।

५· ५· ६· १· ६· ·१·
अतः सर्वनाम्नः—जसः शीः ङे स्मै ङसि-
६: ·१· १:
ङ्योश्च स्मात्स्मिनौ ॥ १७९ ॥

अकारान्तात् सर्वनामशब्दात् परस्य जसः स्थाने शीः, ङे-स्थाने स्मै, ङसिङ्योः स्थाने च क्रमात् स्मात्स्मिनौ स्याताम्। शः इत्। शित्त्वात् सर्वादेशः। सर्व—अस्। जसःशीः ततो

गुणे, सर्वे। सर्व—ए स्मैभावे क्वते सर्वस्मै। सर्व—ङस् स्मात् इति क्वते सर्वस्मात्। सर्व—आम्।

५॰ ६॰ ॰१॰

## आद्‌ामः सुँट्॥ १८०॥

अवर्णान्तात् सर्वनामशब्दात् परस्य आमः स्थाने सुँडागमः स्यात्। उटौ इतौ टित्त्वात् आदावागमः। इति सुटि (१७६ सू॰) एत्त्वे षत्वे च क्वते सर्वेषाम्। सर्व—इ स्मिन् क्वते सर्वस्मिन्। अन्यत्र सर्वत्र नरसमानम् एवं विश्वादयः। पूर्वादौ तु विशेषः। तत्र जसि (१५१ सू॰) सर्वनामसंज्ञाविकल्पेन पूर्वे पूर्वाः।

५ः॰ ५ः॰ १ः ॰१॰

## पूर्वादिभ्यो नवभ्यः स्मात्स्मिनौ वा॥१८१॥

पूर्वादिभ्यः नवभ्यः शब्देभ्यः परयोः ङसिङ्योः स्थाने स्मात्स्मिनौ वा स्तः। पूर्वस्मात् पूर्वात्। पूर्वस्मिन् पूर्वे। एवं परादयः। प्रथमादीनान्तु जसि (१५१ सू॰) विकल्पेन सर्वनामत्वात् प्रथमे प्रथमा इत्यादिरूपम्। द्वितीयतृतीयशब्दयोस्तु ङित्स्वेव (१५२ सू॰) विकल्पेन सर्वनामत्वात् द्वितीयस्मै द्वितीयाय इत्यादि रूपम्। नास्ति निर्गता वा जरा यस्य स अजरः निर्जरः वा। तत्र विशेषः।

६॰ ॰१॰ ॰१॰ ७॰ ७॰

## जराया असुँङ् वाऽचि सुपि॥ १८२॥

अजादौ सुपि परे जराशब्दस्य असुङ् इत्यादेशः स्यात्। उङावितौ। ङित्त्वात् अन्तादेशः। एकदेशविक्वतत्वात् अन्यतया निर्जरादिशब्दे जरभागस्य अपि आदेशः। अजर-औ अजरसौ। अजरसः अजरसम। अजरसौ अजरसः। प्रक्वति-

प्रत्यययोः मध्ये प्रकृत्याश्रितं कार्य्यं बलवत् इति टादौ भादौ च एत्वादेशे कृते अकारपरत्वाभावात् इनादेशः न इत्येव सिद्धान्तः । तेन अजरसा भिसि तु अजादित्वाभावेन भवे ऐसि कृते ततः अजादित्वात् असुँङादेशः इति विशेषः । अजरसैः पक्षे हलादौ च नरवत् । इति अकारान्ताः ।

विश्वपाः विश्वपौ इत्यादि प्रसादौ अपि तु ।

६· ६· ६· १·

## आतो धातोर्भस्य लोपः ॥ १८३ ॥

भसंज्ञकस्य आकारान्तधातोः आकारस्य लोपः स्यात । विश्वेपः विश्वपा विश्वपाभ्याम् इत्यादि । एवं सर्वसदादयः । इति आदन्ताः ।

कविः । कवि—औ इति स्थिते ।

५· १· १: ५· ·१·

## घेरौर्यू पत्युश्च ॥ १८४ ॥

घिसंज्ञकशब्दात् पतिशब्दात् च परस्य औ इत्यस्य स्थाने क्रमेण ई ऊ इति आदेशौ स्तः । तत्र अपि इकारात् परस्य ई, उकारात् परस्य ऊ इति भेदः । (१४४ सू०) पत्युः घित्वे अपि असमासार्थं पृथग्ग्रहणम् । इति ईत्वे कृते सवर्णदीर्घे कवी । कवि—अस् ।

६· ७: ६· ७:· ·१· १·

## ह्रस्वस्य जस्सम्बुद्ध्योर्घेर्ङित्सु च गुणः ॥ १८५ ॥

जसि सम्बुद्धौ च परतः ह्रस्वान्तस्य, ङित्सु परेषु च घिसंज्ञकस्य इकः गुणः स्यात् । इति गुणे विसर्गः । कवयः । सम्बुद्धौ तु कवि-स् इति स्थिते ( १६६ सू० ) सम्बुद्धिलोपे

( १५७ सू० ) गुणः कवे। ( १७० सू० ) अमि पूर्वरूपे। कविम्। कवी। असि दीर्घे नादेशे च कवीन्। कवि-आ।

५· १· १· ७·
## घेः टा नाऽस्त्रियाम् ॥ १८६ ॥

घेः परस्य टा इत्यस्य स्थाने ना स्यात्। कविना। कवि-भ्याम् कविभिः। कवि-ए गुणे अयादेशे च कृते कवये कवि-भ्याम् कविभ्यः। कवि-अस् गुणे कृते।

५· ६: ६· १·
## एङो ङसिङसोरादेर्लोपः ॥ १८७ ॥

एङः परस्य ङसिङसोः आदेः लोपः स्यात्। इति आदि-लोपे विसर्गे च। कवेः। कविभ्याम् कविभ्यः। कवेः कव्योः कवीनाम्। कवि—इ।

५· ६· १·
## घेर्ङेर्डौः ॥ १८८ ॥

घेः परस्य ङेः स्थाने डौः स्यात्। डः इतः इति डौभावे।

६· १· ७·
## टेर्लोपो डिति ॥ १८९ ॥

डिति परे पूर्वस्य टेः लोपः स्यात्। इति इकारलोपे। कवौ। कव्योः। कविषु। एवं रविवह्निप्रभृतयः इकारान्ताः। सखिशब्दे तु विशेषः।

५: ६· ६· १·
## ऋवर्णसखिभ्यां सोरसम्बुद्धेर्डा ॥ १९० ॥

ऋवर्णात् सखिशब्दात् च परस्य सम्बुद्धिभिन्नस्य सोः

स्थाने डा स्यात्। ङः इत्। डित्त्वात् टिलोपः। सखा। सखि-औ इति स्थिते।

६॰ ७॰ ७॰ १॰

## सख्युरसम्बुद्धौ सर्वनामस्थाने वृद्धिः॥१९१॥

सम्बुद्धिभिन्ने सर्वनामस्थाने परे सखिशब्दस्य अन्त्यस्य इकः वृद्धिः स्यात्। इति वृद्धौ आयादेशः। सखायौ एवं सखायः। हे सखे! सखायम्। सखायौ। सखीन्। सखि—आ इत्यत्र घिसंज्ञाभावात् न ना। तेन (६६ सू॰) यणि सख्या एवं सख्ये।

५ः ५॰ ६ः॰१॰ ६॰॰१॰ १॰

## इदुद्भ्यामघेः ङसिङसोरुत् ङेस्तु शौः॥१९२॥

घिसंज्ञकभिन्नाभ्याम् इदुद्भ्यां परयोः ङसिङसोः स्थाने उत्, ङेः स्थाने च शौः स्यात्। पञ्चम्याः परमित्युक्तेः आदेः एवादेशः। शौः शकारेत्। शित्त्वात् सर्वादेशः। सख्युः। सख्युः। सख्यौ। असमस्तपतिशब्दस्तु सखिशब्दवत्। किन्तु तृतीयादौ क्वचित् घित्वम् अपि इच्छन्ति। तेन पतिना नीयमानायाः पुरः-शुक्रो न दुष्यति। सीतायाः पतये नमः। नष्टे मृते प्रव्रजिते क्लीवे वा पतिते पतौ इत्यादिसिद्धिः। समासे तु भूपतिशब्दादयः कविशब्दवत्। डतिप्रत्ययान्ताः कतियतिप्रभृतयः नित्यं बहुवचनान्ताः इति सिद्धान्ते तत्र कति-अस् इति स्थिते।

५ः॰ ६ः ॰१॰ ६॰

## डतिषड्भ्यो जस्शसोर्लुक् सर्वस्य॥ १९३ ॥

डतिप्रत्ययान्तात् षट्संज्ञकेभ्यश्च शब्देभ्यः परयोः जस्शसोः सर्वस्य लुक् स्यात्। कति कति। कतिभिः। कतिभ्यः।

कतिभ्यः। कतीनाम्। कतिषु। एवं यति। त्र्यादयः सङ्ख्यावाचकाः अपि नित्यं बहुवचनान्ताः। तत्र त्रिशब्दस्य कतिशब्दवत् रूपम् आमि तु भेदः।

६· १· ७·
### त्रेस्त्रय आमि॥ १९४॥

त्रिशब्दस्य स्थाने त्रयादेशः स्यात् आमि परे। त्रयाणाम्। द्विशब्दः द्विवचनान्तः। द्वि-औ।

६ः· १· ७·
### त्यदादीनामः सुपि॥ १९५॥

सर्वादिगणेषु उक्तानां त्यदादीनाम् अः स्यात् सुपि परे। सामान्यतः अन्तादेशः। इति इकारस्थाने अकारे कृते वृद्धौ द्वौ। एवं सर्वत्र अकारे कृते नरशब्दद्विवचनवत्। इति इकारान्ताः।

वातप्रमीशब्दः औणादिकप्रत्ययान्तः। वातप्रमीः। (६६ सू॰) यण्। वातप्रम्यौ वातप्रम्यः। अमि तु (१७० सू॰) पूर्वरूपे एकादेशे वातप्रमीम् वातप्रम्यौ। शसि तु

५ः ५ः ६· ·१·
### अनदीधातुभ्यामीदूदन्ताभ्यां शसो नुँश्* ॥ १९६॥

नदीसंज्ञकशब्दधातुवर्जाभ्याम् ईदूदन्ताभ्यां परस्य शसः स्थाने नुँश् स्यात्। उशौ इतौ। शित्त्वात् सर्वादेशः। वातप्रमीन्। वातप्रम्या इत्यादयः। आमि तु ह्रस्वनदीत्वा-

* शित्करणं प्रक्रियालाघवार्थं तदकरणे अपि आदि-स्थाने आदेशे संयोगान्त्यलोपेन साधने गौरवम्।

भावात् न नुट्। वातप्रम्याम्। ङौ तु पूर्वसवर्णदीर्घ। वात-प्रमौ। सुधीः। सुधी-औ।

७· ६:· ७· ६: १:
**अचि—श्नु धातुभ्रुवां प्रत्यये—य्वोरियँङुवँङौ ॥ १९७ ॥**

अजादौ प्रत्यये परे श्नु प्रत्ययस्य धातोः भ्रुवश्च इवर्णो-वर्णयोः स्थाने क्रमात् इयँङुवँङौ स्याताम्। अङौ इतौ। ङित्त्वात् अन्तादेशः। इति इयङि कृते सुधियौ। सुधियः इत्यादि। प्रधीः प्रधी-औ।

६· ६· ६· ६· ६· १·
**एरनेकाचोधातोरसंयोगादेरसुधियो यँः ॥ १९८ ॥**

अजादौ प्रत्यये परे अनेकाचः धातोः धात्ववयवसंयोग-पूर्वकभिन्नस्य इवर्णस्य स्थाने यँः स्यात् न तु सुधीशब्दस्य। अकारः इत्। इयङः अपवादः। अत्र सुधीति पर्य्युदासात् क्विबन्तधातोः अपि धातुत्वम् अस्ति इति गम्यते। इति ये कृते प्रध्यौ प्रध्यः प्रध्या इत्यादि। एवं सर्पभीदुर्भीप्रभृतयः। संयोगपूर्वस्य तु सुश्रियौ सुश्रियः इत्यादिषु पूर्वेण इयङ् एव। धात्ववयवेति किं दुर्धीशब्दस्य यः एव तस्य धात्ववयवमात्रेण संयोगाभावात्। शुद्धा धीः यस्य शुद्धधीः। शुद्धधी-औ इति स्थिते।

६· ६:·१· १: ७·
**अगतिकारकपूर्वकस्य य्वोर्न यवौ सुपि ॥१९९॥**

गतिसंज्ञकशब्द—कारक—पूर्वकभिन्नस्य धातोः इवर्णो-वर्णयोः स्थाने अजादौ सुपि परे यवौ न स्याताम्। किन्तु

इयङुवङौ एव। इति इयङि शुद्धधियौ शुद्धधियः। अत्र सुपि इत्युक्तेः तिङि यः एव तेन निन्यतुः। सेनां नयति इति सेनानीः प्रधीवत्, ङौ तु विशेषः।

५ः ६ १

## नद्याब्नीभ्यो ङेराम् ॥ २०० ॥

नदीसंज्ञकात् आबन्तात् नीशब्दात् च परस्य ङेः आम् स्यात्। उदित्। इति आमि सेनान्याम्। इति ईकारान्ताः। साधुः कविवत् साध्यः। साधुः साधू साधवः। हे साधो। साधुम् साधू साधून्। साधुना साधुभ्याम् साधुभिः। साधवे साधुभ्याम् साधुभ्यः। साधोः साधुभ्याम् साधुभ्यः। साधोः साध्वोः साधूनाम्। साधौ साध्वोः साधुषु। एवं मनुभानुकृशानुप्रभृतयः। इति उकारान्ताः।

खलपूः। खलपू—औ इति स्थिते।

६ ६ ६ ६ १ ७ ७

## अनेकाचो धातोरसंयोगादेरोर्वोऽचि-सुपि-

१ ६

## न भुवः ॥ २०१ ॥

अनेकाचः धातोः धात्ववयसंयोगपूर्वकभिन्नस्य उवर्णस्य स्थाने वँः स्यात् अजादौ सुपि परे न तु भुवः। अः इत्। इति वे कृते खलप्वौ खलप्वः। भुवस्तु स्वयंभुवौ स्वयंभुवः इत्यादौ उवङ् एव। अत्र अपि अगतिकारकपूर्वस्य इति निषेधात् परमलुवौ परमलुवः इत्यादौ उवङ् एव। संयोगपूर्वकस्य तु न वः किन्तु उवङ् एव अश्वप्रुवौ अश्वप्रुवः इत्यादि। सुपि इत्युक्तेः तिङि लुलुवतुः इत्यादौ न वः। वर्षाभूपुनर्भू-शब्दयोस्तु भेदः।

६: १·
## वर्षाभूपुनर्भ्वो र्वः ॥ २०२ ॥

वर्षाभूपुनर्भूशब्दयोः उवर्णस्य वः स्यात् अजादौ सुपि परे। वर्षाभ्वौ वर्षाभ्वः, पुनर्भ्वौ पुनर्भ्वः। इत्यादि। पुनर्भूः यौगिकः पुंसि। अतिचमूप्रभृतयः तु वातप्रमीवत्। किन्तु विग्रहे नदीत्वेन वृत्तौ नदीकार्य्यम् इति सिद्धान्तः, तेन ङित्सु अतिचम्वै अतिचम्वे इत्यादि, सम्बुद्धौ च अतिचमु इति भेदः। नदीकार्य्यं च स्त्रीलिङ्गे वक्ष्यते। इति ऊदन्ताः।

धातृ-स् (१८० सू·) डाभावे धाता धातृ-औ

६· १· ७:
## ऋतो गुणो ङिसर्वनामस्थानयोः ॥ २०३ ॥

ऋकारान्तस्य गुणः स्यात् ङौ सर्वनामस्थाने च परे। इति गुणे कृते।

## अप्, तृन्, स्वसृ, नप्तृ, त्वष्टृ, क्षत्तृ, प्रशा-
६:· ६· १· ७· ७·
## स्तॄणामुपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने ॥ २०४ ॥

असम्बुद्धौ सर्वनामस्थाने परे अबादीनाम् उपधायाः दीर्घः स्यात्। इति दीर्घे। धातारौ धातारः। सम्बुद्धौ गुणे कृते उपधादीर्घाभावः, रस्य विसर्गश्च। हे धातः। धातारम् धातारौ धातॄन् धात्रा धात्रे इत्यादि। ङसिङसोस्तु।

५· १· ६:
## ऋत उत् ङसिङसोः ॥ २०५ ॥

ऋदन्तात् परयोः ङसिङसोः अतः स्थाने उत् स्यात्।

ङः इत्। इति ङ्ति कृते टिलोपे च सस्य विसर्गः। धातुः धातुः धातॄणां धातरि इत्यादि।

पिता माता ननन्दा नॄ सव्येष्ठृभ्रातृयातरः।
जामाता दुहिता देवा न तृणन्ता इमे दश॥

इत्युक्तेः सर्वनामस्थाने परे एषाम् ऋतः गुणे कृते न उपधादीर्घः। तेन तत्र पितरौ पितरः इत्यादि। तत्र अपि नृशब्दस्य तु विशेषः।

६· ·१· ७·

## नुर्वा नामि दीर्घः॥ २०६॥

नामि परे नृशब्दस्य दीर्घः वा स्यात्। नॄणाम् नृणाम्। शेषं पितृवत्। इति ऋदन्ताः। गो-स् इति स्थिते।

६· ·१· ७·

## ओरौत् सर्वनामस्थाने॥ २०७॥

सर्वनामस्थाने परे ओकारान्तशब्दस्य औत् अन्तादेशः स्यात्। इति औति गौः गावौ गावः।

६· ·१· ७:

## ओत आदम्शसोः॥ २०८॥

अमि शसि च परे ओकारान्तशब्दस्य आत् अन्तादेशः स्यात्। गाम् गावौ गाः इत्यादि। ङसिङसोस्तु ( १७८ सू॰ ) अतः लोपे गोः गोः इत्यादि। इति ओकारान्ताः।

६· ·१· ७·

## राय आझलि॥ २०९॥

रैशब्दस्य आत् अन्तादेशः स्यात् झलि परे। राः। अचि तु आयादेशः। रायौ रायः राया राभ्याम् इत्यादि। इति

ऐकारान्ताः। ग्लौः। अचि आवादेशः। ग्लावौ ग्लावः इत्यादि। इति औदन्ताः।

इति अजन्तपुलिङ्गाः।

---

## अजन्तस्त्रीलिङ्गशब्दाः।

लता-स् इति स्थिते।

५:· ६· १·

### हलाबीब्भ्यः सोर्लोपः॥ २१०॥

हलन्तात् आबन्तात् ईबन्तात् च शब्दात् परस्य सोः लोपः स्यात्। इति सुलोपे लता। लता-औ।

५· १· १·

### आप औः शी:॥ २११॥

आबन्तात् परः औः शीः स्यात्। शः इत्। शित्त्वात् सर्वादेशः। इति शीभावे गुणे च कृते लते। जसि सवर्ण-दीर्घविसर्गौ लताः। सम्बुद्धौ तु।

६· ·१· ७:·

### आप एत् सम्बुद्धिटौसु॥ २१२॥

सम्बुद्धौ टौसोश्च परतः आबन्तस्य स्थाने एकारः स्यात्। अन्तादेशः। सुलोपे अपि तन्निमित्तके एकारे कृते लते। अमि पूर्वरूपे लताम्। लते। शसि तु सवर्णदीर्घविसर्गौ। लताः। लता-आ एति अयादेशे च लतया। लताभ्याम् लताभिः। लता-ए इति स्थिते।

५· ६:· ·१·

### आपो—ङितां—याट्॥ २१३॥

आबन्तात् शब्दात् परेषां ङितां स्थाने याट् स्यात्। टका-

रः इत्। टित्त्वात् आदावागमः। इति याटि वृद्धौ च लतायै लताभ्याम् लताभ्यः। ङसौ याटि सवर्णदीर्घे च लतायाः लताभ्याम् लताभ्यः। ङसि लतायाः। ओसि एति अयादेशे विसर्गे च लतयोः। आमि (१७७ सू०) नुटि लतानाम्। ङौ तु (२०० सू०) आमौ याटि सवर्णदीर्घे च लतायाम् लतयोः लतासु। एवं रमामायाप्रभृतयः आबन्ताः शब्दाः। आबन्तसर्वनाम्ना तु।

५॰ ॰१॰ १॰ ॰१॰

## सर्वनाम्नः स्याट् ह्रस्वश्च ॥ २१४ ॥

आबन्तात् सर्वनाम्नः परेषां ङितां स्थाने स्याट् स्याटि च पूर्वस्य ह्रस्वः स्यात्। टः इत्। टित्त्वात् आदावागमः। याटः अपवादः। स्याटि वृद्धौ, सर्वस्यै सर्वस्याः सर्वस्याः। आमि तु (१८० सू०) सुटि सर्वासाम्। ङौ सर्वस्याम् इत्येव भेदः। अन्यत्र लतावत्। एवं विश्वादयः। द्वितीयातृतीयाशब्दयोस्तु ङित्सु एव (१५२ सू०) विकल्पेन सर्वनामतया सर्वावत् पक्षे लतावत् च रूपम्। द्वितीयस्यै द्वितीयायै इत्यादि। उत्तरपूर्वादिशब्दाः अपि (१४७ सू०) विकल्पेन सर्वनामतया ङित्सु उत्तरपूर्वस्यै उत्तरपूर्वायै इत्यादि रूपद्वयम्। अम्बाशब्दस्य तु सम्बुद्धौ एव भेदः।

६॰ ७॰ १॰

## अम्बानदीसुभ्रुवां सम्बुद्धौ ह्रस्वः * ॥२१५॥

सम्बुद्धौ परे अम्बाशब्दस्य नदीसंज्ञकशब्दस्य सुभ्रूशब्दस्य च अन्तस्य ह्रस्वः स्यात्। सम्बुद्धिसुलोपतन्निमित्ते ह्रस्वे कृते

* अपाणिनीयम् अपि सुभ्रूशब्दग्रहणं भूरिप्रयोगानुरोधात्। तच्च विमानना सुभ्रु कुतः इत्यादि परत्र दर्शितम्।

अस्व । शेषं लतावत् । जराशब्दस्य अजादौ (१८२सू०) पक्षे असुङि जरसौ जरसम् जरसौ जरसः इत्यादि, पक्षे हलादौ च लतावत् । इति आबन्ताः । विश्वपादयः तु पुंवत् । मतिशब्दः कविशब्दवत् किन्तु स्त्रीत्वात् शसः स्थाने न न, टास्थाने च न ना । मतीः मत्या । ङित्सु तु नदीत्वपक्षे मति-ए इति स्थिते ।

५· ६:· ·१·

## नद्या ङितामाट् ॥ २१६ ॥

नदीसंज्ञकशब्दात् परेषां ङितां स्थाने आट् स्यात् । टः इत् । टित्वात् आदावागमः । इति आटि वृद्धौ यणि च कृते मत्यै, नदीत्वाभावपक्षे घित्वात् कविवत्, मतये । ङसि-ङसोस्तु नदीत्वपक्षे आटि सवर्णदीर्घे यणि च कृते, मत्याः मत्याः ङौ तु आमौ आटि यणि च कृते, मत्याम् । पक्षे घित्वात् कविवत्, मतेः मतेः मतौ । एवं श्रुतिस्मृतिबुद्धिप्रभृतयः । त्रिशब्दस्य तु ।

७· ६: ·१· ७· ·१·

## स्त्रियां त्रिचतुरोस्तिसृचतसृ सुपि न गुण-दीर्घौ ॥ २१७ ॥

१:

स्त्रियां वर्त्तमानयोः त्रिचतुरोः स्थाने क्रमात् तिसृ, चतसृ इति आदेशः स्यात् सुपि परे । तयोश्च निमित्ते सति न गुण-दीर्घौ स्याताम् । तिस्रः तिस्रः तिसृभिः तिसृभ्यः तिसृभ्यः तिसृणां तिसृषु । इति इकारान्ताः ।

नदीशब्दस्य सुलोपे नदी । यणि नद्यौ नद्यः । सम्बुद्धौ ह्रस्वे नदीत्वेन घित्वाभावात् न गुणः, हे नदि । अमि पूर्व-

रूपे। नदीम्। नद्यौ। नदीत्वात् न नुम् दीर्घविसर्गौ
नदीः। यणि नद्या। ङित्सु नित्यनदीत्वात् आटि, नद्यै
नद्याः नद्याः नद्याम् इत्यादि एवं वाणीभवानीसरस्वतीप्रभृतयः
ईबन्ताः। वातप्रमीशब्दस्तु पुंवत्। लक्ष्मीप्रभृतयः औणा-
दिकप्रत्ययान्ताः नित्यस्त्रीलिङ्गाः न ईबन्ताः, तेन तत्र न
सुलोपः। लक्ष्मीः। एवं तरीः तन्त्रीः। एतेषां सौ एव भेदः।
अन्यत्र नदीवत्। स्त्रीशब्दस्य तु नदीत्वात् ह्रस्वः। हे स्त्रि,
अजादौ तु भेदः।

६॰ १॰ ७॰ ७॰ ॰१॰ ॰१॰ ७ः

स्त्रिया इयँङाच सुपि वा त्वमृशसोः ॥२१८॥

स्त्रीशब्दस्य इयँङ् स्यात् अजादौ सुपि परे अमि शसि
तु वा स्यात्। अङौ इतौ। ङित्त्वात् अन्तादेशः। स्त्रियौ
स्त्रियः। अमि तु स्त्रियम् स्त्रीम्। स्त्रियौ, शसि स्त्रियः स्त्रीः।
स्त्रिया। ङित्सु नित्यनदीत्वात् स्त्रियै स्त्रियाः स्त्रियाः स्त्रियाम्
इत्येव रूपाणि। आमि तु नित्यनदीत्वात् नुट् एव, स्त्रीणाम्।
श्रीधीह्रीभीशब्दास्तु क्विबन्ताः धातवः न ईबन्ताः, तेन न
सुलोपः। श्रीः। इयङ्स्थानित्वेन नदीत्वाभावेन सम्बुद्धौ
न ह्रस्वः। हे श्रीः। (१८७ सू०) अजादौ तु इयङ्। श्रियौ
श्रियः इत्यादि। ङित्सु विकल्पेन (१४२ सू०) नदीत्वेन
नदीत्वपक्षे आटि वृद्धौ इयङि च कृते, श्रियै श्रियाः श्रियाः
इति पक्षे इयङ्मात्रे, श्रिये श्रियः श्रियः इति च रूपाणि।
आमि च (१४१ सू०) विकल्पेन नदीत्वात् नदीत्वपक्षे
नुटि श्रीणाम्। पक्षे इयङि श्रियाम्। ङौ तु नदीपक्षे आमौ
आटि च, श्रियाम्। पक्षे श्रियि इति भेदः। एवं धीह्रीभीप्रभृ-
तयः। सुष्ठु धीः यस्याः सा सुष्ठु ध्यायति या वा इति वाक्ये

सुधीः स्त्रीवत् एव। सेनानीशब्दस्तु पुंवत् एव। इति ईकारान्ताः।

धेनुः मतिवत् साध्यः। धेनुः धेनू धेनवः इत्यादि। धेन्वै धेनवे इत्यादि च। एवं तनुचञ्चुप्रभृतयः। गुरुलघुप्रभृतयस्तु न नित्यस्त्रीलिङ्गाः, तेन स्त्रियाम् अपि ग्रसटाभिन्ने साधुवत्। इति उकारान्ताः।

वधूः गौरीवत् साध्यः। गौ एव भेदः। वधूः। वध्वौ वध्वः इत्यादि। भ्रूः श्रीवत्। (१८७ सू०) उवङि भ्रुवौ भ्रुवः। सम्बुद्धौ हे भ्रूः इत्येव। सुभ्रूशब्दस्य तु (२१५सू०) ह्रस्वः हे सुभ्रु। विमानना सुभ्रु कुतः पितुर्गृहे इति कुमारः। ङित्सु भ्रुवे भ्रुवः इत्यादि एकैकम् एव रूपम्। एवं भूप्रभृतयः। खलपूः पुंवत्। वर्षाभूपुनर्भ्वौ अपि पुंवत्। उवङः स्थानित्वाभावेन न नदीत्वनिषेधः, तेन ह्रस्वे हे पुनर्भु। हे वर्षाभु। आमि ङित्सु च नित्यं नदीकार्य्यम्। तत्र आमि नदीत्वेन नुटि कृते।

७·

पूर्वपदस्थान्निमित्तादेकाच्सकवर्गोत्तरपदे
६· ६· १·
नामान्तनुम्विभक्तिस्थस्य नो णोऽड्वादिव्यवधा-
७· ·१· ७· ·१· ·१·
नेऽपि अन्योत्तरपदे तु वा ॥ २१९ ॥

एकाच् सकवर्गं च उत्तरपदं यस्मिन् तस्मिन् समासोत्तरपदे पूर्वपदस्थेभ्यः ऋरषेभ्यः परस्य प्रातिपदिकान्त-नुम्-विभक्ति-स्थस्य नस्य णः स्यात् अट्कवर्गपवर्गानुस्वारव्यवधाने अपि। तद्भिन्नोत्तरपदे तु वा स्यात्। अकारः इत्। इति

षत्वे पुनर्भूषाम्। वर्षाभूषाम्। अन्यत्र समानम्। स्वयंभूः भ्रूश्च पुंवत्। इति ऊकारान्ताः।

स्वसृ—स् इति स्थिते। सोः डाभावे स्वसा। सर्वनामस्थाने परे तु (२०३ सू०) गुणे उपधादीर्घे स्वसारौ स्वसारः स्वसारं स्वसारौ स्वसॄः स्वस्रा इत्यादि। मातृदुहितृयातृननान्दृप्रभृतयः पितृवत्। माता मातरौ मातरः इत्यादि किन्तु शसः न नः, तेन मातॄः इत्यादिभेदः। इति ऋकारान्ताः। द्योशब्दः गोवत्। द्यौः द्यावौ द्यावः द्याम् द्यावौ द्याः द्यवा इत्यादि। इति ओदन्ताः। नौः ग्लौवत्। नौः नावौ नावः नावा इत्यादि। इति औदन्ताः।

इति अजन्तस्त्रीलिङ्गप्रकरणम्।

---

## अजन्तक्लीवलिङ्गाः।

ज्ञान—सु इति स्थिते।

५· ५· ६: ·१·

### अतः क्लीवात् स्वमोर्मुँश्* ॥ २२० ॥

अकारान्तात् क्लीवात् परयोः स्वमोः स्थाने मुँश् स्यात्। उशौ इतौ। शित्त्वात् सर्वादेशः। ज्ञानम्। सम्बुद्धौ तु (१६८ सू०) तल्लोपे, हे ज्ञान। ज्ञान—औ इति स्थिते।

---

* मुँशः शित्करणं लाघवार्थम्। अमः आदिस्थाने आदेशे अपि संयोगान्तलोपेन रूपसिद्धेः। एतत् च सूत्रम् असम्बुद्धिविषये चरितार्थतया न सम्बुद्धिविषयम्। अपवादः यदि अन्यत्र चरितार्थः, तदा तस्य बाधकत्वाभावसिद्धान्तात्।

५॰ १॰ १॰
क्लीवात्—दौः शीः ॥ २२१ ॥

सर्वक्लीवलिङ्गशब्दात् परः औः शोः स्यात्। शः इत्। तेन सर्वादेशः। क्लीवात् इति अनुवृत्तौ पुनर्ग्रहणं सर्वक्लीवप्राप्त्यर्थम्। इति ज्ञानं ज्ञाने। ज्ञान-अम्।

६ः १॰
जस्शसोः शिः ॥ २२२ ॥

सर्वक्लीवात् परयोः जसः शसश्च स्थाने शिः स्यात्। शः इत् सर्वनामस्थानसंज्ञार्थः। सर्वादेशः।

६॰ ६॰ ७॰ ७॰
क्लीवस्य झलचो नुँम् शौ ॥ २२३ ॥

शौ परे झलन्तस्य अजन्तस्य च सर्वक्लीवलिङ्गस्य नुँम् स्यात्। उमौ इति। मित्त्वात् अन्त्यात् अचः पर आगमः। इति नुमि कृते।

६॰ १॰ ७॰ ७॰
नान्तस्योपधादीर्घोऽसम्बुद्धौ सर्वनामस्थाने ॥ २२४ ॥

नान्तस्य उपधायाः दीर्घः स्यात् असम्बुद्धौ सर्वनामस्थाने परे। असम्बुद्धौ इति पर्य्युदासात् लिङ्गान्तरे अपि। अन्यथा क्लीवे शिमात्रस्य एव सर्वनामस्थानतया सम्बुद्धेः अप्रसक्तेः पर्य्युदासभ्भवात्। इति उपधादीर्घे, ज्ञानानि। द्वितीया प्रथमावत्। शेषं नरवत्। एवं फलधनवनादयः अकारान्ताः। सर्वनाम्नां तु जसि लिङ्गविहितकार्य्यस्य बलवत्त्वेन शीभावं बाधित्वा शिः एव, तेन सर्वाणि इत्यादि। डेप्रभृतिषु तु पुंवत् एव। तत्र कतरादौ विशेषः।

५ः ५ः ५ः ६ः १ १
क्लीवेभ्यो डतरादिभ्यः पञ्चभ्यः स्वमोर्डत् न
१ ५
त्वेकतरात् ॥ २२५ ॥

डतरप्रत्ययन्तादिभ्यः सर्वनामगणपठितेभ्यः पञ्चभ्यः क्लीवलिङ्गस्थेभ्यः परयोः स्वमोः स्थाने डत् स्यात् न तु एकतरात्। डः इत्। डित्त्वात् टिलोपः। कतरत्, कतमत्, अन्यत्, अन्यतरत्, इतरत्। एकतरस्य तु एकतरम्। एकतमस्य तु स्यात् एव एकतमत्। सम्बुद्धौ अपि अयम् आदेशः ईष्यते। हे कतरत् इत्यादि। अजरशब्दस्य तु अजादौ असुङि, पक्षे तदभावे च रूपद्वयम्। अजरसौ अजरे। जसि तु शिभावे असुङादेशे झलन्ततया नुमि कृते अजरन्स् इति स्थिते।

६ः १ १ ७
न्सन्तमहतोर्न उपधादीर्घोऽसम्बुद्धौ सर्व-
७
नामस्थाने ॥ २२६ ॥

न्स् इत्यन्तस्य महतश्च यः नकारः तस्य उपधायाः दीर्घः स्यात् असम्बुद्धौ सर्वनामस्थाने परे। अत्र अपि असम्बुद्धौ इत्युक्तेः सर्वलिङ्गविषयता। अजरांसि। पुनः तद्वत्। शेषं पुंवत्। इति अकारान्ताः।

विश्वपा-स् इति स्थिते।

७ ६ १
क्लीवे प्रातिपदिकस्य ह्रस्वः* ॥ २२७ ॥

---

* अचः इति अनुक्तौ अपि ह्रस्वदीर्घौ अचः स्थाने इत्यनेन लाभात् वृत्तौ अचः इत्युक्तम्।

क्लीबे स्थितस्य प्रातिपदिकस्य अजन्तस्य ह्रस्वः स्यात्। तत्र अपि एकस्थानत्वेन (१५८ सू०) एदैतोः स्थाने इः, ओदौतोश्च उः। इति ह्रस्वे ज्ञानवत् टादावचि आकारान्तत्वात् न अतः लोपः। इति आकारान्ताः।

वारि-स् इति स्थिते।

५· ६: ·१·

## क्लीबात्—स्वमोर्लुक् ॥ २२८ ॥

सर्वक्लीबलिङ्गात् परयोः स्वमोः लुक् स्यात्। अकारान्तात् तु मुमभावः अस्य अपवादः। वारि। वारि-औ औभावे।

६· ·१· ७· ७·

## इको नुमचि सुपि ॥ २२९ ॥

इगन्तस्य क्लीबस्य नुमागमः स्यात् अजादौ सुपि परे। उमौ इतौ। इति नुमि णत्वे च वारिणी वारीणि।

६· ६· १· ·१· ७·

## क्लीबस्येको गुणो वा सम्बुद्धौ * ॥ २३० ॥

सम्बुद्धौ परे इगन्तस्य क्लीबस्य गुणः स्यात् वा। हे वारे हे वारि। नागुणवृद्धीत्वानि बाधित्वा नुमिति सिद्धान्तात् न गुणादि। तेन वारिणे वारिणा वारिणः वारिणः। आमि तु नुट् एव आदौ नुमः गुणादेः एव बाधकत्वात्, तेन नुटि (१७१ सू०) दीर्घः। वारीणाम्। वारिणि। शेषं कविवत्। ये शब्दाः इगन्ताः क्लीबलिङ्गाः पुंलिङ्गाश्च तेषु क्वचित् विशेषः। सुधीशब्दस्य क्लीबे ह्रस्वे सुधि सुधिनी सुधीनि। पुनः तद्वत्।

---

* इकः ग्रहणं स्पष्टार्थम्। अदेङ्गुणः स चेक इति परिभाषया एव तस्य लाभात्।

१॰ १॰ ७॰ ॰१॰ ७॰ ७॰
उक्तपुंस्कमिगन्तं क्लीबे पुंवत् तृतीयादावचि
॥ २३१ ॥

अजादौ तृतीयादौ परे एकस्मिन् अर्थे पुंलिङ्गवाचकम् इगन्तं क्लीबे वर्त्तमानं पुंवत् कार्य्यं वा भजते। इति पुंवत्पक्षे दीर्घभावात् इयङि सुधिया। पक्षे क्लीबत्वेन ह्रस्वतया नाभावः। ङेपरे पुंवत्पक्षे इयङि सुधिये। पक्षे सुधिने इत्यादि। एकस्मिन् अर्थे इत्युक्तेः विभिन्नार्थे पुंलिङ्गबोधकत्वे न, यथा मधुशब्दः वसन्तचैत्रवाची पुंलिङ्गः, चौद्रवाची तु क्लीबलिङ्गः, तस्य अर्थभेदात् न पुवद्भावः। उक्तपुंस्कं किं वारिशब्दस्य मा भूत्। एवम् अनादिशुचिप्रभृतयः। तत्र पुंवत्पक्षे कविशब्दवत् इति भेदः। दधि-आ इति स्थिते।

६ः॰ ॰१॰ ७॰ ७॰
दध्यस्थिसक्थ्यक्ष्णामनँङचि तृतीयादौ ॥२३२॥

दधि, अस्थि, सक्थि, अक्षि इत्येषां शब्दानाम् अनङ् अन्तादेशः स्यात् अजादौ तृतीयादौ सुपि परे। अङौ इतौ। इति अनङि।

५॰ ६॰ १॰ ६॰ ७ः ॰१॰
अवमन्तसंयोगादनोऽल्लोपो भस्य ङिश्योस्तु
॰१॰
वा ॥२३३ ॥

वमन्तसंयोगभिन्नात् परस्य भसंज्ञकस्य अनन्तस्य अकारस्य लोपः स्यात् ङौ श्यां च परतः तु वा स्यात्। अत्र अन् निरर्थकः अपि गृह्यते अनिनस्मन् इत्येतानि निरर्थकानि अपि

ऽस्थ्यन्ते इति सिद्धान्तात्। इति अकारलोपे। दध्ना दध्ने दध्नः दध्नोः दध्नाम्। ङौ तु दध्नि दधनि इत्यादि। एवम् अस्थ्यादयः। इति इकारान्ताः। मधु मधुनी मधूनि। पुनः तद्वत्। हे मधो हे मधु। शेषं वारिवत् नुमादि। एवम् अम्बुप्रभृतयः। तनुलघुगुरुप्रभृतयस्तु पुंवाचकाः अपि, तेन तत्र तृतीयाद्यचि पक्षे पुवद्रूपम्। तनवे तनुने इत्यादि। सुलुशब्दस्य तु सुलुना सुल्वा इत्यादौ स्वयम्भुशब्दस्य स्वयम्भुवा स्वयम्भुना इत्यादौ च भेदः। इति उदन्ताः। ज्ञातृ ज्ञातृणी ज्ञातॄणि। पुनः तद्वत्। ज्ञात्रा ज्ञातृणा ज्ञात्रे ज्ञातृणे ज्ञातुः ज्ञातृणः इत्यादि। एवं धातृकर्तृप्रभृतयः। इति ऋकारान्ताः। क्लीवे ओकारान्तादिशब्दानां ह्रस्वादेशे इगन्तवत् रूपं, किन्तु तेषाम् उक्तपुंस्कत्वे अपि न पुंवत् इगन्ताङ्गस्य एव पुंवद्भावविधानात्।

इति अजन्तक्लीवलिङ्गाः।

## हलन्तपुंलिङ्गाः।

मधुलिह्—स् इति स्थिते (२१७ सू०) सुलोपे।

६· १· ७· ८· ·१·

### हो—ढोँ झलि—पदान्ते—च ॥ २३४ ॥

झलि परे पदान्ते च हस्य ढः स्यात्। अः इत्। इति पदान्ततया हस्य ढत्वे तस्य च जश्चरौ मधुलिड् मधुलिट्। मधुलिहौ। मधुलिहः। मधुलिहम्। मधुलिहौ मधुलिहः। मधुलिहा। मधुलिड्भ्याम् मधुलिट्सु। गोदुह्—स् इति स्थिते सुलोपे।

६· ६· १· ·१· ·१·
दादेर्धातो—र्घो वा तु द्रुहमुहष्णुहष्णिहाम् ॥ २३५ ॥
६:·

झलि परे पदान्ते च दकारादेः धातोः हस्य घः स्यात्। द्रुहादीनां तु वा घः अन्तादेशः स्यात्। अः इत्। इति हस्य घे कृते।

६· ६· ६· ·१· ७: ८· ·१·
एकाचो झषन्तस्य बशो भष् स्ध्वयोरन्ते च ॥ २३६ ॥

धातोः अवयवः यः एकाच् झषन्तः, तदवयवस्य बशः स्थाने भष् स्यात् सकारे ध्वशब्दे च परे पदान्ते च। इति दस्य धत्वे घस्य जश्चरौ। गोधुग् गोधुक् गोदुहौ गोदुहः। गोदुहम्। (१३४ सू०) पदान्तत्वेन भ्यामादौ घत्वभष्भावे गोधुग्भ्याम् गोधुक्षु। मित्रद्रुहः तु सुलोपे हस्य घत्वे पक्षे ढत्वे भष्भावे च तयोः जश्चरौ। मित्रध्रुग् मित्रध्रुक्। मित्रध्रुड् मित्रध्रुट्। मित्रध्रुग्भ्याम् मित्रध्रुड्भ्याम्। मित्रध्रुक्षु मित्रध्रुट्सु। एवं मुहष्णुहष्णिहाम्। विश्ववाहादिशब्दानां शसादौ अचि तु।

६· ·१· ६· १·
वाह ऊठ् भस्य संप्रसारणम् ॥ २३७ ॥

भसंज्ञकस्य वाहान्तस्य सम्प्रसारणरूपम् ऊठ् स्यात्। इति व् इत्वस्य सम्प्रसारणरूपे ऊठि कृते।

६· ७· १· ·१·
संप्रसारणस्याचि पूर्वरूपः सह ॥ २३८ ॥

अचि परे सम्प्रसारणस्य पूर्वरूपः सह ( पूर्वपरयोः एकादेशः ) स्यात् । इति एकादेशे ( ७६ सू० ) वृद्धिः । विश्वौहः विश्वौहा इत्यादि । शेषं मधुलिड्वत् । एवं भारवाहादिरूपम् । वारिवाहस्तु ऊठि वार्य्यूहः इत्यादि । अनडुह्—स् इति स्थिते सुलोपे ।

६: १ ७ ७

**चतुरनडुहोराम् सर्वनामस्थाने सम्बुद्धौ**

१

**त्वम् ॥ २३९ ॥**

सर्वनामस्थाने परे चतुर्शब्दस्य अनडुह्शब्दस्य च आम् स्यात् सम्बुद्धौ त्वम् । मः इत् । मित्त्वात् अन्त्यादचः परः । इति आमि यणि च कृते ।

७ ६ १

**सावनडुहो नुम् ॥ २४० ॥**

सौ परे अनडुह् इत्यस्य नुम् स्यात् । उमौ इतौ । मित्त्वात् अन्त्यात् अचः परः इति नुमि ।

६ १

**संयोगान्तपदस्य लोपः ॥ २४१ ॥**

संयोगान्तं यत् पदं तस्य अन्तस्य लोपः स्यात् । इति अन्तहलोपे तस्य असिद्धवद्भावात् न प्रातिपदिकान्तनलोपः । अनड्वान् अनड्वाहौ अनड्वाहः । अनड्वाहम् । अनड्वाहौ अनडुहः । अनडुहा ।

६ १ ७

**सान्तवसुस्रंसुध्वंस्वनडुहां दः पदान्ते ॥ २४२ ॥**

पदान्ते स्थितानाम् एषां ढः अन्तादेशः स्यात्। मान्त-त्युक्तेः विद्वान् इत्यादौ संयोगान्तस्य लोपे न। इति हस्य ढत्वे अनडुद्भ्याम्। अनडुत्सु। शेषं मधुलिड्वत्। तुरासाहस्तु।

६· ६· ६· १·
**सहेः साडः सस्य षँः॥ २४३॥**

साड् इत्येवंरूपस्य सहेः सस्य षँः स्यात्। अकारः इत्। तुराषाड् तुराषाट्। साड्रूपेत्युक्तेः डत्वाभावे न। तुरासाहौ तुरासाहः तुराषाड्भ्याम् इत्यादि। इति हान्ताः। चतुर्शब्दः बहुवचनान्तः। जसि (२३८ सू०) आमि यणि च कृते चत्वारः चतुरः चतुर्भिः चतुर्भ्यः चतुर्भ्यः।

५ः· ·१· ६·
**षट्चतुर्भ्यो नुँडामः॥ २४४॥**

षट्संज्ञकात् चतुर् इति शब्दात् च परस्य आमः स्थाने नुँडागमः स्यात्। उटौ इतौ। इति नुटि णत्वे च चतुर्णाम्।

६· ·१· ७· १·
**रोरेव सुपि विसर्गः॥ २४५॥**

सप्तमीबहुवचने परे रोः स्थाने एव विसर्गः न अन्य-रेफस्य। इति न विसर्गः। षत्वे चतुर्षु। इति रान्तः। प्रशाम्-शब्दस्य सुलोपे।

७· ७ः ·१·
**मो नोँ धातोः पदान्ते मवयोश्च॥ २४६॥**

धातोः मस्य नँः स्यात् पदान्ते मकारे वकारे च परे। अः इत्। इति मस्य नत्वे प्रशान्। प्रशामौ। भ्यामादौ (१२४ सू०) पदान्तत्वात् प्रशान्भ्याम् इत्यादि। किम्शब्दस्य।

६· १· ७·
## किमः को विभक्तौ ॥ २४७ ॥

विभक्तौ परे किम्शब्दस्य स्थाने कः इति आदेशः स्यात्। इति कादेशे कः कौ के इत्यादि सर्ववत्। इदम्-स् इति स्थिते त्यदाद्यत्वे।

६· ७· १· ·१·
## अतो गुणे पररूपः सह ॥ २४८ ॥

गुणसंज्ञकवर्णे परे अकारान्तस्य पररूपः सह (पूर्वपरयोः एकादेशः) स्यात्। इति पररूपैकादेशे।

६· ६· १: ७: ७·
## इदम—इदस्यायमियमौ पुंस्त्रियोः सौ * ॥ २४९ ॥

इदम् शब्दस्य इदभागस्य स्थाने पुंसि अयम् स्त्रियां च इयम् इति आदेशः स्यात् सौ परे। इति इदभागस्य स्थाने पुंसि अयम् आदेशे हल्परत्वात् सुपोपे अयम्। औप्रभृतिषु सर्वत्र त्यदाद्यत्वे पररूपे।

१· १· ७·
## दो मो विभक्तौ ॥ २५० ॥

विभक्तौ परे इदमः दस्य मः स्यात्। इति दस्य मत्वे इमौ इमे सर्वनामकर्म।

६· १· ७:
## इदस्या—नः टौसोः ॥ २५१ ॥

* अयमियमोः न मित्त्वं मित्कार्य्यस्य अन्त्याचः परत्व आदेशस्य अत्र असम्भवात् अनेकवर्णतया च तयोः सर्वादेश-त्वात्।

टौसोः परयोः इदस्य स्थाने अनः इति आदेशः स्यात्। सर्व्वादेशः। इति अनादेशे टास्थाने इने कृते अनेन।

७ः
अश् सभोः ॥ २५२ ॥

सभयोः परयोः इदस्य स्थाने अश् स्यात्। शित्त्वात् सर्व्वादेशः। इति इदस्य स्थाने अशि कृते (१७५ सू०) दीर्घे आभ्याम्। भिसि तु। अशि।

५ः ६· ·१··१·
इदमदोभ्यां भिसो नैस् ॥ २५३ ॥

इदमः अदसश्च परस्य भिसः स्थाने ऐस् न स्यात्। इति ऐसः निषेधे (१७६ सू०) एत्त्वे विसर्गे च एभिः। ङेविभक्तौ ङेस्थाने स्मैभावे से परे इदस्य अशि अस्मै। एवम् अस्मात् अस्य। अनादेशे अनयोः आमि तु सुटि सकारे परे इदस्य अशादेशे एत्त्वे च एषाम्। अस्मिन् अनयोः एषु। अन्वादेशे तु।

६ः ७· ७ः· १·
इदेतयोरन्वादेशे द्वितीयाटोःस्वेनः ॥२५४॥

किञ्चित् कार्य्यं विधातुम् उक्तस्य कार्य्यान्तरं विधातुं पुनः उपादानम् अन्वादेशः, तस्मिन् विषये द्वितीया, टा, ओस्, इत्येषु परेषु इदेतयोः स्थाने एनः स्यात्। अनेन व्याकरणम् अधीतम् एनं काव्यम् अध्यापय। एवम् एनौ एनान्। अनेन एनयोः। इति मान्ताः। राजन्शब्दस्य सुलोपे (२२४ सू०) उपधादीर्घे।

६· ६· ६· ·१· ७·
पदान्तस्य प्रातिपदिकस्य नो लुबसम्बुद्धौ * ॥ २५५ ॥

पदान्तस्य प्रातिपदिकस्य न इत्यस्य लुप् स्यात्, सम्बुद्धौ तु न। इति नलुपि राजा। राजानौ राजानः। हे राजन्। राजानम्। राजानौ। असार्वचि तु (२३३ सू०) अल्लोपे चुत्वे राज्ञः राज्ञा। भ्यामादौ तु पदान्तत्वात् नलुपि राजभ्याम् इत्यादि। अत्र (१५८ सू०) नलुपः असिद्धत्वात् न दीर्घादि। ङौ तु राज्ञि राजनि। एवं यज्वन्ब्रह्मन्प्रभृतयः। असार्वचि तु यज्वनः ब्रह्मणः। इनन्तादेः तु।

६: ७· ७· ·१· १·
इन्हन्पूषार्य्यमृणां सौ शौ चोपधादीर्घः ॥ २५६ ॥

सौ शौ च परे एषाम् उपधायाः दीर्घः स्यात्, न अन्यत्र। ज्ञानी ज्ञानिनौ। धनी धनिनौ। निरर्थकस्य अपि इनः ग्रहणात् यशस्वी यशस्विनौ। वाग्मी वाग्मिनौ इत्यादि। वृत्रहन् वृत्रहा। (२१८ सू०) णत्वे वृत्रहणौ। असार्वचि तु अल्लोपे वृत्रघ्न इति स्थिते।

६· १· १· ६· ·१· १·
हनो घ्नो घस्तस्य न णत्वम् ॥ २५७ ॥

हन् इत्यस्य स्थानजातस्य घ्नः इत्यस्य स्थाने घः आदेशः स्यात्। तस्य च णत्वहेतौ न णत्वम्। हनः इति सार्थकस्य

---

* प्रातिपदिकस्य इत्युक्त्या पचेरन् अभवन् इत्यादौ न नलोपः, तयोः पदान्तत्वे अपि प्रातिपदिकत्वाभावात्।

ग्रहणात् अहनः स्थाने जातस्य ऋस्य न प्रादेशः। इति न्ने।
वृत्रघ्नः वृत्रघ्ना वृत्रहभ्याम् इत्यादि। एवम् अर्य्यमा अर्य्यमणौ।
ङौ तु अर्य्यमणि अर्य्यमणि। पूषा पूषणौ। पूष्णि पूषणि
इत्यादि। मघवन्शब्दः तु नान्तः, तस्य सुटि हलि च राज-
वत्। मघवा मघवानौ मघवभ्याम् इत्यादि। शसादौ अचि
तु।

६:· ७· ७· ७· १·
श्वन्युवन्मघोनां शसादावचीपि च संप्रसा-
·१·
रणम् ॥ २५८ ॥

श्वन् युवन् मघवन् इत्येतेषां सम्प्रसारणं स्यात् शसादा-
वचि ईपि च परे। इति व् इत्यस्य सम्प्रसारणे अकारेण सह
( २३८ सू० ) पूर्वरूपैकादेशे, गुणे, मघोनः मघोना इत्यादि।
एवं शुनः शुना। यूनः यूना इत्यादि। अर्वा। अन्यत्र।

६· १· ७· ७·
अर्वणस्तृँ सुप्यसौ ॥ २५९ ॥
असौ सुपि परे अर्वन् शब्दस्य स्थाने तृँ इत्यन्तादेशः
स्यात्। ऋकारः इत्। इति त्रादेशे।

६:· ·१· ७· ६·
उगिदचां नुँम् सर्वनामस्थानेऽधातोः ॥२६०॥
अधातोः उक्संज्ञकवर्णेतः नलोपिनः अञ्चतेः च नुँम्
स्यात् सर्वनामस्थाने परे। उमौ इतौ। मित्त्वात् अन्त्यात्
अचः परः। अञ्चतेः पृथग्ग्रहणात् धातोः चेत् उगित्कार्य्यं,
तर्हि अञ्चतेः एव, तेन स्रनसु ध्वनसु प्रभृतेः उतः इत्वे अपि
न नुम्। इति ऋकारेत्त्वात् नुमि अनुस्वारसवर्णौ सवर्णतया

ऽऽनमस्य च न णत्वम् । अर्वन्तौ अर्वन्तः इत्यादि । अर्वतः अर्वता अर्वद्भ्याम् इत्यादि । पथिन्-स् इति स्थिते ।

६:· ·१· ७·

पथिमथ्यृभुक्षा—मा—त् सौ ॥ २६१ ॥

पथिन् मथिन् ऋभुक्षिन् इत्येषाम् आत् अन्तादेशः स्यात् सौ परे । इति स्वरादेशत्वात् सुलोपं बाधित्वा न् इत्यस्य आत्वे ।

६· १· ७·

इतोऽत् सर्वनामस्थाने— ॥ २६२ ॥

पथ्यादीनाम् इतः अत् स्यात् सर्वनामस्थाने परे । इति इकारस्य अति ।

६: ६· १·

पथिमथोस्थो न्थः ॥ २६३ ॥

पथिमथोः थस्य न्थादेशः स्यात् सर्वनामस्थाने परे । इति थस्य न्थादेशे विसर्गः पन्थाः । हे पन्थाः । औप्रभृतिषु तु इतः अति थस्य न्थादेशे नान्ततया उपधादीर्घे च पन्थानौ पन्थानः । शसादौ अचि तु ।

६:· ६:· ६· १·

पथ्यादीनां भानां टेर्लोपः ॥ २६४ ॥

भसंज्ञकानां पथ्यादीनां टेः लोपः स्यात् । इति टिलोपे पथः पथा । भ्यामादौ पदान्ततया ( २५५ सू० ) नलुपि पथिभ्याम् इत्यादि । एवं मन्थाः । ऋभुक्षः तु न्थादेशं विना पथिवत् कार्य्यम् । पञ्चन्शब्दः बहुवचनान्तः ( १८३ सू० ) जस्शसोः लुकि पञ्च, पञ्च, पञ्चभिः पञ्चभ्यः (२४४ सू०) नुटि ।

६· १· ७·

**नान्तस्योपधादीर्घो नामि ॥ २६५ ॥**

नामि परे नान्तस्य उपधायाः दीर्घः स्यात्। इति दीर्घे (१३४ मू० ) पदान्ततया नलुपि पञ्चानाम् पञ्चसु।

अष्टन्शब्दः बहुवचनान्तः।

६· ·१· ·१· ७·

**अष्टन आ वा सुपि ॥ २६६ ॥**

सुपि परे अष्टन्शब्दस्य आ अन्तादेशः वा स्यात्। इति आकारादेशे।

५ः· ६ः ·१·

**अष्टाभ्यः जस्शसोरौश् ॥ २६७ ॥**

कृताकारात् अष्टन्शब्दात् परयोः जस्शसोः स्थाने औश् स्यात्। शः इत्। शित्त्वात् सर्वादेशः। इति औशि कृते अष्टौ अष्टौ। आकाराभावपक्षे ( १८३ मू० ) लुकि अष्ट अष्ट। अष्टाभिः अष्टभिः। अष्टाभ्यः अष्टभ्यः। अष्टानाम् अष्टासु अष्टसु। इति नान्ताः। ऋत्विजः सुलोपे।

६ः·

**क्विबन्तानां स्पृगृत्विग्दधृक्स्रग्दिगुष्णिगञ्चु-**

६ः· ६ः ·१· १· ७·

**क्रुञ्चां क्विबन्तास्युयुज्योश्च कुँः पदान्ते * ॥२६८॥**

पदान्ते स्थितानाम् एषां कुँरन्तादेशः स्यात्। उकारः

---

* चोः कुः इति अग्रिमसूत्रेण एव अञ्चुयुजक्रुञ्चां कुत्वसम्भवे पुनः अत्र पृथग्ग्रहणम् अन्यस्य संयुक्तचवर्गान्तस्य लोपात् आदौ न कुत्वम् इति ज्ञापयति। तेन खञ्ज् खन् भनज् भन् इत्यादि।

दत्। इति कुत्वे जश्चरौ ऋत्विग् ऋत्विक् ऋत्विजौ ऋत्विग्भ्याम् इत्यादि। युजेः तु।

६· ७· ·१· ७·

## युजेरसमासे नुँम् सर्वनामस्थाने ॥२६९॥

सर्वनामस्थाने परे युजेः असमासे नुँम् स्यात्। उभौ इतौ। मित्त्वात् अन्त्याचः परः। इति नुमि। अनुस्वारसवर्णौ युङ् युञ्जौ युञ्जः। समासे तु सुयुक् सुयुग्। सुखभाज् सुलोपे।

६· १· ७· ७· ·१·

## चोः कुर्झलि पदान्ते च ॥ २७० ॥

झलि परे पदान्ते च स्थितस्य चवर्गस्य स्थाने कवर्गः स्यात्। इति जस्य कुत्वेन गत्वे जश्चरौ सुखभाग् सुखभाक् सुखभाजौ सुखभाग्भ्याम् इत्यादि। राजशब्दस्य सुलोपे।

## व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छान्तशान्तां

६·· १· ७· ७· ·१· ६· ·१· ७·

## नां षोँ झलि पदान्ते च परिव्राजस्तु पदान्ते ॥ २७१ ॥

व्रश्चादीनां सप्तानां छान्तस्य शान्तस्य च षँः अन्तादेशः स्यात्। झलि पदान्ते च परिव्राजः तु पदान्ते। अः इत्। इति जस्य षत्वे।

६· १· ७·

## षो डः पदान्ते * ॥ २७२ ॥

---

* पदान्ते जश्चरौ इत्यनेन जश्पक्षे रूपसिद्धौ अपि चर्पक्षे षः स्थाने सौसादृश्यात् षः एव स्यात्, न तु टः इति तत्र डत्वविधानार्थं सूत्रम्।

षस्य डँः स्यात् पदान्ते। अः अत्। चरः अपवादः। इति षस्य डत्वे जश्चरौ राड् राट् राजौ राजः। राड्भ्याम् इत्यादि। एवं विश्वसृट् परिमृड् विभ्राट् परिव्राड् इत्यादयः। भृस्ज्शब्दस्य सुलोपे।

६· ६: १· ७· ७· १·
**स्कोः संयोगाद्योर्लोपो झलि पदान्ते च ॥ २७३ ॥**

पदान्ते झलि च परे संयोगाद्योः सकारककारयोः लोपः स्यात्। संयोगान्तलोपापवादः। इति सस्य लोपे जस्य षत्वे तस्य डत्वे जश्चरौ भृड् भृट्। अन्यत्र तु श्चुनायोगे सस्य शत्वे तस्य च जश्त्वेन जत्वे भृज्जौ भृज्जः इत्यादि। इति जान्ताः। यच्छब्दस्य अत्वे (२४८ सू०) पररूपे यः यौ ये इत्यादि सर्ववत्। त्यद्शब्दस्य अत्वे पररूपे च।

६:· ६: १·
**सौ त्यत्तदेतददसां तदोः सः ॥ २७४ ॥**

एषां तदोः स्थाने सँः स्यात् सौ परे। अकारः इत्। स्यः त्यौ त्ये। एवं सः तौ ते। एषः एतौ एते इत्यादि। शेषं सर्ववत्। अन्वादेशे तु एतेन न्यायः अधीतः वेदम् एनम् अध्यापय इत्यादौ (२५४ सू०) एनादेशः। एवम् एनौ एनान् एनेन एनयोः। युष्मदस्मदोः तु त्वदाद्यत्वे।

६: ६: १: ७· १:
**युष्मदस्मदोर्युष्मास्मयोस्त्वाहौ सौ, युवावौ**

७· १: ७· १: ७·
**द्विवचने, यूयवयौ जसि, त्वमावेकवचने, तुभ्य-**

१:   ७·   १: ·१·   ७·
**मह्यौ ङयि, तवममौ च ङसि ॥ २७५ ॥**

युष्मदस्मदोः युष्मास्मयोः स्थाने, सौ परे त्वाहौ, द्विवचने विषये युवावौ, जसि परे यूयवयौ, परिगणितभिन्ने एकवचने विषये त्वमौ, ङे इति परे तुभ्यमह्यौ, ङसि परे च तवममौ क्रमेण स्तः । इति सौ परे त्वे अहे ( २४८ सू० ) पररूपे च कृते ।

५:   ६:·   १·   ६·
**युष्मदस्मद्भ्यां ङेप्रथमाद्वितीयानाममुँः शस-**
·१· १·
**स्न नः * ॥ २७६ ॥**

युष्मदस्मद्भ्या परस्य ङे इत्यस्य, प्रथमायाः, द्वितीयायाः च स्थाने अमुँः शसः च नँः स्यात् । उकारः इत् । नँः अन्ता-रस्य । इति अमि ( १७० सू० ) पूर्वरूपे त्वम् अहम् । द्विव-चने च अत्वे युवावादेशे पररूपे ।

६:   ·१·   ८·   ७·   ·१·
**अनयो—राङ् प्रथमाद्विवचने द्वितीयायाश्च ॥ २७७ ॥**

प्रथमाद्विवचने परे द्वितीयायां च परतः युष्मदस्मदोः स्थाने आङ् स्यात् । ङित्त्वात् अन्तादेशः । इति आङि, अमि, पूर्वरूपे च युवाम् आवाम् । जसि अत्वे यूयवयादेशे पररूपे ततः अमि, पूर्वरूपे च यूयम् वयम् । अमि अत्वे

---

* शसः "पञ्चम्याः परम्" इत्युक्तः आदिस्थाने नादेशे संयोगान्तलोपे रूपसिद्धेः न शित्करणम् ।

एकवचनतया त्वमादेशे पररूपे आङि, अमि, पूर्वरूपे च सति त्वाम् माम्। युवाम् आवाम्। शसि अत्वे पररूपे आङि नादेशे युष्मान् अस्मान्। टाविभक्तौ अत्वे एकवचनतया त्वमादेशे पररूपे।

७· ७· ७· ·१·

अनादेशेऽचि सुप्येङ्॥ २७८॥

अनादिष्टे अजादौ सुपि परे अनयोः स्थाने एङ् स्यात्। ङित्त्वात् अन्तादेशः। इति एङि त्वया मया। भ्यामि त्यदाद्यत्वे द्विवचनतया युवावादेशे पररूपे।

·१· ७·

आङ् हलि॥ २७९॥

हलादौ परे अनयोः आङ् स्यात्। ङित्त्वात् अन्तादेशः। युवाभ्याम् आवाभ्याम्। भिसि अत्वे पररूपे प्रकृत्याश्रितत्वेन बलवत्त्वात् आदौ आङि अत्परत्वाभावात् न ऐस् युष्माभिः अस्माभिः। ङयि त्यदाद्यत्वे तुभ्यमह्यादेशे पररूपे अमि, पूर्वरूपे च तुभ्यम् मह्यम्। युवाभ्याम् आवाभ्याम्। भ्यसि त्यदाद्यत्वे पररूपे।

५: ६· १·

आभ्यां—चतुर्थीभ्यसोऽभ्यमुँः॥ २८०॥

आभ्यां परस्य चतुर्थीभ्यसः स्थाने अभ्यमुँः स्यात्। उकार इत्। इति अभ्यमि पुनः पररूपे युष्मभ्यम् अस्मभ्यम्। ङसौ अत्वे एकवचनं त्वमादेशे पररूपे।

६: ·१·

ङसिपञ्चमीभ्यसोरतुँ॥ २८१॥

आभ्यां परयोः ङसिपञ्चमीबहुवचनयोः स्थाने अतुँ स्यात्। उकारः इत्। इति पुनः पररूपे च त्वत् मत्। युवाभ्याम् आवाभ्याम्। भ्यसि अत्वे पररूपे भ्यसः स्थाने अति पुनः पररूपे च कृते युष्मत् अस्मत्। ङसि अत्वे तव-ममादेशे पररूपे।

६: ०१०

## ङसोऽश् ॥ २८२ ॥

आभ्यां परस्य ङसः स्थाने अश् स्यात्। शित्त्वात् सर्वादेशः। इति अशि पुनः पररूपे तव मम। ओसि अत्वे युवावादेशे पररूपे एङि सन्धौ च कृते युवयोः आवयोः। आमि अत्वे पररूपे सुटि आङि च।

६०　०१०

## साम: कमुँ ॥ २८३ ॥

आभ्यां परस्य ससुट्कस्य आमः स्थाने कमुँ स्यात्। उकारः इत्। सर्वादेशः। इति कमि कृते युष्माकम् अस्माकम्। सामः इत्युक्तेः गौणे सर्वनामत्वाभावेन सुटः अप्रसक्तौ न कम्। तेन अतित्वयाम् अतिमयाम् इत्यादि एव। ङौ अत्वे एकवचनतया त्वमादेशे पररूपे एङि अयादेशे च त्वयि मयि। युवयोः आवयोः। सुपि अत्वे पररूपे आङि युष्मासु अस्मासु। अत्र एकवचनार्थकयुष्मदस्मदोः युष्मास-भागस्थाने त्वमादेशः इति स्वीकारात् तव पुत्रः इत्यर्थे अपि त्वत्पुत्रः इत्यादिसिद्धिः। द्विवचनार्थकयोः तयोः तु विभक्तौ एव परतः युवावादेशः न अन्यत्र तेन युवयोः धनम् इत्यर्थे युष्मद्धनम् इत्येव।

षट्‌संज्ञकाः युष्मदस्मदः च त्रिषु लिङ्गेषु समाः, तेन न तेषु लिङ्गभेदकार्य्यम् इति बोध्यम् ।

५. ७.

एकवाक्यस्थपदाद्‌ अपादादौ षष्ठीचतुर्थी-

६ः ७ः ६ः १ः

द्वितीयानामेकद्विबहुवचनेषु स्थितयोः तेमयो,

१ः १ः .१. ७. .१. १ः .१.

र्वांनावौ वस्‌नसौ, वा अमि तु त्वामौ न चवा-

७.

ऽहहैवाऽदर्शनार्थदृश्यर्थकधातुयोगे ॥ २८४ ॥

एकवाक्यस्थपदात् परयोः अश्लोकादिचरणादौ षष्ठीचतुर्थीद्वितीयानाम् एकवचने स्थितयोः तयोः स्थाने तेमे इत्येतौ, द्विवचने वांनौ इत्येतौ, बहुवचने वस्‌नसौ इत्येतौ, क्रमेण वा स्याताम्, अमि स्थितयोः तु त्वा मा इत्येतौ भवतः। न तु च, वा, अह, हा, एव, योगे। न अपि अदर्शनार्थकदृश्यर्थकधातुयोगे। अयं च प्रकृतिप्रत्ययसमुदायादेशः।

शिवस्त्वा मापि पायात् सः शं ते मेऽपि ददात्वसौ।
गतिस्ते मेऽपि गोविन्दः स वां नावपि रक्षतु ॥
दद्याद्‌ वां नावपीशः शं विष्णुर्वां नावपि प्रभुः।
रक्षेद्‌ वो नोऽपि गौरीशः दद्याद्वो नोऽपि शं शिवः।
शिवो वो नोऽपि मोक्षाय प्रभविष्णुर्भवत्वसौ ॥

अत्र सर्वत्र पक्षे यथायथं त्वां माम् इत्यादि। एकवाक्यस्थपदात्, अपदादौ च इति किम्।

येन भक्ता हरौ युष्मानस्मांस्तेन स रक्षतु।

अत्र युष्मान् इति वाक्यादौ, अस्मान् इति चरणादौ च

वर्त्तमानम् अतः नादेशः। अत्र स्थितयोः इत्युक्तेः श्रूयमाण-विभक्तिकयोः एव आदेशः, तेन त्वत्पुत्रः इत्यादि समासादौ न। चादियोगे तु न।

हरिस्त्वां माञ्च संरक्षेत् कृपया त्वामपेक्षते इत्यादौ। दर्शनार्थे तु स्यात् एव, चक्षुषा त्वा समीक्षते इति।

७· ५· ५··१·

## अन्वादेशे सपूर्वायाः प्रथमाया वा ॥ २८५ ॥

अन्वादेशविषये विद्यमानपूर्वात् एव प्रथमान्तपदात् पूर्वोक्तं वा स्यात्। अन्वादेशे अन्यस्मात् तु नित्यम् इति फलितम्। भक्ता यूयं वयञ्चेशे तत् सः वो नोऽपि रक्षतु। पक्षे युष्मान् अस्मान् वा। भक्ता यूयं वयञ्चेशे तस्मात् वो नोऽपि सोऽवतु। इत्यादौ नित्यम्।

१· १· ·१·

## आमन्त्रितं—पूर्वमविद्यमानवत्— ॥२८६॥

वाक्यादिस्थितम् आमन्त्रितं पदम् अविद्यमानवत् स्यात्।

हरे तवाहं भक्तोऽस्मि देव मां पाहि तत् सदा।

अत्र वाक्यादिस्थयोः हरे, देव, इति पदयोः अविद्यमानवद्भावात् तव इति माम् इत्यस्य च एकवाक्यस्थपदात् परत्वाभावेन नादेशः।

·१· १· ७·

## न विशेष्यमभिन्नविशेषणे ॥ २८७ ॥

विशेष्यम् आमन्त्रितपदम् अभिन्ने विशेषणे परे अविद्यमानवत् न स्यात्। हरे दयालो नः पाहि शिवः सेव्यो ममार्थदः। इत्यत्र आदेशो न इति, पक्षे आदेशाभावे च मम इति सिद्धम्। सुपात् सुपादौ सुपादः। शसादौ अचि तु।

६· ६· ·१·
## पादो भस्य पत् ॥ २८८ ॥

भसंज्ञकस्य पाच्छब्दस्य स्थाने पत् स्यात्। इति पदादेशे सुपदः सुपदा सुपाद्भ्याम् इत्यादि। दान्ताः।

प्राच्शब्दस्य सुलोपे (२६० सू०) नुमि नकारस्य परसवर्णङकारे संयोगान्तलोपे च प्राङ्। नुमि अनुस्वारे परसवर्णे ञे च कृते प्राञ्चौ प्राञ्चः। प्राञ्चम्। शसादौ अचि तु।

६· ६· ६· १· ६· १· ·१·
## अचोर्भस्यातो लोपो पूर्वाणो * दीर्घश्च ॥२८९॥

लुप्तनकारस्य अञ्चतेः भसंज्ञकस्य अकारस्य लोपः स्यात्, तस्मिन् सति च पूर्वाणः * दीर्घः। इति अल्लोपे पूर्वाणः दीर्घे च प्राचः प्राचा इत्यादि। एवं प्रत्यच्—प्रत्यङ् प्रतीचः प्रतीचा इत्यादि। अलुप्तनकारस्य तु प्राञ्चः प्राञ्चा इत्यादि।

६· १· ७·
## सहस्य सध्रिः वप्रत्ययान्ताञ्चतौ— ॥२९०॥

वप्रत्ययान्ताञ्चतौ परे सहस्य स्थाने सध्रिः स्यात्। इति सध्री सध्र्यङ् सध्र्यञ्चौ। सध्रीचः सध्रीचा।

६· १·
## समः समिः ॥ २९१ ॥

वप्रत्ययान्ताञ्चतौ परे समः स्थाने समिः स्यात्। इति सम्यादेशे सम्यङ् सम्यञ्चौ। शसाद्यचि अल्लोपे पूर्वाणः दीर्घे समीचः समीचा इत्यादि।

६· १· ७·
## तिरसस्तिर्य्यकारालोपे ॥ २९२ ॥

अलुप्ताकारे वप्रत्ययान्ते अञ्चतौ परे तिरसः स्थाने तिरिः

स्यात्। इति तिरी तिर्यङ् तिर्य्यञ्चौ। लुप्ताकारे तु न, तेन तिरश्चः तिरश्चा इत्यादि। उदच्—उदङ्।

५· ६· ६··१· १··१·

उदोऽचोर्भस्येद् दीर्घश्च ॥ २९३ ॥

उच्छब्दात् परस्य भसंज्ञकस्य लुप्तनकारवप्रत्ययान्ताञ्चतेः आदेः इत् स्यात्, भावदीर्घश्च। (६४ सू०) पूर्वादेशः। अस्लोपापवादः। उदीचः उदीचा इत्यादि। जलमुचः सुलोपे (२७० सू०) कुत्वे जश्चरौ जलमुग् जलमुक् जलमुचौ। इति चान्ताः। महच्छब्दस्य सुलोपे (२६० सू०) नुमि (२२६ सू०) उपधादीर्घे संयोगान्तलोपे महान्। नुमुपधादीर्घौ महान्तौ महान्तः महान्तम् महान्तौ। महतः महता महद्भ्याम् इत्यादि। धीमच्छब्दस्य सुलोपे।

६· ६· १· ७· ७·

अत्वसन्तस्याधातोरुपधादीर्घोऽसम्बुद्धौ सौ ॥ २९४ ॥

असम्बुद्धौ सौ परे अतुभागान्तस्य धातुभिन्नासन्तस्य च उपधायाः दीर्घः स्यात्। इति उपधादीर्घे नुमि संयोगान्तलोपे च धीमान् हे धीमन्। नुमि धीमन्तौ धीमन्तः इत्यादि। एवं गोमान् धनवान् इत्यादि। भवच्छब्दः वत्वन्तः, तेन भवान् भवन्तौ इत्यादि धीमद्वत्। त्यदाद्यत्वे तु अस्मत्पर्य्यन्तानाम् एव ग्रहणं, तेन इह न। वत्वन्तमघवच्छब्दस्य तु मघवान् मघवन्तौ इत्यादि। शत्रन्तभवच्छब्दस्य नुम्संयोगान्तलोपौ भवन् भवन्तौ इत्यादिरूपम्। एवं गच्छन् पचन्। अभ्यस्तधातोः शत्रन्तात् तु।

·१· ५· ६· ·१· ७·

नाभ्यस्ताच्छतुर्नुम् सर्वनामस्थाने ॥ २९५ ॥

सर्वनामस्थाने परे यः नुम् विहितः सः अभ्यस्तसंज्ञकात् धातोः परस्य अत्रन्तस्य न स्यात्। इति नुम्निषेधे ददत् ददती। एवं दधत् जाग्रत् लेलिहत् इत्यादि। इति तान्ताः। तादृश् इत्यस्य सुलोपे (२६८ सू०) कुत्वे जश्त्वे तादृग् तादृक् तादृशौ तादृग्भ्याम् इत्यादि। एवम् अन्यादृक् भवादृक्। कुत्वे स्पृग् स्पृक् स्पृशौ स्पृग्भ्याम् इत्यादि। इति शान्ताः। षट्शब्दः बहुवचनान्तः (१८३ सू०) जस्शसोः लुकि (२७२ सू०) षस्य डत्वे तस्य जश्त्वे षड् षट् षड्भिः षड्भ्यः षड्भ्यः। आमि तु (१४४ सू०) नुटि (८४ सू०) निपातनात् षण्णाम् षट्सु। धनमुष् इत्यस्य षस्य डत्वे जश्त्वे धनमुड् धनमुट् धनमुषौ धनमुड्भ्याम् इत्यादि। काष्ठतक्षशब्दस्य सुलोपे स्कोः इति कलोपे षस्य डत्वे काष्ठतट् काष्ठतक्षौ काष्ठतड्भ्याम्। दिधक्ष् पिपक्ष् शब्दस्य तु कत्वस्य असिद्धतया न संयोगादिकलोपः, तेन अपवादाप्रसक्तेः संयोगान्तलोपे दिधक् दिधक्षौ, पिपक् पिपक्षौ इत्यादि। षान्ताः। पिपठिस् इत्यस्य सुलोपे।

६: ६·१· १· ७·

## इमुसोर्दीषोऽङ्कः रुँः पदान्ते ॥ २९६ ॥

पदान्ते स्थितानाम् एषां रुँः अन्तादेशः स्यात्। उः इत्। इति रुत्वे।

६· ६· १· १·
७:

## रवान्तधातोरुपधेको दीर्घो नाच्तद्धितयोः ॥ २९७ ॥

रेफान्तस्य वान्तस्य च धातोः उपधायाः इकः दीर्घः

स्यात्, न अजादौ प्रत्यये, न च यादौ तद्धिते। इति दीर्घे विसर्गे च पिपठीः। षत्वम् पिपठिषौ (२॥५ सू० ) रोरेवेति नियमात् विसर्गः पिपठीःषु। चिकीर्स् इत्यस्य सुलोपे।

५. ६. ·१· १· ७·

## रात् सस्यैव लोपः पदान्ते ॥ २९८ ॥

पदान्ते स्थितस्य संयोगावयवस्य रकारात् परस्य सस्य एव लोपः, न अन्यस्य। संयोगान्तलोपनियमार्थः। इति सलोपे रस्थाने विसर्गः चिकीः। षत्वे चिकीर्षौ, सुपि तु रुरूपत्वाभावेन न रस्य विसर्गः चिकीर्षु:। अत्र रात् सस्यैव इति नियमात् रसंयोगान्तस्य अन्यस्य न लोपः, तेन ऊर्क् इत्यादौ न संयोगान्तलोपः। दसेर्डोसि दोस् इत्यस्य सुलोपे रुत्वविसर्गौ दोः। षत्वे दोषौ दोर्भ्याम् दोःषु। विद्वस्शब्दस्य सुलोपे नुमि ( २२६ सू० ) नसान्ततया दीर्घे संयोगान्तलोपे विद्वान् हे विद्वन्। नुमुपधादीर्घौ विद्वांसौ विद्वांसः। शसादौ अचि तु।

६· ६· १· ६· ·१· १·

## वसोर्भस्य संप्रसारणं तज्जातेटश्च लोपः ॥२९९॥

वस्वन्तस्य भस्य संप्रसारणं स्यात्, सति संप्रसारणे तत्स्थानिकस्य इटः लोपः स्यात्। इति व् इत्यस्य संप्रसारणे ( २३८ सू० ) पूर्वरूपैकादेशे च विदुषः विदुषा ( २४२ सू० ) सस्य दत्वे विद्वद्भ्याम्। एवम् उपसेदिवान् उपसेदिवांसौ। उपसेदुषः उपसेदिवद्भ्याम्। जग्मिवस् जगन्वस् इत्यनयोस्तु शसादौ जग्मुषः इत्यादि एव रूपम्। वसोः वस्य संप्रसारणे उति कृते तन्निमित्तस्य मस्थानिकनस्य निवृत्त्या ( २६२ सू० ) अचमाणसूत्रेण उपधाऽतः लोपात् जग्निवस्—जग्निवान्

जग्मुषः। श्वम् इत्यस्य दत्वे श्वत्। श्वसौ श्वसः श्वद्भ्याम्। एवं स्रद्। पुमस्शब्दस्य सुलोपे।

६॰ ॰१॰ ७॰

पुंसोऽसुँङ् सर्वनामस्थाने ॥ ३०० ॥

सर्वनामस्थाने परे पुमस्शब्दस्य असुँङ् स्यात्। उङौ इतौ। ङित्त्वात् अन्तादेशः। इति सस्य असुङि नुमि न्सान्ततया उपधादीर्घे संयोगान्तलोपः, पुमान्। असुङ्नुमुपधादीर्घाः पुमांसौ पुमांसः। पुंसः पुंसा। संयोगान्तलोपे पुम्भ्याम् पुंसु। अत्र अनुस्वारस्य नुम्रूपत्वाभावात् न षत्वम्। उशनस् इत्यस्य सुलोपे।

६ः ॰१॰ ७॰ ७॰

उशनसनेहसोरनँङसम्बुद्धौ सौ ॥ ३०१ ॥

असम्बुद्धौ सौ परे एतयोः अनँङ् स्यात्। अङौ इतौ। ङित्त्वात् अन्तादेशः। इति अनङि नान्ततया उपधादीर्घे प्रातिपदिकान्तस्य न् इत्यस्य लुप्, उशना। उशनसौ उशनसः। सम्बुद्धौ तु।

६॰ ७॰ ॰१॰ ॰१॰ ॰१॰ ॰१॰ ७॰

उशनसः सम्बुद्धौ वानँङ् वा च तस्मिन्

॰१॰

नलुप् ॥ ३०२ ॥

सम्बुद्धौ परतः उशनसः शब्दस्य अनँङन्तादेशः वा स्यात्, तस्मिन् च सति नलुप् वा स्यात्। इति अनङि नलुपि च हे उशन, पक्षे हे उशनन् हे उशनः। उशनोभ्याम् इत्यादि। अनेहा अनेहसौ अनेहसः। असन्ततया सौ दीर्घे वेधाः

वेधसौ वेधसः । अदस्‌शब्दस्य अत्वे पररूपे ( २७४ सू० ) सत्वे सन्ततया नोत्वमत्वे ।

५० ६० १०
अदसः सोरौः ॥ ३०३ ॥

अदस् शब्दात् परस्य सोः स्थाने औः स्यात् । इति औत्वे । असौ । अन्यत्र त्यदाद्यत्वे पररूपे सर्ववत् कार्य्यं कृत्वा यथायोगम् उदूतौ ईत् दस्य मत्वं च कार्य्यम् । औ तत्र उक्तरीत्या अदौ इति सिद्धे ।

६० ६० ५० ०६: १: ६०
अदसोऽसोर्दादु—ह्रस्वदीर्घयोरुदूतौ दस्य
०१० १०
च मः ॥ ३०४ ॥

सन्तभिन्नस्य अदस्‌शब्दस्य दात् परयोः ह्रस्वदीर्घयोः स्थाने क्रमेण उदूतौ स्तः, तत्सहयोगे च दस्य मः । इति औकारस्थाने ऊत्वे दस्य मत्वे अमू । जसि पूर्ववत् सर्वनामतया जसः शीभावे अदे इति सिद्धे ।

६० ०१००१० ७०
एत ईद्व बहुवचने ॥ ३०५ ॥

बहुवचनजातस्य अदस्‌शब्दात् परस्य एतः स्थाने ईत् स्यात्, तस्मिन् च सति दस्य मः । पूर्वसूत्रापवादः । इति एतः स्थाने ईत्वे दस्य मत्वे अमी । प्राग्वत् अदम् इति सिद्धे अतः उत्वे दस्य मत्वे अमुम् । अमू । अदान् इति सिद्धे आतः स्थाने ऊति मत्वे अमून् । टाविभक्तौ अत्वे पररूपे ।

५· १· ·१· ७· ७· ·१· ·१· १·

## अदसः टा नाऽस्त्रियाम् तस्मिंश्च न दीर्घः ॥ ३०६ ॥

अदस् शब्दात् परस्य टा इत्यस्य स्थाने ना स्यात्, न तु स्त्रियाम्, तस्मिन् च परे न दीर्घः। इनादेशापवादः। इति नाभावे अतो दीर्घो यञीति प्राप्तदीर्घस्य निषेधेन अकार-स्थाने उति दस्य मत्वे अमुना। प्राग्वत् अदाभ्याम् इति सिद्धे आतः स्थाने ऊति मत्वे अमूभ्याम्। भिसि अत्वे भिसः स्थाने ( २५३ सू० ) ऐसः निषेधेन ( १७६ सू० ) एत्वे एतः स्थाने ईत्वे मत्वे च अमीभिः। प्राग्वत् सर्व्वनामकार्य्यम्। अदस्मै इति सिद्धे अस्य उत्वे मत्वे षत्वे च अमुष्मै अमूभ्याम्। प्राग्वत् अदेभ्यः इति सिद्धे एत ईत्वे मत्वे अमीभ्यः। अमुष्मात् अमूभ्याम् अमीभ्यः। अमुष्य। प्रागवत् अदयोः इति सिद्धे अतः उत्वे मत्वे अमुयोः। अदेषाम् इति सिद्धे एतः ईत्वे मत्वे अमीषाम्। अमुष्मिन् अमुयोः। अदेषु इति सिद्धे एतः ईत्वे मत्वे अमीषु। इति सान्ताः।

इति हलन्तपुंलिङ्गाः।

---

## हलन्तस्त्रीलिङ्गाः।

उपानह्शब्दस्य सुलोपे।

६· १· ७· ७· ·१·

## नहो धँ झलि पदान्ते च ॥ ३०७ ॥

झलि परे पदान्ते च नहः हस्य धँः अन्तादेशः स्यात्। अकारः इत्। इति हस्य धत्वे जश्वे उपानद् उपा-

मत् उपानहौ उपानद्भ्याम् उपानत्सु। उष्णिह्शब्दस्य सुलोपे (२६८ सू०) कुत्वेन हस्य घत्वे जश्चरौ उष्णिग् उष्णिक् उष्णिहौ उष्णिग्भ्याम् उष्णिक्षु *।

मधुलिह्गोदुहादयः पुंवत्। इति हान्ताः।

६· १· ७·

## दिव—औः सौ— ॥ ३०८ ॥

सौ परे दिव् शब्दस्य औः अन्तादेशः स्यात्। इति औत्वेन सुलोपः, द्यौः दिवौ दिवः इत्यादि।

·१· ७·

## उड्‌हलि ॥ ३०९ ॥

हलिपरे दिव्शब्दस्य उदन्तादेशः स्यात्। इति उत्वे द्युभ्याम् इत्यादि। अप्रत्यये अपि हलि उत्वम् इष्यते, तेन द्युमणिः इत्यादि। इति वान्ताः। गिर्शब्दस्य सुलोपे (२९७ सू०) उपधादीर्घे विसर्गः गीः गिरौ गीर्भ्याम् (२४५ सू०) सूत्रे रोरेवेति नियमात् न विसर्गः गीर्षु। पूः पुरौ पूर्भ्याम् पूर्षु। चतुर् शब्दो बहुवचनान्तः (२१७ सू०) चतसृादेशे चतस्रः चतस्रः चतसृभिः चतसृभ्यः चतसृभ्यः चतसृणाम् चतसृषु। इति रान्ताः। किमः कादेशे आपि का के काः इत्यादि सर्वावत्। इदमः सौ अत्वे पररूपे (२४९ सू०) इयमादेशे सुलोपे इयम्। अन्यत्र अत्वे पररूपे दस्य मत्वे आपि सर्वावत्, इमे इमाः इमाम् इमे इमाः। सभयोः तु अनादेशे आपि आभ्याम् आभिः। ङेप्रभृतिषु अत्वे आपि स्याडागमे अशि इत्वे च अस्यै अस्याः अस्याः अनयोः। आमि

* हस्य कुत्वे कर्त्तव्ये महाप्राणादिभूरिप्रयत्नसाम्यात् घत्वम् एव जायते। इत्याशयेन घत्वं इत्युक्तम्।

सत्वे आपि स्याडागमे सशादेशे च सासाम्। ङौ तु सत्वे आपि स्याडागमे ङेः आमि कृते अशि कृते च सस्याम् अनयोः आसु। अन्वादेशे तु सत्वे एनादेशे आपि एनाम् एने एनाः एनया एनयोः इति भेदः। इति मान्ताः। सौमन् शब्दस्य राजवत् रूपम्। सौमा सौमानौ सौमभ्याम्। ङौ तु (२३३ सू०) वा अल्लोपे सौम्नि सौमनि इत्यादि। पञ्चादयः पुंवत्। इति नान्ताः। ककुभ्शब्दस्य सुलोपे जश्चरौ ककुब् ककुप् ककुभौ ककुभः ककुप्सु। एवम् अनुष्टुप् (२६८ सू०) कुत्वे नुमः त्रिष्टुप्प्रभृतयः। समिध्शब्दस्य सुलोपे जश्चरौ समिद् समित् समिधौ समिद्भ्याम्। एवं युध्। इति धान्ताः। (२६८ सू०) कुत्वे जश्चरौ स्रग् स्रक् स्रजौ स्रग्भ्याम् स्रक्षु। रुज् (२७० सू०)। एवं रुक् रुजौ इत्यादि। सुखभाज् इत्यादयः पुंवत्। इति जान्ताः। दृशद् दृशत् दृशदौ दृशद्भ्याम् इत्यादि। एवम् उदुपनिषद्संसद्संविद् इत्यादयः। त्यदादीनां तु अत्वे आपि सर्वावत्। तत्र सौ तदोः सत्वे स्या त्ये त्याः। सा ते ताः। एषा एते एताः इत्यादि अन्वादेशे तु इदम्वत्। इति दान्ताः। (२७० सू०) वाचः कुत्वे वाग् वाक् वाचौ वाग्भ्याम् वाक्षु। एवम् ऋच्रुच्शुच् इत्यादयः। इति चान्ताः। प्रतिश्रुत् प्रतिश्रुतौ प्रतिश्रुद्भ्याम् प्रतिश्रुत्सु इति। एवं पुरीतत्। इति तान्ताः। अप्शब्दः बहुवचनान्तः। जसि (२०४ सू०) दीर्घे आपः अपः।

६। १। ७।

## अपस्तोँ भि ॥ ३१० ॥

भादौ प्रत्यये परे अप्शब्दस्य तः अन्तादेशः स्यात्। 'धः इत्। इति पक्षे तत्वे अद्भिः अद्भ्यः अद्भ्यः अपाम् अप्सु। पान्ताः।

( ३१८ सू० ) कुत्वे दिक् दिशौ दिग्भ्याम् दिक्षु। एवं दृक्। स्पृक्ताह्वगादयः तु पुंवत्। विश्शब्दस्य ( ३७१ सू० ) षत्वे षस्य डत्वे विट् विशौ विड्भ्याम् विट्सु। इति शान्ताः। षस्य डत्वे जश्चरौ त्वड् त्वट् त्विषौ त्विड्भ्याम् त्विट्सु। एवं त्विट्। षड्धनमुडादयः तु पुंवत्। आशिषः रुत्वे उपधादीर्घविसर्गाः आशीः आशिषौ आशीर्भ्याम् आशीःषु। इति षान्ताः। स्रस् ध्वस् शब्दौ पुंवत्। सुप्रजस् वेधोवत्। अदस्शब्दस्य सौ त्यदाद्यत्वे आपि सोः औत्वे दस्य सत्वे हृस्वौ असौ अन्यत्र त्यदाद्यत्वे आपि ऊत्वमत्वे अमू। अमूः। अमूम् अमू अमूः। टाविभक्तौ त्यदाद्यत्वे आपि एङि अयादेशे उत्वमत्वे अमुया अमूभ्याम् अमूभिः। ङेप्रभृतिषु त्यदाद्यत्वे आपि स्याडागमे ह्रस्वे उत्वमत्वषत्वानि अमुष्यै अमुष्याः अमुष्याः। ओसि टावत् अमुयोः। आमि त्यदाद्यत्वे आपि सुटि ऊत्वमत्वषत्वानि अमूषाम्। ङौ अत्वे आपि स्याटि ङेः आमि ह्रस्वे उत्वमत्वषत्वानि अमुष्याम्। अमुयोः अमूषु। इति सान्ताः।

इति हलन्तस्त्रीलिङ्गप्रकरणम्।

## हलन्तक्लीबलिङ्गाः।

स्वमोर्लुक्। ( २२८ सू० ) वाः। औ शी वारी। अभलन्तत्वात् न नुम् वारि। पुनः तद्वत्। चत्वारि चत्वारि शेषं पुंवत्। इति रान्ताः। स्वमोः लुका लुप्तत्वात् न कत्वम्। किम् के कानि। पुनः तद्वत्। शेषं सर्ववत्। एवम् इदम् इमे इमानि। अन्वादेशे तु द्वितीयायाम् इदम्

एने एनानि। टादौ पुंवत्। इति मान्ताः। ब्रह्म ब्रह्मणी ब्रह्माणि।

७· ६· ·१· ७· ·१·

## सम्बुद्धौ नान्तस्य नलुप् क्लीवे वा ॥ ३११ ॥

सम्बुद्धौ परे क्लीवे नान्तस्य नलुप् वा स्यात्। हे ब्रह्म ब्रह्मन् ( २८६ सू० ) रुत्वे अहः। वा अल्लोपे अह्नी अहनी। अहानि। अह्ना अहोभ्याम् इत्यादि। ग्रामणि ग्रामणिनी ( २५६ सू० ) दीर्घे ग्रामणीनि। इति नान्ताः। असृग् असृक् असृजी असृञ्जि। असृजा असृग्भ्याम् इत्यादि। इति जान्ताः। त्यद् त्ये त्यानि। एव तद् ते तानि, यत् ये यानि, एतत् एते एतानि। अन्वादेशे तु एनत् एने एनानि इति भेदः। इति दान्ताः। तिर्य्यक्। शौः एव सर्वनामस्थान-तया तदन्याजादेः भत्वे न ( २८० सू० ) अच्चोः अतः लोपे तिरश्ची। तिर्य्यञ्चि। एवं सम्यक्। इति चान्ताः। यकृत् यकृती यकृन्ति। शकृत् शकृती शकृन्ति। पदादीनां पृथक्शब्दत्वात् न पादादेः पदादेशः विहितः, ददत् ददती। क्लीवे शेः सर्वनामस्थानतया अभ्यस्तात् परस्य शतुः ( २८५ सू० ) नुम्‌निषेधे प्राप्ते।

५· ६· ·१· ·१· ७·

## अभ्यस्ताच्छतु—र्वा—नुँम्—शौ ॥ ३१२ ॥

शौ परे अभ्यस्तोत्तरशत्रन्तात् नुँम् वा स्यात्। दधौ दती। इति नुमि ददन्ति ददति। तुदत्।

·१· ७:

## आच्छीनद्योः— ॥ ३१३ ॥

अवर्णात् परशवन्तस्य स्थाने नुँम् स्याद्वा शीमीपि च परे। प्राचां मते नदीति ईपः संज्ञा। तुदती तुदन्ती। तुदन्ति। पचत्।

६: ९॰

## शप्श्यनोर्नित्यम् ॥ ३१४ ॥

शपः श्यनश्च अवर्णात् परशवन्तस्य नित्यं नुँम् स्यात्, शीमि ईपि च परे। पचन्ती पचती। पचन्ति। दीव्यत्। दीव्यन्ती दीव्यती। दीव्यन्ति। कुर्वत्। कुर्वती। कुर्वन्ति। इति तान्ताः। धनुः धनुषी (२२६ सू॰) नुसान्ततया उपधादीर्घे नुम्व्यवधाने अपि (१७८ सू॰) षत्वे धनूंषि। पुनः तद्वत्। भ्यामि (२८६ सू॰) रुत्वे अपि धातुत्वाभावात् न उपधेकः दीर्घः। धनुर्भ्याम् धनुःषु। एवं चक्षुर्हविःप्रभृतयः। अदः। विभक्तिकार्य्यात् परम् ऊत्वमत्वे अमू अमूनि। पुनः तद्वत्। शेषं पुंवत्। इति सान्ताः।

इति हलन्तक्लीबलिङ्गप्रकरणम्।

## अव्ययप्रकरणम्।

स्वरादिनिपातानाम् अव्ययत्वम् उक्तं, तत्र निपाताः उक्ताः, स्वरादयः अधुना उच्यन्ते। स्वर्, अन्तर्, प्रातर्, पुनर्, उच्चैस्, नीचैस्, शनैस्, ऋते, युगपत्, आरात्, पृथक्, ह्यस्, श्वस्, दिवा, सायम्, चिरम्, मनाक्, ईषत्, जोषम्, तूष्णीम्, बहिस्, अधस्, समया, निकषा, स्वयम्, वृथा, नक्तम्, नञ्, अद्धा, सामि, (वत्प्रत्ययान्तम्) तिरस्, अन्तरा, अन्तरेण, शम्, सहसा, विना, नाना, स्वस्ति, स्वधा, अलम्, वषट्, वौषट्, अस्ति, उपांशु, दोषा, मृषा, मिथ्या, मुधा, पुरा,

मिथो, मिथस्, प्रायस्, मुहुस्, अभीक्ष्णम्, साकम्, सार्द्धम्, समक्षम्, समम्, धिक्, अथ, मा, माङ्, कामम्, प्रकामम्, भूयस्, साम्प्रतम्, परम्, साक्षात्, साचि, सत्यम्, मङ्क्षु, अवश्यम्, सपदि, प्रादुस्, आविस्, ओम्, भूर्, भुवर्, सुष्ठु, दुष्ठु, सु, अधि, अञ्जसा, किञ्चित्, अस्तम्, स्थाने, सह, सत्रम्, वरम्, कष्टम्, स्वित्, इत्यादि। आमन्ताः कृत्वोऽर्था-न्ताः तसिलान्ताः वत्यन्ताश्च। क्त्वातुमुन्मान्तकृदन्ताः अव्ययी-भावसमासनिष्पन्नाश्च। एते ( ३२ सू॰ ) प्रागुक्ताः निपा-ताश्च अव्ययाः।

५॰ ६॰ ०१॰

## अव्ययात् सुपो लुक् ॥ ३१५ ॥

अव्ययसंज्ञकात् शब्दात् परस्य सुपः लुक् स्यात्। स्वः प्रातः। आमन्तादयस्तु सुतराम् नितराम्, पञ्चकृत्वः, द्विः, त्रिः, सर्वतः, सर्वत्र, सर्वदा, कृष्णवत्, पक्त्वा, कर्त्तुम्। स्मारं-स्मारम्। उपवारि।

वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः इत्युक्तेः अल्लोपे अवगाहः वगाहः, अपिधानम् पिधानम्।

५॰ ६ः ०१॰

## उदः स्थास्तम्भोर्लोपः ॥ ३१६ ॥

उच्छब्दात् परस्य स्थास्तम्भोः आदेः सस्य लोपः स्यात्। उत्थानम्। उत्तम्भनम्।

इति अव्ययप्रकरणम्।

इति सुप्प्रयोगप्रकरणम्।

# तिङन्तसंज्ञाप्रकरणम्।

अथ तिङः प्रदर्श्यन्ते *।

तिप्, तस्, अन्ति, सिप्, थस्, थ, मिप्, वस्, मस्। ते, आते, अन्ते, से, आथे, ध्वे, ए, वहे, महे (लट्)। यात्, याताम्, युस्, यास्, यातम्, यात, याम्, याव, याम। ईत, ईयाताम्, ईरन्, ईथास्, ईयाथाम्, ईध्वम्, ईय, ईवहि, ईमहि (विधिलिङ्)। तुप्, ताम्, अन्तु, हि, तम्, त, आनिप्, आवप्, आमप्। ताम्, आताम्, अन्ताम्, स्व, आथाम्, ध्वम्, ऐप्, आवहैप्, आमहैप् (लोट्)। दिप्, ताम्, अन्, सिप्, तम्, त, अमप्, व, म। त, आताम्, अन्त, थास्, आथाम्, ध्वम्, इ, वहि, महि (लङ्)। दि, ताम्, अन्, सि, तम्, त, अम्, व, म। तन्, आताम्, अन्त, थाम्, आथाम्, ध्वम्, इ, वहि, महि (लुङ्)। णप्, अतुस्, उस्, थप्, अथुस्, अ, णप्, व, म। ए, आते, इरे, से, आथे, ध्वे, ए, वहे, महे (लिट्)। ता, तारौ, तारस्, तासि, तास्थस्, तास्थ, तास्मि, तास्वस्, तास्मस्। ता, तारौ, तारस्, तासे, तासाथे, ताध्वे, ताहे, तास्वहे, तास्महे (लुट्)। यात्, यास्ताम्, यासुस्, यास्, यास्तम्, यास्त, यासम्, यास्व, यास्म। सीष्ट, सीयास्ताम्, सीरन्, सीष्ठास्, सीयास्थाम्,

* तिप् तस् झि सिप् थस् थ मिब्वस् मस्, त आतां झ थासाथां ध्वमिड वहिमहिङ् इति पाणिनिना अष्टादश एव पठित्वा लङादिषु तेषाम् आदेशेन तासादिविकरणयोगेन च रूपविशेषाः सम्पादिताः प्रक्रियालाघवाय च इह सम्पादित-रूपाः एव तिबादयः पठिताः।

सीध्वम्, सीय, सीवहि, सीमहि (आशीर्लिङ्)। स्यति, स्यतस्, स्यन्ति, स्यसि, स्यथस्, स्यथ, स्यामि, स्यावस्, स्यामस्। स्यते, स्येते, स्यन्ते, स्यसे, स्येथे, स्यध्वे, स्ये, स्यावहे, स्यामहे (लृट्)। स्यत्, स्यताम्, स्यन्, स्यस्, स्यतम्, स्यत, स्यम्, स्याव, स्याम। स्यत, स्येताम्, स्यन्त, स्यथास्, स्येथाम्, स्यध्वम्, स्ये, स्यावहि, स्यामहि (लृङ्)।

१:· १:· १:· ·१·

**एतानि तिङो लकाराश्च ॥ ३१७ ॥**

तिबादीनि साशीतिशतसंख्यकानि तिङ्संज्ञानि लसंज्ञानि च स्युः। तत्र एकवचनादिसंज्ञाः (२६ सू०) प्राग्वत्। तत्र पणौ दिस्योः इकारः तनो नश्चेत् स्यात्। ततः नित्करणं तु चिणर्थम्।

१:· १:·

**तान्यष्टादशशो लड्विधिलिङ्लोड्लङ्लुङ्लिङ्लुडाशीर्लिङ्लृड्लृङः ॥ ३१८ ॥**

१:·

तानि अष्टादशशः क्रमेण लडादिसंज्ञानि स्युः।

१:· १: १:

**तेषां पूर्वापरौ परस्मैपदात्मनेपदे ॥ ३१९ ॥**

तेषाम् अष्टादशानां पूर्वापरभागौ क्रमेण परस्मैपदात्मनेपदसंज्ञौ स्तः। तद्व्यवस्था च अग्रे वक्ष्यते।

१:· १:· ·१· १·

**आद्याः पञ्च शिच्च सार्वधातुकम् ॥ ३२० ॥**

तेषां दशानाम् आद्याः लट्, विधिलिङ्, लोट्, लङ्,

लुङ्, इत्येते प्रकारेत्प्रत्ययश्च सार्वधातुकसंज्ञाः स्युः। अन्ये कृदादयः।

१· १·
**शेषमार्द्धधातुकम् ॥ ३२१ ॥**

अवशिष्टाः पञ्च लकाराः अन्ये कृदादयश्च आर्द्धधातुकसंज्ञाः स्युः।

५ः· ·१· १·
**गाङ्कुटादिभ्योऽञ्णित् ङित्—॥ ३२२ ॥**

इङादेशगातेः कुटादिभ्यश्च परः ञिद्णिद्भिन्नः प्रत्ययः ङित् स्यात्। तत्र गणपाठे कुटादिः। ते च ( सि० च० १५३ पृ० ) द्रष्टव्याः।

५· १· ५· ·१· ·१·
**विज इट् उर्णोस्तु वा ॥ ३२३ ॥**

विजधातोः परः इट् ङित् स्यात्, उर्णोस्तु परः इट् वा ङित्।

१· १·
**सार्वधातुकमपित् ॥ ३२४ ॥**

अपित् सार्वधातुकं ङित् स्यात्।

१· १· १· ·१·
**आशीर्लिङ्परस्मैपदं कित्—लिट् च संयो-**
५· ·१· ·१·
**गात् तु वा ॥ ३२५ ॥**

अपित् लिट् आशीर्लिङ्परस्मैपदञ्च कित् स्यात्, संयोगात् तु परः लिट् कित् वा।

५: १ ·१·

श्रन्थिग्रन्थिदम्भिभ्यस्थप् वा ॥ ३२६ ॥

एभ्यः लिटः थप् कित् वा स्यात्।

५: ·१·

मृडमृदगुधकुषक्लिशवदवसः क्त्वा ॥ ३२७ ॥

एभ्यः क्त्वा कित् स्यात्। (३३७ सू०) वक्ष्यमाणविकल्पाद्यपवादः।

५: ·१··१·

रुदविदमुषग्रहिस्वपिप्रच्छिभ्यः संश्च ॥ ३२८ ॥

एभ्यः क्त्वा सन्प्रत्ययश्च कित् स्यात्। पूर्ववत् कित्निषेधापवादः।

५· ५· ५· ·१· ·१· ·१·

इको झलन्तादिगुपधा—च्चानिट्—सन् ॥ ३२९ ॥

इकः, झलन्तात् इगुपधात् च अनिट् सन् कित् स्यात्।

५··१· १: ७· ५··३··१·

उश्च लिङ्सिचावात्मनेपदे गमस्तु वा ॥ ३३० ॥

इगुपधात् झलन्तात् ऋवर्णान्तात् च परौ अनिटौ आत्मनेपदविषये लिङ्सिचौ कितौ स्तः, गमस्तु वा।

५· ·१· ५··१· ७· ७··१··१·

हनः सिच् यमस्तु सूचने विवाहे तु वा ॥ ३३१ ॥

हनः सूचनार्थे यमश्च परः अनिट् आत्मनेपदनिमित्तकं सिच् कित् विवाहार्थे यमः परस्तु वा स्यात्।

·१· ·१· ·९·
न—क्त्वा सेट्— ॥ ३३२ ॥

सेट् क्त्वा कित् न स्यात्।

१· · ५· ५··१·
निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषो मृषस्तु
७·
क्षान्तौ ॥ ३३३ ॥

एभ्यः सेट् निष्ठा कित् न स्यात्, मृषस्तु क्षमायाम्।

५· ५· ७: ·१·
उदुपधात् शब्वतो भावादिकर्मणोर्वा ॥३३४॥

कृतशब्विकरणात् उदुपधात् धातोः भावे आरम्भकर्मणि च विहिता सेट् निष्ठा कित् न स्यात् वा।

५· ·१· ·१·
पूङः क्त्वा च ॥ ३३५ ॥

पूङः धातोः परा सेट् निष्ठा क्त्वा च कित् न स्यात्।

५· ५·
नोपधात् थफान्तात् तृषिमृषिकृषिवञ्चिलु-
५· ·१· ·१· ·१·
ञ्चृतश्च क्त्वा वा ॥ ३३६ ॥

नकारोपधात् थकारान्तात् फकारान्तात् च तृष्यादिभ्यश्च परः सेट् क्त्वा कित् वा स्यात्।

५· ५··१· ५· ·१··१·
इदुदुपधाद्रलन्ताच्च हलादेः संश्च ॥३३७॥

इकारोकारोपधात् रलन्तात् हलादेः धातोः परः सेट् क्त्वा सन् च कित् वा स्यात्।

·१· १· ·१·
अपिद् दाधा घु ॥ ३३८ ॥

अपित् दा धा च घुसंज्ञः स्यात् ।

६· १· १·
द्विरुक्तस्यादिरभ्यासः ॥ ३३९ ॥

कृतद्वित्वस्य आदिः अभ्याससंज्ञः स्यात् ।

इति संज्ञाप्रकरणम् ।

---

## अथ भ्वादितिङन्तप्रकरणम् ।

७·
धात्वर्थक्रियाप्राधान्ये धातो—स्तिङ्—॥३४०॥

धात्वर्थक्रियाप्राधान्ये द्योत्ये धातोः तिङ् स्यात् । कृत्सु तु न धात्वर्थक्रियाप्राधान्यम् ।

५· ७: ५· ·१·
सकर्मकात् कर्त्तृकर्मणोरकर्मकात् तु कर्त्तृ-
७:
भावयोः ॥ ३४१ ॥

सकर्मकात् धातोः कर्त्तरि कर्मणि च अकर्मकात् तु कर्त्तरि भावे च अर्थे तिङ् स्यात् । तत्र पदव्यवस्था लडाद्यर्थविशेषाश्च अग्रे वक्ष्यन्ते । भू सत्तायाम् । भू—ति इति स्थिते ।

७· ७· ·१·
कर्त्तरि सार्वधातुके शप् ॥ ३४२ ॥

कर्त्रर्थकसार्वधातुके परे धातोः शप् स्यात् । शपौ इतौ ।

असति विशेषे सर्वधातुभ्यः एव शप्। तथाहि, धातवः त्रिविधाः—सौत्राः गणपठिताः पारिभाषिकाश्च। तत्र सौत्राणां पाठानुसारेण तत्तद्गणकार्य्याणि। गणपठितास्तु दशविधाः। यथा—

भ्वाद्यदादी जुहोत्यादिर्दिवादिः स्वादिरेव च।
तुदादिश्च रुधादिश्च तनक्र्यादिचुरादयः॥

एते च दशविधाः धातवः गणपाठे पाणिनिना गणभेदेन पठिताः, ते च सिद्धान्तकौमुदीग्रन्थोत्तरार्द्धे प्रकरणभेदेन दर्शिताः। तत्र भ्वादिप्रभृतीनां नवविधानां सार्वधातुकविषये विकरणतल्लुप्रूपकार्य्यभेदात् तेषां विशेषगणीयत्वम्, आर्द्धधातुके तु सर्वगणीयानाम् एकरूपम् एव कार्य्यम्। तत्र च सामान्यतः कर्त्रर्थे सार्वधातुके भ्वादिभ्यः शप्, अदादिभ्यः शपः लुक्, जुहोत्यादिभ्यः कृतस्य शपः लुकि द्वित्वम्, दिवादिभ्यः श्यन्, स्वादिभ्यः श्नुः, तुदादिभ्यः शः, रुधादिभ्यः श्नम्, तनादिभ्यः उप्, क्र्यादिभ्यःश्ना। एतान् विशेषान् आदायैव एषां तत्तद्गणीयताव्यवहारः। चुरादिभ्यस्तु स्वार्थे णिचि तदन्तत्वेन प्रत्ययान्ततया पुनः पारिभाषिकधातुसंज्ञा। एवञ्च णिच्प्रत्ययान्ततया कृतधातुसंज्ञेभ्यः तेभ्यः अन्येभ्यः पारिभाषिकेभ्यश्च शबेव विकरण इति विशेषः। तत्र गणभेदेन सार्वधातुके कार्य्यविशेषार्थम् इदं प्रकरणम्। तत्र भुवः भ्वादिगणीयतया अनेन शपि कृते।

६: १· ७·

## पुगन्तलघूपधस्य च ॥३४३॥

## इगुपधयोर्गुणः क्ङिद्भिन्नप्रत्यये ॥३४३॥

क्ङिद्भिन्ने प्रत्यये परे इगन्तस्य लघूपधस्य च गुणः स्यात्। इति गुणे अवादेशे भवति। एवं भवतः। (२४८ सू०)

परस्परूपे भवन्ति। भवसि भवथः भवथ। (१७५ सू० ) दीर्घे भवामि भवावः भवामः। प्राप्त्यर्थकस्य तु भवतेः आत्मनेपदे।

५· ६·· ६· ·१·

अतो—ङितामात ईत् ॥ ३४४ ॥

अकारात् परस्य ङित्संज्ञकस्य तिङः आतः स्थाने ईत् स्यात्। इति ईत्त्वे भवेते। भवन्ते, भवसे, भवध्वे। परस्परूपे भवे। दीर्घे भवावहे भवामहे। विधिलिङि अपि गुणे अवादेशे च कृते।

६· ६·· १··

विधिलिङो यायुस्यामामिदियुसियमः* ॥३४५॥

अकारात् परस्य विधिलिङः या, युस्, याम् इत्येषां स्थाने क्रमेण इत्, इयुस्, इयम् एते स्युः। इति इत्त्वे गुणे भवेत्। भवेताम्। युसः इयुसि भवेयुः। भवेः भवेतम् भवेत। यामः इयमि भवेयम्, भवेव, भवेम। भवेत भवेयाताम् भवेरन् भवेथाः भवेयाथाम्। भवेध्वम् भवेय भवेवहि भवेमहि। लोटि अपि गुणे अवादेशे च भवतु भवताम्। परस्परूपे भवन्तु।

५· ५· ५· ५· ·१· ६· १·

अतः शुपोऽसंयुक्तान्नोश्च हेर्लोपः ॥ ३४६ ॥

अकारात्, शुपः, असंयुक्तात् नुप्रत्ययात् च, परस्य हेः लोपः स्यात्। इति हिलोपे भव भवतम् भवत। भवानि, भवाव, भवाम। भवताम्। आतः ईत्त्वे भवेताम्। परस्परूपे

* इयुसियमोर्विभक्त्यादेशतया विभक्तित्वात् तत्स्थसकार-मकारयोर्नेत्त्वं न विभक्तौ तुस्मा इति पाणिनीयात् इतस्तकारस्तु क्रस्वरूपकालग्रहणार्थतया इत्।

भवन्ताम् भवस्व भवेथाम् भवध्वम् । भवै भवावहै भवामहै ।
लङि ।

७: ६··१· ६· ·१··१· ·१·

## लङ्लिङ्लृङ्षु धातोरडजादेस्त्वाट् न माङ्मास्माभ्याम् ॥ ३४७ ॥

३:

एषु परेषु धातोः अट् स्यात्, अजादेस्तु आट्, न तु माङ्मास्माभ्यां योगे। टः इत्। टित्वात् आदौ आगमः। इति अटि अपि गुणे अवादेशे च अभवत् अभवताम्। पररूपे अभवन्। अभवः अभवतम् अभवत। अभवम् अभवाव अभवाम। अभवत। आतः ईत्वे अभवेताम्। पररूपे अभवन्त। अभवथाः अभवेथाम् अभवध्वम् अभवे। दीर्घे अभवावहि अभवामहि। लुङादिरूपम् अग्रे तत्तत्प्रकरणे वक्ष्यते।

५· ६· १· ६· ·१··१·

## श्रुवः शपः श्नुः श्रुवः शृ च *॥ ३४८ ॥

श्रुवः परं विहितस्य शपः स्थाने श्नुः स्यात्, तस्मिंश्च परे श्रुवः शृ इत्यादेशः स्यात्। शः इत्। विकरणे न विकरण इति सिद्धान्तात् पुनः न शप्। इति श्नौ शृ इत्यादेशे (१४५ सू०) नु इत्यस्य अङ्गसंज्ञया गुणे शृणोति। शृणुतः। (१८७ सू०) उवङि प्राप्ते।

* श्नोः पित्करणं सार्वधातुकसंज्ञार्थं, ततश्चापित्सार्वधातुकत्वेन ङित्वात् तस्मिन् परे न गुणः। एवं श्नन् आदौ अपि द्रष्टव्यम्।

६: ·१· ७· ७· ७·
असंयुक्तश्नुहुवो र्वङ् सार्वधातुकेऽगुणेऽचि * ॥ ३४९ ॥

सार्वधातुके गुणसाधनभिन्ने अजादौ प्रत्यये परे असंयुक्तश्नोः हुवश्च वङ् स्यात्। अङौ इतौ। इति वङि शृण्वन्ति। अगुणे किम् शृणवै।

६· ६· ६· ·१· ६· १· ·१· ७:
असंयुक्तस्य नो रूपस्योतो लोपो वा म्वोः
५· ·१· ७· ·१· २·
क्रञस्तु ये च नित्यम् ॥ ३५० ॥

वादिमादिप्रत्यययोः परयोः असंयुक्तस्य नो रूपः च उतः लोपः वा स्यात्, क्रञस्तु ये तयोश्च परतः नित्यम्। शृण्वः शृणुवः। शृण्मः शृणुमः। उतः इत्युक्तेः शृणोमि इत्यादौ ओतः लोपः न ( ३४६ सू० ) हिलोपे शृणुहि।

५: ६· १· ६: ·१· १:
कृविधिविभ्यां शपः श्नुस्तयोश्च कधौ ॥३५१॥

आभ्यां शपः श्नुः स्यात्, सति च तस्मिन् धात्वोः क्रमेण कधौ स्याताम्। कृवि—कृणोति, धिवि—धिनोति।

५: ·१·
अक्षतनूकरणार्थतक्षिभ्यां वा ॥ ३५२ ॥

अक्षतेः तनूकरणार्थतक्षतेश्च परस्य शपः स्थाने श्नुः स्यात् वा। इति शपः श्नौ णत्वे गुणे च अक्ष्णोति अक्ष्णुतः

---

* हुवः संयोगादित्वासम्भवेन श्नोरेव असंयोगेति विशेषणम्।

संयुक्तत्वात् न उवङ्। उवङि अक्ष्णुवन्ति, अक्ष्णुवः अक्ष्णुमः। अक्ष्णुहि, पक्षे अक्षति इत्यादि। एवं तक्ष्णोति इत्यादयः। अन्यार्थे तु तं स तक्षति भर्त्सयति इत्यर्थः। क्रम्‌धातोः अपि।

५ः ०१०।०
भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसियसिसंयसित्रुटिल-षिभ्यः श्यन् वा ॥ ३५३ ॥

एतेभ्यः शपः श्यन् वा स्यात्। अनौ इतौ। इति श्यनि।

६ः ७० १० ६०।०
ष्ठिवक्लमाचमां शिति दीर्घः क्रमस्तु परस्मै-
७०
पदे ॥ ३५४ ॥

शिति परे एषां दीर्घः स्यात्, क्रमस्तु परस्मैपदविषये। इति दीर्घे क्राम्यति, पक्षे क्रामति। आत्मनेपदे तु क्रम्यते क्रमते इत्येव। एवं क्लाम्यति इत्यादि। ष्ठिवस्तु ( २८७ सू० ) अजादौ दीर्घनिषेधे अनेन दीर्घे ष्ठीवति। आचामति। आङः अन्यत्र चमति विचमति।

पा, घ्रा, ध्मा, स्था, म्ना, दाण, दृश्यर्त्ति, यम,
६ः
गम, शद, सदीषि, म्ना, जनां, पिब, जिघ्र, धम,
तिष्ठ, मन, यच्छ, पश्यर्च्छ, यच्छ, गच्छ, शीय,
१ः ७० ६० ०१०।०  ७०
सीदेच्छ, जाः शिति सरतेस्तु धौर्वेगगतौ॥३५५॥

शिति परे एषाम् एते आदेशाः क्रमात् स्युः। वेगगत्यर्थ-कसरतेस्तु धौः इत्यादेशः। पा—पिबति घ्रा-जिघ्रति ध्मा-

धमति स्था-तिष्ठति म्ना-मनति दाण-यच्छति दृश-पश्यति ऋ-ऋच्छति यम-यच्छति गम-गच्छति ।

५· ७· १·

**शदः शपि आत्मनेपदम् ॥ ३५६ ॥**

शब्विषये शदः आत्मनेपदं स्यात् । इति आत्मनेपदे शद-शीयते सद-सीदति । इषिश्रादीनां रूपम् अग्रे वक्ष्यते । सरतेस्तु वेगे धावति, अन्यत्र सरति ।

६:· १· ७· ६··१·

**दन्शसन्जस्वन्जां नलोपः शपि रन्जस्तु**

* ७:· १·

**भावकरणघञसनषकेषु च ॥ ३५७ ॥**

शपि परे दन्शादीनां नलोपः स्यात्, रन्जस्तु भावकरणार्थे घञि असि अने षके शपि च । इति नलोपे दन्श-दशति सन्ज-सजति स्वन्ज-स्वजते ।

६· ७· ·१· १· १·

**आटोऽचि सह वृद्धिः पररूपः ॥ ३५८ ॥**

अचि परे आटः पररूपः सह (पूर्वपरयोः एकादेशः) वृद्धिः स्यात् । इति वृद्धौ ऊह-औहत ।

इति भ्वादि ।

---

## अदादिप्रकरणम् ।

५:· ६· ·१·

**अदादिजुहोत्यादिभ्यः शपो लुक् ॥ ३५९ ॥**

एभ्यः शपः लुक् स्यात् । अद भक्षणे इत्यादयः गण-

पठिताः अदादयः, ते च ( सि० उ० १०९ पृ० ) द्रष्टव्याः । अद्-ति चरि अत्ति अत्तः अदन्ति ।

५: ६· १·

**हुझल्भ्यो हेर्धिः ॥ ३६० ॥**

जुहोतेः झलश्च परस्य हेः धिः स्यात् । इति धौ अद्धि ।

५· ६: ·१· ५· ·१· १·

**अदो लङ्दिस्योरट् हलस्तु लोपः ॥३६१॥**

अदः परयोः लङ्दिस्योः अडागमः, हलः परयोस्तु तयोः लोपः स्यात् । टः इत् । इति अटि आदत् आदः । हन्-ति हन्ति । तसि ।

६: १· ७· ७

**तनाद्यनिटोः पञ्चमवर्णलोपोऽगुणे अक्तिचि—**

७· ७· ·१·

**झलि ल्यपि च ॥ ३६२ ॥**

तनादीनाम् अनिटाञ्च अन्त्यपञ्चमवर्णस्य लोपः स्यात्, अगुणे झलादौ ल्यपि च परे अक्तिचि । तत्र तनु, षणु, क्षिणु, ऋणु, तृणु, घृणु, वनु, मनु । इति तनादयः ।

अनिट्सु गमि, नमि, मन्यति, यमि, रमि, हनि इति एते एव पञ्चमान्ताः अनिटः । इति नलोपे हतः ।

६:· ६· १· ७· ७·

**गमहनजनखनघसामुपधातो लोपोऽनङ्यचि ॥ ३६३ ॥**

एषाम् उपधाकारस्य लोपः स्यात् अनङि अगुणे अजादौ परे । इति उपधाकारस्य लोपे ( २५७ सू० ) घ्नादेशे घ्नन्ति । अनुस्वारे हंसि ।

३· ६:· १·
**हिना हन्त्यस्तिशाधीनां जशो धिशाधयः ॥३६४॥**

हिसहितानाम् एषां स्थाने क्रमेण एते आदेशाः स्युः। जहि। दिस्योः लोपे अहन् अहन। लिह्—ति गुणे हस्य ढत्वे।

६· ६: १· ६·
**झषस्तथो र्धोऽधः ॥ ३६५ ॥**

झषः परयोः तथोः स्थाने धः स्यात् न तु धाञः। धः इत्। इति तकारस्य धत्वे ट्त्वेन ढत्वे ( १२७ सू० ) ढे ढलोपे लेढि। तसि गुणाभावे पूर्वाणः दीर्घे लीढः। लिहन्ति। सिपि हस्य ढत्वे।

६: १· ७·
**षढोः कः सि ॥ ३६६ ॥**

से परे षढयोः कः स्यात्। इति ढस्य कत्वे षत्वे च लेक्षि। ईश-ते शस्य ( २७१ ) षत्वे ट्त्वे ईष्टे।

५:· ६: ·१·
**ईशीड्जनिभ्यः सार्वधातुकसध्वयोरिट् ॥३६७॥**

एभ्यः परयोः सार्वधातुकसंज्ञयोः स्थाने इडागमः स्यात्। टः इत्। टित्वात् आदौ इति इटि ईशिषे ईशिध्वे। एवम् ईडिषे इत्यादि। सू—ते सूते ऐपि तु।

६· ७· १· ६· ·१ १·
**शीङः सार्वधातुके गुणः सुवस्तु न ॥३६८॥**

शीङः गुणः स्यात् सार्वधातुके परे, सुवस्तु तस्मिन् न। सुवै। शी-ते, गुणे शेते गुणे अयादेशे च शयाते।

५·　६·　६·　·१·　५··१··१·

**शीङोऽन्तोऽतो रुँट् विदस्तु वा ॥ ३६९ ॥**

शीङः परस्य अन्तः स्थाने जातस्य अत् इत्यस्य स्थाने रुँडागमः स्यात्, विदः परस्य तु वा स्यात् । उटौ इतौ । (४४० सू०) वक्ष्यमाणेनान्तस्थाने अति रुटि च शेरते शेरताम् अशेरत । विदस्तु संविद्रते संविदते ।

५·　६:·　६:·　१:·　·१·

**विदस्तिबादीनां नवानां णबादयो वा ॥३७०॥**

विदः परेषां तिबादीनां नवानां स्थाने क्रमेण णबादयः नव वा स्युः । वेद वेत्ति, विदतुः वित्तः, विदुः विदन्ति, वेत्थ, वेत्सि, विदथुः वित्थः, विद वित्थ, वेद वेद्मि, विद्व विद्वः, विद्म विद्मः । लोटि ।

५·　·१·　·१·　७:　७··१·　१·

**विदो ङाम् वा लिङ्लोटोर्लोटि तु कृञे-**

·१··१·

**वानु ॥ ३७१ ॥**

लिटि लोटि च परे विदः परं ङाम् स्यात् वा, सति च ङामि लोटि कृञ् एव अनुप्रयुज्यते । ङः इत् । ङित्त्वात् न गुणः । इति ङामि कृञ्प्रयोगे च विदाम् कृ तु इति स्थिते ।

५:·　·१·　७·　७·

**तनादिभ्यः शुप् कर्त्रर्थे सार्वधातुके ॥३७२॥**

कर्त्रर्थे सार्वधातुके परे तनादिभ्यः शुप् स्यात् । शपौ इतौ । इति शपि गुणे च विदाङ्करोतु । पक्षे वेत्तु । तामि ।

६· ६·　·१·　७·

**शुप्प्रत्ययान्तकृञोऽतः उदगुणे ॥ ३७३ ॥**

श्नुप्रत्ययान्तस्य अकारस्य उत् स्यात्, अगुणे प्रत्यये परे। इति अतः उत्वे विदाङ्कुरुताम् वित्ताम् ( ३४६ सू० ) हिलोपे विदाङ्कुरु। पक्षे हेः धौ विद्धि। लङि दिलोपे अवेत्। अवित्ताम्। अनि तु।

५: ६० ०१० ५००१० १०

**सिजभ्यस्ताभ्यामन उस् द्विषविदातस्तु वा**

**॥ ३७४ ॥**

सिचः, अभ्यस्तात् च परस्य अनः स्थाने उस् स्यात्, द्विषेः वेत्तेः आदन्तात् च तु वा स्यात्। अविदुः अविदन्। सिपः लोपे पदान्तत्वे।

७० ६: १० ७० ०१०

**पदान्ते दधो रुँः सिपि वा ॥ ३७५ ॥**

पदान्तस्थस्य धातोः दस्य धस्य च रुः स्यात् वा, सिपि परे। उः इत्। इति रुत्वे अवेः, पक्षे अवेत्।

अस्—ति अस्ति। तसादौ तु।

६: १० ७० ७० ६००१०७०

**श्नमस्त्योरल्लोपोऽगुणे सार्वधातुकेऽस्तेस्तु से**

१००१०

**सलोपश्च ॥ ३७६ ॥**

श्नम्प्रत्ययस्य अस्तेः अकारस्य च लोपः स्यात् अगुणे सार्वधातुके परे, से तु अस्तेः सलोपश्च। इति अल्लोपे स्तः। सन्ति। सलोपे असि। लङि।

५० ६: ०१०

**अस्तिविद्यमानसिचो दिस्योरीट् रुदादि-**

५।३।१।१।१।

**अस्त्वट् च ॥ ३७७ ॥**

अस्तेः विद्यमानसिचश्च परयोः दिस्योः ईट् स्यात्, रुदादिभ्यस्तु अडीटौ पर्य्यायेण स्तः। टः इत्। इति ईटि आसीत् आसीः। रुद—ति।

५।३।　६।　६।१।

**रुदादिभ्यः सार्वधातुकस्य वलादेरिट् ॥३७८॥**

रोदितिः स्वपितिश्चैव श्वसितिः प्राणितिस्तथा।
जक्षितिश्चैव विज्ञेयो रुदादिः पञ्चको गणः॥

इत्युक्तरुदादेः परस्य सार्वधातुकस्य वलादेः इट् स्यात्। टः इत्। आदौ आगमः। रोदिति रुदितः। वलादित्वाभावात् रुदन्ति। लङीटि पक्षे अटि च अरोदीत् अरोदत्। अरोदीः अरोदः। एवं स्वपित्यादयः। जक्षिति जक्षितः। (१५५ सू०) अभ्यस्तसंज्ञायाम्।

५।　६।　१।

**अभ्यस्तादन्तोऽतिः ॥ ३७९ ॥**

अभ्यस्तात् परस्य अन्त् इत्यस्य स्थाने अतिः स्यात्। इकारः इत्। इति अति जक्षति (३७४ सू०) अनः उसि अजक्षुः। जागृ जागर्त्ति जागृतः। अनि तु अनः उसि।

६।　१।　६।　७।　६।१।

**अभ्यस्तस्य गुणोऽन उसि जागुस्त्वचिणव्ङिति च ॥ ३८० ॥**

अभ्यस्तस्य गुणः स्यात्, अनः जाते उसि परे, जागर्त्तेस्तु चिण्णब्ङिद्भिन्ने उसि च परे। इति गुणे अजागरुः। सिपि

गुणे ( ३६१ सू० ) सिपः लोपे अजागः। दरिद्रा—दरिद्राति।

६· ·१· ७· ७· ७·
दरिद्र इदगुणे—हलि सार्वधातुके—हाग्-
६: ·१· ·१·
भ्योस्तु वा ॥ ३८१ ॥

अगुणे हलादौ सार्वधातुके परे दरिद्राधातोः इत् अन्तादेशः स्यात्, हाग्भ्योस्तु वा। इति इत्त्वे दरिद्रितः।

६: ६· १· ७· ·१· १· ·१· ६·
आभ्यस्तयोरातो लोपो हलि त्वीत् न घोः
॥ ३८२ ॥

आप्रत्ययस्य अभ्यस्तस्य च आकारस्य लोपः स्यात् अगुणे सार्वधातुके परे, हलादौ तु ईत् न तु घुसंज्ञस्य। इति आलोपे अत्यादेशे दरिद्रति। शास—ति शास्ति।

६· ·१· ७: ६· ७· ·१· ६· ·१·
शास इदङ्हलोरुपधायाः क्वौ त्वाशासश्च*
॥ ३८३ ॥

शास्तेः उपधायाः इत् स्यात् अङि अगुणे हलादौ च परे, क्वौ तु शास्तेः आशास्तेश्च स्यात्। इति इत्त्वे ( १७८ सू० ) षत्वे टुत्वे शिष्टः। ( ३७९ सू० ) अन्तः स्थाने अति शासति। ( ३६५ सू० ) शाधि।

---

* सार्वधातुके इति न अनुवर्त्तते, क्वौ तु इति तुकारस्वरसात्। अगुणे इत्येव अनुवर्त्तते, क्विपि तत्सम्भवात्।

६· ६·१· ७· ७· ·१· १· ·१·
पदान्तस्य सस्य दः दिपि सिपि तु रुँर्वा ॥३८४॥

दिपि परे पदान्तस्य सस्य दः स्यात्, सिपि तु रुः स्यात् वा। अकारः रोः उकारस्य इत्। दिपि अशात्। सिपि अशाः अशात्।

६· १· ७· ·१· ·१· ७· ७·
मृजेर्वृद्धिरकिङ्ङिति वा त्वच्यगुणे ॥ ३८५ ॥

मृजेः वृद्धिः स्यात् किदङ्किद्भिन्नप्रत्यये परे, अगुणे अजादौ तु वा। इति वृद्धौ ( २६१ सू॰ ) जस्य षत्वे टुत्वे मार्ष्टि। मृष्टः। मार्जन्ति मृजन्ति। जस्य षत्वे तस्य भावे जश्-त्वेन डत्वे हेः धित्वे टुत्वे मृड्ढि, दिलोपे षत्वडत्वे जश्चरौ अमाड् अमाट्। रात्सस्यैवेति (२६८ सू॰) नियमात् न संयो-गान्तलोपः।

६· ६· १· ७· ७·
अनभ्यस्तस्योतो वृद्धिः सार्वधातुके पिति
७· ·१· ·१· ६·
हलि वा तूर्णोतिः ॥ ३८६ ॥

अभ्यस्तभिन्नस्य धातोः उतः वृद्धिः स्यात् ऊर्णोतिस्तु वा सार्वधातुके पिति हलादौ परे। इति वृद्धौ यु—यौति, नु—नौति।

५· ·१· ६· ६· ६·
ब्रुव—ईट् सार्वधातुकस्य पितो वलो रुस्तु-
५:· ·१· ६· ·१·
यङ् लुङन्तेभ्यस्त्वपितोऽपि ॥ ३८७ ॥

ब्रुवः परस्य सार्वधातुकस्य पितः वलादेः ईट् स्यात्, रुस्तु-

यङ्लुगन्तेभ्यस्तु अपितः अपि स्यात्। टः इत्। इति ईटि गुणे ब्रवीति। ब्रूतः। ब्रुवन्ति। रु—ति रवीति रौति। रु-तस् रुवीतः रुतः। रुवन्ति। स्तु-ति स्तवीति स्तौति। स्तु-तस् स्तुवीतः स्तुतः।

५· ६ः· ६ः· १ः· १ः·
ब्रुवस्तिबादीनां पञ्चानां णबादयः पञ्च
६· ·१ः १·
ब्रुवश्चाहः ॥ ३८८ ॥

ब्रुवः परेषां पञ्चानां तिबादीनां स्थाने पञ्च णबादयः वा स्युः, तस्मिन् सति ब्रुवश्च आहः। इति णबाद्यादेशे आह च आह आहतुः आहुः।

६· १· ७·
आहस्थँस्थपि ॥ ३८९ ॥

आह इत्यस्य थँः अन्तादेशः स्यात्। अः इत्। इति थल्वे चरि आत्थ, आहथुः। पक्षे ब्रवीति ब्रूतः ब्रुवन्ति इत्यादि। इण्-ति एति इतः ( १८७ सू० ) इयङि प्राप्ते।

६· ·१· ७· ७·
इणो यँङच्यगुणे ॥ ३९० ॥

अगुणे अजादौ परे इणः यँङ् स्यात्। अङौ इतौ। इति यङि यन्ति। अगुणे किम् अयानि। इक् इङ् च अधि-पूर्वकः एव प्रयुज्यते। तत्र इकः।

६· ·१· ७· १·
इक इणवत्तिङि रूपम् ॥ ३९१ ॥

इणः इव इकः तिङः रूपम् स्यात्। अध्येति अधीतः

अधियन्ति । तिङः इत्युक्तेः क्ङति न तेन तत्र सति निमित्ते इयङ् एव, तेन ससीतयो राघवयोरधीयन् इति भट्टिः । वश्न्ति षत्वटुत्वे वष्टि तसादेः ङित्त्वात् ।

६ः ७ १
## वचिस्वपियजादीनां किति सम्प्रसारणं ग्रहिज्याव्यधिवष्टिविचतिवृश्चतिपृच्छतिभ्रज्जतीनां ङिति चोभयेषां व्यथश्चाभ्यासस्य लिटि ॥ ३८२ ॥
६ः ७ १ ६ः ६ १ ६ ७

किति परे वच्यादीनां, किति ङिति च परे ग्रहिज्यादीनां सम्प्रसारणं स्यात्, लिटि तु उभयेषां, व्यथस्य अभ्यासस्य । तत्र यजादयः । यथा—

यजिर्वपिर्वसिश्चैव वेञ्व्येञौ ह्वयतिस्तथा ।
वदिर्वसिश्च श्वयतिरिते नव यजादयः ॥

इति सम्प्रसारणे ( २३८ सू० ) पूर्वरूपे च उष्टः । उशन्ति । वचेस्तु वक्ति वक्तः । वचेस्तु अन्तिप्रयोगः न अस्ति इति सिद्धान्तः ।

इति अदादि ।

# जुहोत्यादि ।

६ः १ ७ ८
## जुहोत्यादीनां द्वित्वं कर्त्तरि सार्वधातुके ॥ ३८३ ॥

कर्त्रर्थे सार्वधातुके परे जुहोत्यादीनां द्वित्वं स्यात्। इति द्वित्वे हु हु-ति इति स्थिते अपि तत्लुकि च।

६· ·
**अभ्यासस्य—ऋ, झष्, खय्, कुह, दीर्घा-**
६:· १:·
**णामद्, जश्, चय्, चुञ्, ह्रस्वाः ॥ ३९४ ॥**

अभ्यासस्थानाम् ऋवर्णझष्खय्कवर्गहकारदीर्घाणां स्थाने क्रमेण अकारजश्चय्चवर्गजकारह्रस्वाः इति आदेशाः स्युः। इति अभ्यासस्यहस्य जत्वे गुणे जुहोति जुहुतः ( ३४८ सू० ) वङि ( ३७९ सू० ) अति च जुह्वति। ( ३६० सू० ) हेः धौ जुहुधि ( ३७४ सू० ) अनः उसि ( ३८० सू० ) गुणे च अजुहवुः। भी-ति द्वित्वे अभ्यासभस्य बत्वे ह्रस्वे गुणे बिभेति ( ३८१ सू० ) वा ह्रस्वे बिभितः, पक्षे बिभीतः ( १९८ सू० ) ये अति आदेशे च बिभ्यति। ह्री-ति द्वित्वे ह्रीह्री—ति स्थिते।

७· १· ·१· ·१· १·
**अभ्यासे आदिर्हलश्च शेषः शरादिखयन्तसं-**
६· ·१· १·
**योगादेस्तु द्वितीयः ॥ ३९५ ॥**

अभ्यासे हलां मध्ये आदिः हल् अत् च शिष्यते, अन्ये हलः अचश्च लुप्यन्ते, शर्पूर्वखयन्तसंयोगादेस्तु द्वितीयः एव शिष्यते। इति रस्य लोपे ह्रस्वे हस्य जत्वे गुणे च जिह्रेति। जिह्रीतः ( १९७ सू० ) इयङि अतौ च जिह्रियति। पृ—पालने।

६।१ ६।६ ।१।

## अर्त्तिपृभृञ्माङ्हाङामभ्यासस्याच इत्

७।

## सार्वधातुके ॥ ३९६ ॥

सार्वधातुके परे एषाम् अभ्यासस्य अचः इत् स्यात्। अस्यापवादः ; इति अभ्यासस्य अचः इत्त्वे गुणे पिपर्त्ति।

६।१। ७। ५। ।१।।१।

## ऋत इद्गुणे ओष्ठ्यवर्णात् तूर् ॥ ३९७ ॥

अगुणे परे ऋकारस्य इर् स्यात्, ओष्ठ्यवर्णात् परस्य तु उर् स्यात्। इति उरि (२९७ सू०) दीर्घे पिपूर्त्तः। उरि अच्परत्वाद्दीर्घाभावे अति च कृते पिपुरति। भृ-ति इत्त्वे गुणे बिभर्त्ति बिभृतः बिभ्रति। लुङि दिपि सिपि च गुणे हल्परतया दिस्योः लोपे अबिभः। अनः उसि गुणे च अबिभरुः। मा-ति (३८२ सू०) अतः ईत्त्वे मिमीते। हाङ्-ते जिहीते जिहाते जिहते। हाकस्तु जहाति (३८१ सू०) इत्त्वे जहितः। पक्षे ईत्त्वे जहीतः। आतः लोपे अदादेशे च जहति।

६। ।१।।१।७।

## जहाते-रा च हौ ॥ ३९८ ॥

हौ परे जहातेः आत्त्वम् इदीतौ च प्राप्तौ स्याताम्। जहाहि जहिहि जहीहि।

६। १। ७।

## आतो लोपो विधिलिङि ॥ ३९९ ॥

विधिलिङि परे जहातेः आतः लोपः स्यात्। जह्यात्। दा-ति ददाति (३८२) सू०) ईत्त्वनिषेधे आलोपे चरि दत्तः ददति। दत्ते। दा-हि दिस्थते।

६: ६: १: ७·

## दाधोर्द्विरुक्तयोर्देधे हौ ॥ ४०० ॥

हौ परे द्विरुक्तयोः दा, धा, इत्यनयोः क्रमेण दे, धे इति आदेशौ स्तः। देहि। अददात्। अददुः। धा-ति दधाति। तसि तु द्वित्वे धस्य दत्वे आलोपे।

६· ६· १· ७: ६· ७·

## धाञोऽभ्यासदस्य धँस्तथोरन्त्यातो लोपे ॥४०१॥

धाञः अभ्यासस्थस्य दस्य धँः स्यात्, अन्त्यातः लोपे सति तथयोः परयोः। इति अभ्यासस्य दस्य धत्वे चरि धत्तः। दधति। द्वित्वे आलोपे धत्वे (२३६ सू०) भष्भावे धस्य चरि धत्से। भष्भावे जश्चि धद्ध्वे। धेहि। निज्-ति द्वित्वे आदिभिन्नहलः लोपे।

६:· ६· १· ७·

## निजविजविषामभ्यासस्य गुणः सार्वधातुके॥४०२॥

एषाम् अभ्यासस्य गुणः स्यात्, सार्वधातुके परे। इति अभ्यासगुणे मूलधातुगुणे कुत्वे च नेनेक्ति, नेनिक्तः।

·१· ६· १· ७· ७·

## नाभ्यस्तस्योपधागुणोऽचि सार्वधातुके ॥ ४०३ ॥

अभ्यस्तधातोः उपधागुणः न स्यात्, सार्वधातुके अजादौ परे। इति गुणनिषेधे नेनिजानि। एवं विजविषौ। जन-ति जजन्ति। तसि तु।

६:· ·१· ७· ७· ७· ·१··१·

## जनसनखनामात् झलि क्ङिति ये तु वा ॥४०४॥

एषाम् आदन्तादेशः स्यात् किति ङिति च झलादौ परे, ये तु तथाभूते वा। इति आत्वे द्वित्वे ह्रस्वे च जजातः।

(३६२ सू०) उपधातः लोपे जघ्नति, इटि जघ्निषे जघ्निध्वे। ऋ-ति द्वित्वे अभ्यासस्य इत्वे धातोः गुणे।

६· ६: १: ७· ७·

अभ्यासस्य य्वोरियँङुवँङावसवर्णेऽचि ॥४०५॥

असवर्णे अजादौ परे अभ्यासस्य इदुतोः स्थाने क्रमात् इयँङुवँङौ स्याताम्। अङौ इतौ। इति इयर्ति इयृतः। इय्रति। लङि ऐयः अनि ऐयरुः।

इति जुहोत्यादि।

---

## दिवादिप्रकरणम्।

५: ·१· ७· ७·

दिवादिभ्यः श्यन् कर्त्तरि सार्वधातुके ॥४०६॥

कर्त्तर्थे सार्वधातुके परे दिवादिभ्यः श्यन् स्यात्। शनौ इतौ। शपः अपवादः। दिवादयश्च (सि० उ० १३३ पृ०) द्रष्टव्याः। दिव्-ति श्यनि (२९७सू०) दीर्घे दीव्यति दीव्यतः (२४८ सू०) पररूपे दीव्यन्ति दीर्घे दीव्यामि (३४५ सू०) याभागस्य इत्वे गुणे दीव्येत्। इः लोपे दीव्य। एवम् अन्ये अपि तद्वणीयाः। जॄ-ति श्यनि (३९६ सू०) इरि दीर्घे जीर्यति। शो-ति श्यनि।

६· १· ६· १· ७·

ओतो लोपो मिदेर्गुणः श्यनि ॥ ४०७ ॥

श्यनि परे ओकारस्य लोपः, मिदेस्तु गुणः स्यात्। इति ओतः लोपे श्यति। सो-स्यति। दो-द्यति। जन-ति श्यनि (३५५ सू०) जादेशे जायते। श्नुजस्तु-श्यनि अपित्त्वेन ङित्त्वात्।

६: १ ७
## अनिदितामुपधानलोपः क्ङिति * ॥४०८॥

किति ङिति च परे इदिदन्यधातूनाम् उपधाभूतनकारस्य लोपः स्यात्। इति नलोपे रज्यति रज्यते। अनिदिताम् इत्युक्तेः इदितां न। इदितां तु।

६ १ ६
## इदितो नुँम् धातोः ॥ ४०९ ॥

गणपाठे इदितः धातोः नुँम् स्यात्। इति नुमि सति निमित्ते न नलोपः। इदि-इन्द्यात् कुथि-कुन्थ्यात् व्यध-ति श्यनि ( ३९२ सू० ) सम्प्रसारणे पूर्वरूपे च विध्यति मिद-ति श्यनि गुणे मेद्यति शम-ति श्यनि।

६ १ ७
## शमादीनां दीर्घः श्यनि ॥ ४१० ॥

श्यनि परे शमादीनां दीर्घः स्यात्। इति दीर्घे शाम्यति। शमादयश्च-शम, तम, दम, श्रम, क्षम, क्लम, भ्रम, मद, इत्येते अष्टौ।

इति दिवादि।

---

# स्वादि।

५ १ ७ ७
## स्वादिभ्यः श्नुः कर्त्तरि सार्वधातुके ॥४११॥

कर्त्रर्थे सार्वधातुके परे स्वादिभ्यः श्नुः स्यात्। शः इत्।

* अपूजार्थाञ्चतेः इत्यपि वक्तव्यं, तेन अञ्चितः पूजितः इत्यत्र न नलोपः।

शप: अपवाद:। स्वादयश्च ( सि० उ० १४५ पृ० ) द्रष्टव्या:।
इति श्नौ अपित्त्वात् अगुणाभावे विकरणगुणे सुनोति सुनुत:
( ३४८ सू० ) वङि सुन्वन्ति ( ३५० सू० ) पक्षे उत: लोपे
सुन्व: सुनुव:, सुन्म:, सुनुम:। हे: लोपे सुनु। एवं चिनुमिनु-
हिनुप्रभृतय:। आपस्तु परस्य श्नो: संयुक्तत्वात् उवङि आप्नु-
वन्ति। एवं तस्मात् एव उत: लोपाभावे आप्नुव: आप्नुम:।
तस्मात् एव च हे: लोपाभावे आप्नुहि इत्यादिभेद:।

इति स्वादि।

---

## तुदादि।

५: १० ७० ७०

### तुदादिभ्य: श: कर्त्तरि सार्वधातुके ॥४१२॥

कर्त्तर्थे सार्वधातुके परे तुदादिभ्य: श: स्यात्। श: इत्।
शप: अपवाद:। ते च ( सि० उ० १४८ पृ० ) द्रष्टव्या:। अस्य
अपित्त्वेन ङित्त्वात् गुणाभावे तुदति तुदते। पररूपे तुदन्ति।
दीर्घे तुदामि। या इत्यस्य इत्त्वे तुदेत्। हे: लोपे तुद। एवं
नुदादिशादय:। भ्रस्ज-ति शे सम्प्रसारणे पूर्वरूपे सस्य दत्वे
चुत्वे भृज्जति। व्रश्चव्यचप्रच्छीनां च सम्प्रसारणपूर्वरूपे
वृश्चति, विचति, पृच्छति, इत्यादिरूपम्। इष: शे (३५५ सू०)
इच्छादेशे इच्छति। लस्ज-ते शे सस्य दत्वे चुत्वे लज्जते।
एवं मस्ज-ति मज्जति।

६० ·१· ७० ७: ·१·

### ऋतो रिङ् शे यक्किदाशीर्लिङोश्च ॥४१३॥

ऋकारस्य रिङ् स्यात्, शे यकि कित्संज्ञकाशीर्लिङि च
परे। ङ: इत्। इति ऋत: रिङि इयङि धृ-ध्रियते। इङ्

तु आङ्पूर्वकः एव प्रयुज्यते आद्रियते। पृङ् व्याङ्पूर्वकः एव प्रयुज्यते व्याप्रियते। मृङः ङित्त्वेन सर्वत्र आत्मनेपदप्राप्तौ।

५· ७· ७: ·१·. १·

## मृङः शिति लुङ्लिङोश्चात्मनेपदम् ॥४१४॥

शिति लुङि लिङि च परे मृङः परम् आत्मनेपदं स्यात्, न अन्यत्र। इति नियमे शे विषये आत्मनेपदे रिङि म्रियते। अन्यत्र परस्मैपदं ममार इत्यादि। गॄ-ति शे इरि अच्परतया दीर्घाभावे च।

६· ६· १· ७· ७· ·१· ·१·

## गिरो रो लँ यङि अचि तु वा ॥४१५॥

गिरः इत्यस्य रस्य लँः स्यात्, यङि परे, अजादौ तु वा। अः इत्। इति रस्य लत्वे गिलति, पक्षे गिरति। कॄ-ति किरति।

५: ७· ५· ·१· ७· ६·

## प्रत्युपाभ्यां हिंसायामुपात् तु छेदने किरः सुँट् ॥ ४१६ ॥

·१·

प्रत्युपाभ्यां परस्य हिंसार्थकस्य, उपात् तु छेदनार्थकस्य च किरतेः सुँट् स्यात्। उटौ इतौ। टित्त्वात् आदौ आगमः। इति सुटि प्रतिस्किरति, उपस्किरति शत्रुं हिनस्ति इत्यर्थः। उपस्किरति धान्यं छिनत्ति इत्यर्थः।

६: ·१· ७·

## मुचादीनां नुँम् शे ॥ ४१७ ॥

शे परे मुचादीनां नुँम् स्यात्। उमौ इतौ। इति

नुमि अनुस्वारपरसवर्णौ मुञ्चति। मुच, लुप, विद, लिप, सिच, कृत, खिद, पिश। इति मुचादयः।

इति तुदादि।

---

## रुधादिप्रकरणम्।

५: १० ७ ७

### रुधादिभ्यः श्नम् कर्त्तरि सार्वधातुके ॥४१८॥

कर्त्रर्थे सार्वधातुके परे रुधादिभ्यः श्नम् स्यात्। श्नमौ इतौ। मित्त्वात् अनादिष्टस्य अपि अन्त्यात् अचः परः। शपः अपवादः। रुधादयश्च (सि० उ० १५८ १०) द्रष्टव्याः। इति श्नमि तकारस्य (२६५ सू०) धत्वे जश्त्वे णत्वे च रुणद्धि। (२७६ सू०) श्नमः अल्लोपे नस्य अनुस्वारे परसवर्णे रुन्द्धः। सवर्णजातस्य नस्य न णत्वम् इत्युक्तं प्राक्। रुन्धन्ति। सिपि तु श्नमि चर्भावे णत्वे रुणत्सि। मिपि रुणध्मि। रुन्ध्वः *। रुन्ध्मः। हेः धौ जश्त्वे रुन्द्धि। दिपि धस्य दत्वे अरुणत्। सिपि (३७५ सू०) पक्षे रुत्वे अरुणः अरुणत्। एवं छिदभिदादयः। शिषस्तु शिनष्टि शिंष्टः। शिंषन्ति। हेः धौ षस्य डत्वे टुत्वे अल्लोपे परसवर्णे शिण्ड्ढि। (४०८ सू०) हिंसेः इदित्त्वात् नुमि हिनस्‌ति श्नमि।

५ ६ १

### श्नमो नो लोपः ॥ ४१९ ॥

श्नमः परस्य नकारस्य लोपः स्यात्। इति नुमः नलोपे हिनस्ति, श्नमः अल्लोपे हिंस्तः। हिंसन्ति।

* रुन्ध इत्यत्र ४९८ पृ० का० झरि झरः लोपः।

६· ७· ७· ·१·

### तृणहः पिति वलि इम् ॥ ४२० ॥

कृतश्नमविकरणस्य तृह् इत्यस्य इम् स्यात् पिति वलादौ परे। मः इत्। मित्त्वात् अन्त्यात् अचः परः। इति इमि गुणे हस्य ढत्वे तत्परतकारस्य धत्वे ष्टुत्वे ढे ढलोपे णत्वे च तृणेढि। तसि तु श्नमः अल्लोपे हस्य ढत्वे तकारस्य धत्वे ष्टुत्वे ढे ढलोपे नस्य अनुस्वारे परसवर्णतया एव णत्वे तृण्ढः। तृंहन्ति। अनक्ति अञ्जः श्नमि नलोपे कुत्वे अनक्ति अङ्क्तः।

इति रुधादि।

---

## तनादिप्रकरणम्।

तनादयश्च ( सि॰ उ॰ १६१ पृ॰ ) तनादिभ्यः (३७२ सू॰) उपि गुणे उतश्च गुणे कृते तनोति। तनुतः। यणि तन्वन्ति। उतः वा लोपे तन्वः तनुवः तन्मः तनुमः। हेः लोपे तनु। कृञस्तु नित्यम् उतः लोपे कुर्वः कुर्मः। यादौ अपि उतः लोपे कुर्य्यात्।

५ः ७ः ६· ·१·

### सम्पर्य्युपेभ्यो भूषणसंघातयोः कृञः—सुँट् ॥ ४२१ ॥

भूषणसंघातयोः वर्त्तमानस्य सम्पर्य्युपेभ्यः परस्य करोतेः सुँट् स्यात्। उटौ इतौ। संस्करोति उपस्करोति परिष्करोति * बालम् अलङ्करोति इत्यर्थः।

* परिष्करोति इत्यत्र सुटः सस्य ( ५१३ सू॰) वक्ष्यमाणेन सूत्रेण षत्वम्।

संस्कुर्वन्ति केशाः संवीभवन्ति इत्यर्थः।

५· ७:·

## उपात् प्रतियत्नविकृतवाक्याध्याहारेषु ॥४२२॥

एषु अर्थेषु उपात् परस्य कृञः सुँट् स्यात्। प्रतियत्नः गुणाधानम्। विकृतं विकारः। वाक्यस्य अध्याहारः आकाङ्क्षितैकदेशपूरणम्। उपस्करोति कन्यां भूषयति इत्यर्थः। एधोदकस्य उपस्कुरुते एधोदकम् आहितगुणं करोति इत्यर्थः। उपस्करोति वाक्यं विकरोति अध्याहृत्य वा ब्रूते इत्यर्थः। अयं च सुट् द्वित्वात् आदौ मूलधातोः एव इष्यते, अथवा द्वित्वात् पूर्वं सुट्, ततः धातुः द्विः उच्यते, तेन संचस्कार इत्यादि सिद्धम्। अट् तु सुटः प्राक् एव जायते वक्ष्यमाणषत्वविधायकसूत्रे अड्व्यवधाने अपीति निर्देशात्। तेन पर्य्यष्कार्षीत् इत्यादि। एवं किरतेः सुट् अपि।

इति तनादि।

---

## क्र्यादिप्रकरणम्।

५: ·१· ७· ७·

## क्र्यादिभ्यः श्ना कर्त्तरि—सार्वधातुके ॥४२३॥

कर्त्रर्थे सार्वधातुके परे क्र्यादिभ्यः श्ना स्यात्। शः इत्। शपः अपवादः। ते च (सि० कौ० १६४ पृ०) द्रष्टव्याः। क्रीणाति। श्ना इत्यस्य (३८२ सू०) आतः ईत्त्वे क्रीणीतः। तेन एव सूत्रेण आतः लोपे क्रीणन्ति। क्रीणीते क्रीणाते क्रीणते। एवं प्रोमीप्रभृतयः।

५: १:

## स्तन्भादिभ्यः श्नुश्नौ ॥ ४२४ ॥

स्तन्भादिभ्यः कर्त्रर्थे सार्वधातुके श्नु, श्ना, इत्येतौ पर्य्यायेण भवतः। इति श्नौ ( ३८२ सू० ) नलोपे स्तभ्नोति श्ना पक्षे स्तभ्नाति। ते च स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ् इत्येते। ग्रह-श्ना ( ३८२ सू० ) सम्प्रसारणे णत्वे गृह्णाति गृह्णीतः गृह्णन्ति। हौ तु श्ना तस्मिन् परे सम्प्रसारणे।

५· ६· १· ७·

## हलः श्न आनो हौ ॥ ४२५ ॥

हल्वर्णात् परस्य श्ना इत्यस्य स्थाने आनः स्यात्, हौ परे। सर्वादेशः। इति श्नने गृहाण। बन्ध—ति श्ना नलोपे बध्नाति बध्नीतः, हौ तु बधान इत्यादि।

६· ७· १·

## प्वादीनां शिति ह्रस्वः ॥ ४२६ ॥

शिति परे प्वादीनां ह्रस्वः स्यात्। पुनाति पुनीते। ते च ( सि० च० १६५ पृ० ) ज्ञेयाः। एवं लुनाति लुनीते इत्यादि। ज्या—ति श्ना सम्प्रसारणे।

५· ६· ६· १·

## हलः सम्प्रसारणस्यान्त्यस्य दीर्घः ॥ ४२७ ॥

हलः परस्य सम्प्रसारणस्य अन्त्यस्य दीर्घः स्यात्। इति दीर्घे प्वादितया ह्रस्वे च जिनाति। मन्थस्तु श्ना नलोपे मथ्नाति मथ्नीतः इत्यादि। अन्येषां भ्वाद्यादिगणीयप्रसिद्धधातूनां रूपं मत्कृतधातुरूपादर्शे ज्ञेयम्।

इति क्र्यादि।

---

## चुरादिप्रकरणम्।

दशसु गणेषु मध्ये भ्वाद्यादयः नव एव सार्वधातुके विशेष-

विकरणवन्तः चुरादयस्तु न तथा, तेभ्यः सर्वत्र लकारे स्वार्थे णिचः विधानात्। चुरादेस्तु।

५ः॰ ॰१॰ ७॰

## चुरादिभ्यो णिच् स्वार्थे ॥ ४२८ ॥

चुरादिभ्यः स्वार्थे णिच् स्यात्। णचौ इतौ। णिचि।

१ः॰ १ः॰

## णिच्सनन्ताद्यन्ताः धातवः ॥ ४२९ ॥

णिजन्ताः सन्प्रत्ययाद्यन्ताश्च धातुसंज्ञाः स्युः। इति धातुसंज्ञायाम् अपवादाप्रसक्तौ सामान्यतः अपि गुणे अयादेशे च चोरयति। चोरयतः। अदन्तानां तु।

५॰ ६॰ १॰ ७॰

## हलोऽतो लोपोऽशिति ॥ ४३० ॥

अशिति परे हलः परस्य अतः लोपः स्यात्। इति अल्लोपे तस्य स्थानिवद्भावात् वक्ष्यमाणोपधावृद्धिः। गणयति कथयति इत्यादि। अन्यत् प्रेरणार्थणिचि वक्ष्यते।

इति चुरादि।

## स्वार्थिकप्रत्ययान्ततिङन्तधातुप्रकरणम्।

५ः॰ ७॰ ॰१॰ ६॰ ॰१॰ ॰१॰॰१॰

## गुपतिजकितेभ्यः स्वार्थे—सन् तस्य च नेट्

५ः॰ ॰१॰ ॰१॰ ॰१॰ ६॰

## मानवधदानशानेभ्यस्त्वीङ् चाभ्यासस्य ॥४३१॥

गुपादिभ्यः स्वार्थे सन् स्यात्, तस्य च न इट्, मानादेस्तु सन्, तेषाम् अभ्यासस्य ईङ् च स्यात्। तत्र गुपेः निन्दायाम्, तिजेः क्षान्तौ, कितेः व्याधिप्रतीकारे, निग्रहे अपनयने, संशये

च, मानेः विचारणे, बधेः चित्तविकारे, दानेः आर्जवे, शानेः निशाने, एतेषु एव अर्थेषु वर्त्तमानेषु तेभ्यः सन्। इति सनि।

६ः १·

## सन्यङन्तयोर्द्वित्वम् ॥ ४३२ ॥

सनन्तस्य यङन्तस्य च द्वित्वं स्यात्। इति द्वित्वे आदि-हल्शेषे अभ्यासस्थगस्य जत्वे (३२९ सू॰) अनिट्सनः कित्त्वेन गुणाभावे जुगुप्स इत्यस्य (४२९ सू॰) धातुसंज्ञायाम्।

६ः ·१· १·

## आयसनोः प्रकृतिवत् पदव्यवस्था ॥ ४३३ ॥

आयान्तस्य सनन्तस्य च धातोः तत्प्रकृतेः इव परस्मैपदा-त्मनेपदव्यवस्था स्यात्। इति गुपेः आत्मनेपदितया सनन्तस्य आत्मनेपदे सामान्यतः कर्त्तरि अपि पररूपे जुगुप्सते। तिजेः सनि द्वित्वे कुत्वे षत्वे तितिक्षते। कित-चिकित्सते। मानेः सनि अभ्यासस्य ईङि च मीमांसते। बधेः भष्भावे चरि बीभत्सते। दानेः—दीदांसते। शानेः-शीशांसते। गुपू रक्षणे।

५ः· १· ५· ·१· ७· ५· ·१·

## गुपूधूपपनिभ्य आयः पणेस्तु स्तुतौ कमेर्णिङ्

५· ·१· ७· ·१· १ः· ·१·

## ऋतेरीयङ् आर्द्धधातुके तु ते वा ॥ ४३४ ॥

गुपादिभ्यः स्वार्थे आयः स्यात्, पणेस्तु स्तुतौ एव कमेः णिङ् ऋतेश्च ईयङ् स्यात्। आर्द्धधातुके परे त्वायादयः वा स्युः। इति आये गुणे पुनः धातुसंज्ञायां अपि पररूपे गोपायति। धूप-धूपायति। पन-पनायते। स्तुतौ—पणायते, अन्यत्र पणते। कमेः णिङि।

६・　　६・　६・・१・　१・　७・　७・・१・
अत उपधाया इकश्च वृद्धिर्णिति ञिति च
॥ ४३५ ॥

णिति ञिति च परे उपधाभूतस्य अकारस्य इगन्ताङ्गस्य च वृद्धिः स्यात् । इति उपधाभूतातः वृद्धौ कामि इत्यस्य धातुसंज्ञायां अपि गुणे अयादेशे कामयते । ऋतेः ईयङि ऋतीयते ।

इति स्वार्थिकप्रत्ययान्ततिङन्तधातुप्रकरणम् ।

---

## लुङ्तिङन्तप्रकरणम् ।

अथ सर्वगणीयेभ्यः लुङादौ कार्य्यम् उच्यते । तत्र लुङि ।

५・　७・　・१・
धातोर्लुङि सिच् ॥ ४३६ ॥

लुङि परे धातोः सिच् स्यात् । अवाद्यपवादः । इति भुवः सिचि ।

५ः・　६・　・१・　८・
गातिस्थाघुभूपाभ्यः सिचो लुक् परस्मैपदे
५・・१・・१・　५ः・　७ः
घेसोच्छोभ्यस्तु वा तनादिभ्यस्तन्यासोः गुहदुह-
・ ५ः・・१・　७ः・・१・
दिहलिहेभ्यस्तु तन्थासध्वम्वहिषु वा ॥ ४३७ ॥

परस्मैपदे परे एभ्यः परस्य सिचः लुक्, धेटादिभ्यस्तु वा । तनादिभ्यस्तु तन्थास् इत्यनयोः परयोः, गुहादिभ्यस्तु तनादिषु परेषु वा । इति सिचः लुकि, लुङः अपित्सार्वधातु-

कत्वे न ङित्त्वात् सिचश्च लुका लुप्तत्वात् न गुणः। अभूत् अभूताम्।

६· ·१· ७· ७· ·१· ७·

## भुवो वुग् लुङि लिटि चाचि ॥ ४३८ ॥

अजादौ लुङि लिटि च परे भुवः वुगागमः स्यात्। कः इत्। कित्त्वात् अन्त्यावयवः। इति वुकि अभूवन्। अभूः अभूतम् अभूत। अभूवम् अभूव अभूम।

६· ६· ·१· ५:· ५· ·१·

## वलादेरार्द्धधातुकस्येट् सेड्भ्यः स्नुक्रमस्तु

७·

## परस्मैपदे ॥ ४३९ ॥

सेड्धातुभ्यः परस्य वलादेः आर्द्धधातुकस्य स्थाने इट् स्यात्, स्नु क्रमाभ्यां तु परस्मैपदे। टः इत्। टित्त्वात् आदावागमः। इति इटि गुणे अवादेशे षत्वे टुत्वे च कृते अभविष्ट। अभविषाताम्। भू-अन्त।

६· ६· १· ५·

## आत्मनेपदस्यस्यान्तोऽतिरनतः ॥ ४४० ॥

अकारभिन्नात् परस्य आत्मनेपदस्थस्य अन्तः इति भागस्य स्थाने अतिः स्यात्। इकारः इत्। इति अतौ अभविषत अभविष्ठाः अभविषाथाम्। भू-ध्वम्।

७· १· ·१·

## धि सलोपो वा ॥ ४४१ ॥

धकारे परे सस्य लोपः वा स्यात्। इति सलोपे।

५·　६:·　६·　१·　५·
**इण: षीध्वंलुङ्लिटां धस्य ढँ इट्परात्**
·१· ·१·
**तु वा ॥ ४४२ ॥**

इणन्तात्कवर्णात् परस्य षीध्वम् इत्यस्य लुङ्लिटोश्च धस्य ढँः स्यात्, इड्परात् तु वा। अः इत्। इति धस्य ढत्वे अभविढ्वम्, पक्षे मलोपे अभविध्वम्, पक्षे सस्य जश्भावे अभविढ्ढम्। अभविषि अभविष्वहि अभविष्महि।

चित—दि अटि सिचि इटि ( ३७७ सू० ) ईटि।

५:　७· ६·　१·　५· ·१·　६·
**ह्रस्वझल्भ्यां झलि सेर्लोप इटस्तु ईटि ॥४४३॥**

झलि परे ह्रस्वात् झलश्च परस्य, इटस्तु परस्य ईटि एव परे, सेः लोपः स्यात्। इति सिलोपे दीर्घे अचेतीत्। सौ-अचेतीः ( ३७४ सू० ) अनः उसि अचेतिषुः।

६·　७·　१·　७·
**एकाचः सिचि—वृद्धिः परस्मैपदे ॥४४४॥**

परस्मैपदे विहिते सिचि परे एकाचः इगन्तस्य वृद्धिः स्यात्। यु-अयावीत्, नु-अनावीत्। वृञ्-अवारीत्, तॄ-अतारीत्। एकाचः किम्, अजागरीत् अध्वनयीत्। श्वेस्तु अश्वयीत्।

६·　६··१· ६·
**व्रजवदारन्तालन्तस्यानिटश्चाचः ॥४४५॥**

परस्मैपदे सिचि परे व्रजेः वदेः अरन्तस्य अलन्तस्य अनिटश्च अचः वृद्धिः स्यात्। व्रज-अव्राजीत्, वद-अवादीत्। अनयोः वक्ष्यमाणविकल्पापवादः। ज्वर-अज्वारीत्, ज्वल-अज्वा-

लीत्। अनिटः नी-अनैषीत्, स्तु-अस्तौषीत्, कृ-अकार्षीत्। भिद्-अभैत्सीत्। पच-अपाक्षीत्। अत्र प्रसङ्गात् अनिटः संगृह्यन्ते।

श्रिश्रिडीश्वीयुरुनुस्नुक्षुक्ष्णुवृङ्वृञ्विवर्जिताः।
ऊदृदन्तौ विनैकाचोऽनिटोऽजन्तेषु सम्मताः॥
शक्लृ कान्तेषु चान्तेषु पचिर्मुचिरिचो वचिः।
विचिः सिचिश्च छान्तेषु प्रच्छिर्जान्तेष्वनिट् त्यजिः॥
निजिर्भजी भञ्जतिश्च भुज्भ्रस्जी मज्जतिस्तथा।
यजिर्युजी रञ्जिरुजी विजिर्मन्जौ तथाऽनिटः॥
सृजिः स्वन्जिश्च, दान्तेषु क्रमादेतेऽनिटो मताः।
अदिः क्षुदिः खिदिस्तद्वत् छिदतुदौ नुदपद्यतौ॥
भिदिर्विद्यविनत्तौ च शदसदौ स्कन्दतिस्तथा।
स्विद्यतिर्हदिरेते स्युर्धान्तेषु, क्रुध्यतिर्मतः॥
क्षुधिर्बन्धिर्बुध्यतिश्च युधिश्च राध्यतिस्तथा।
रुधिश्च व्यधिरन्येयः शुध्यतिः साधिसिध्यतौ॥
नान्तेषु मन्यहन्तौ च पान्तेष्वापिः क्षिपिस्छुपिः।
तपिस्तिपिश्चानिटोऽमी तृप्यतिर्दृप्यतिर्लिपिः॥
लुपिर्वपि शपसृपौ च स्वपिर्भान्तेषु यभ्रभौ।
लभिर्मान्तेष्वमी ज्ञेया गम्नमौ यम्रमौ तथा॥
शान्तेष्वमी क्रुशिर्दन्शिर्दिशिदृशिमृशौ रिशिः।
रुशिर्लिशिर्विश्स्पृशौ च षान्तेष्वेते कृषस्तुषिः॥
त्विषिर्दुषिर्द्विषौ पिष्च पुष्विषौ शिश्शुषौ तथा।
श्लिष्यतिश्च मता एते सान्तेषु वस्घसौ मतौ॥
हान्तेष्वेते दहिदिहौ दुह्निर्नहिमिहौ रुहिः।
लिहिर्वहिर्हलन्तेषु धातवो ह्यधिकं शतम्॥
विकल्पितटो वेटः स्युः स्तोऽपि पचेऽनिटो मताः।

ह्मयित्वप्योरधादित्वे न वेट्कत्वेऽप्यर्थमिह पाठः ॥

६· ६· ६· ६· १· ·१ ७·

## अतो हलादेर्लघोरूर्णोश्च वा सेटि ॥४४६॥

परस्मैपदे सेटि सिचि परे हलादेः धातोः लघुसंज्ञस्य अकारस्य ऊर्णोतेश्च वृद्धिः वा स्यात्। गद-अगादीत् अगदीत्। ऊर्णोस्तु ङित्त्वाभावपक्षे और्णावीत् और्णवीत्। ङित्पक्षे उवङि और्णुवीत्। हलादेः किम् अट-मा अटीत्। लघोः किम् तक्ष-अतक्षीत्। एकाचः इति अनुवृत्तेः दरिद्रातेः न।

·१· ६:·

## नेड्वृहयमान्तक्षणश्वसवधश्वियतीनाम् ॥४४७॥

परस्मैपदे सिचि परे एषां नित्यं विभाषया वा वृद्धिः न स्यात्। एदित्-हस-अहसीत्। ह-ग्रह-अग्रहीत्। य-ह्य-अह्यीत्। म-क्रम-अक्रमीत्। क्षण-अक्षणीत्। श्वस-अश्वसीत्। वध-अवधीत्। श्वि-अश्वयीत्।

५:· ·१· ·१· ७·

## कृषिमृषिस्पृशितृपिदृपिभ्यः सिज् वा लुङि ॥ ४४८ ॥

लुङि परे एभ्यः सिच् वा स्यात्। इचौ इतौ। इति सिचि।

६· ६· ·१· ·१· ७· ७·

## ऋदुपधस्यानिटोऽम् वाऽकिति झलि दृश-

६: ·१· २·

## सृजोस्तु नित्यम् ॥ ४४९ ॥

अकिति झलादौ परे ऋदुपधस्य अनिटः धातोः अम् वा स्यात्, दृशसृजोस्तु नित्यम्। मः इत्। मित्त्वात् अन्त्यात् अचः

परः। इति असि यणि सिचि वृद्धौ षस्य ( ३६६ सू० ) कत्वे षत्वे च अक्षासीत्। अमभावपक्षे वृद्धौ अकार्षीत्। सिजभावपक्षे।

५० ५० ५० ५० १० ७०
अहृशः शल इगुपधादनिटः क्सो लुङि
५० ०१० ७०
श्लिषस्त्वालिङ्गने ॥ ४५० ॥

लुङि परे दृशिवर्जात् इगुपधात् शलन्तात् अनिटः धातोः क्सः स्यात्, श्लिषतेस्तु आलिङ्गने अर्थे। कः इत्। इति क्से षस्य कत्वे षत्वे अक्षुक्षत्। गुह संवरणे तनि ( ४३७ सू० ) सिचः वा लुकि हस्य ढत्वे तत्परस्य तकारस्य धत्वे टुत्वे ढे ढलोपे अपित्सार्वधातुकत्वेन ङित्त्वात् गुणाभावः, पूर्वाणः दीर्घे अगूढ। पक्षे सिचः बाधेन क्से ढत्वकत्वे भष्भावे षत्वे अघुक्षत। सिचः लुकि दुहदिहोः दादितया हस्य घत्वे तकारस्य धत्वे घस्य जश्भावे अदुग्ध अदिग्ध। पक्षे क्से घत्वे भष्भावे चरि षत्वे अधिक्षत। लिहस्तु सिचः लुकि हस्य ढत्वे तकारस्य धत्वे टुत्वे ढे ढलोपे पूर्वाणः दीर्घे अलीढ। पक्षे प्राग्वत् अलिक्षत। क्ष-विभक्तौ तु।

६० ६० १० ७०
क्सस्यातो लोपोऽचि ॥ ४५१ ॥

अजादौ परे क्सस्य अतः लोपः स्यात्। अलिक्षि।

५०:० ७० ७० ०१०
णिश्रिद्रुस्रुभ्यः कर्त्तरि लुङि चङ् श्विधेट-
५०:० ०१० ०१०
ध्वनिभ्यस्तु वा ॥ ४५२ ॥

कर्त्रर्थे लुङि परे ण्यन्तात् श्र्यादिभ्यश्च चङ् स्यात्, श्विधेट्श्विभ्यस्तु वा। चङौ इतौ। इति श्रियः चङि।

६· ६· १· ७:

अनभ्यासस्य धातोर्द्वित्वं लिट्चङोः ॥४५३॥

लिटि चङि च परे अकृतद्वित्वस्य धातोः द्वित्वं स्यात्। इति द्वित्वे आदिहल्शेषे च (१८७ सू०) इयङि अशिश्रियत्। द्रुवः उवङि अदुद्रुवत्। धेटस्तु चङि।

अधिति एचः गणोक्तस्य स्यात् आत्, व्येञस्तु नः लिटि इत्युक्तेः आत्वे द्वित्वे अभ्यासकार्य्ये च।

६· १· ७· ७· ७· ७· ७·

आतो लोपोऽचि क्ङित्यार्द्धधातुके इट्युसि

·१

च ॥ ४५४ ॥

धातोः आतः लोपः स्यात् आर्द्धधातुके किति ङिति च अजादौ इटि उसि च परे। इति आलोपे अदधत्। चङ्भावपक्षे (४२७ सू०) सिचः वा लोपे अधात्। तदभावपक्षे।

५:· ६· ·१·, ७· ६:·

यमरमनमाद्भ्यः सिच इट् परस्मैपदे तेषां

·१· ·१·

सक् च ॥ ४५५ ॥

एभ्यः सिचः इट् स्यात्, परस्मैपदे सति च इटि तेषां सक् च। अकौ इतौ। किस्वात् अन्ते आगमः। इति इटि सकि च अधासीत्। ष्ठेञस्तु।

५:· ५· ·१· ·१·

वत्यस्यख्यातिभ्यो लिपिसिचिह्वेञश्चाङ्—

७· ७· ५· ·१· ७· ·१·

कर्त्तरि लुङि—लिप्यादेस्त्वात्मनेपदे वा ॥४५६॥

कर्त्रर्थे लुङि परे वक्त्यादिभ्यः लिप्यादिभ्यश्च अङ्, लिप्यादेस्तु आत्मनेपदे वा स्यात्। सिचः अपवादः। ङः इत्। इति अङि आति आल्लोपे अह्वत्। आत्मनेपदे तु अह्वत अह्वास्त इत्यादिरूपद्वयम्।

५· ५ः ·१·

ऌदितः शास्तिपुषादिद्युतादिभ्यश्च परस्मै-

७·

पदे— ॥ ४५७ ॥

गणपाठे ऌकारितः, शास्तेः, पुषादिभ्यः, द्युतादिभ्यश्च परस्मैपदे लुङि परे अङ् स्यात्। इति अङि पुष-अपुषत्, द्युत-अद्युतत्। पुषादयः ( सि० उ० १३८ पृ० ) द्युतादयश्च (सि० उ० ७७ पृ० ) द्रष्टव्याः। च्युतिरस्तु।

५· ·१· ·१·

जॄम्रुचिस्लुन्भेरितो वाङ् ॥ ४५८ ॥

कर्त्रर्थे परस्मैपदे लुङि परे जॄप्रभृतेः गणपाठे इरितश्च अङ् वा स्यात्। इति अङि अच्युतत्, पक्षे अच्योतीत्।

५ः ७· ·१·

सर्त्यर्त्तिभ्यामात्मनेपदे च ॥ ४५९ ॥

उभयपदयोः लुङि सर्त्तेः अर्त्तेश्च परम् अङ् स्यात्। इति अङि।

६ः ७· १·

ऋदृशोरङि गुणः ॥ ४६० ॥

अवर्णान्तस्य इगेव षञि परे गुणः स्यात्। इति गुणे ऋ-आरत्। सृ-असरत्।

५· ·१· ७· ७·
पदस्चिण् कर्त्तरि तनि दीपजनबुधपूरिता-
५ः· ·१· ·१·
यिप्यायिभ्यस्तु वा ॥ ४६१ ॥

कर्त्रर्थे तनि परे पद्यतेः चिण् स्यात्, दीपादिभ्यस्तु वा। चणौ इतौ। इति चिणि।

५· ६· १·
चिणस्तनो लोपः ॥ ४६२ ॥

चिणः परस्य तनः लोपः स्यात्। सर्वलोपः। अतायि, पक्षे अतायिष्ट। इति लुङि सिजादिप्रकरणम्।

६ः· ·१· १· ७· ७·
जनिवधिसेडमन्तानां न वृद्धिश्चिणि णिति
७· ७· ·१· ६ः· ६· ·१·
ञिति कृति चावमकमाचमाममयमविश्रमस्तु
·१·
वा ॥ ४६३ ॥

चिणि, ञिति, णिति, कृति, च परे जनेः वधेः सेडमन्तस्य च वृद्धिः न स्यात्, न तु वमादेः, अमादेस्तु वा। जन-चिणि अजनि, पक्षे अजनिष्ट।

५· ५ः ५· ५· ·१· ५·
ऋतो हङ्ङभ्यां संयोगादेर्ऋतश्चास्कुः
६· ६ः ·१· ·१· १·
सन आत्मनेपदाशीर्लिङ्सिचोश्च वेट् ॥ ४६४ ॥

ऋकारान्तात्, वृङः, वृञः, संयोगादेः ऋदन्ताच्च परस्य सनः आत्मनेपदस्याशीर्लिङ्सिचोश्च स्थाने इट् वा स्यात्, न तु समुट्स्कृञः। इति इटि।

५ः ६
ऋवृङ्वृञ्भ्योऽलिट्—परस्मैपदसिज्—लिङ
६ १ १ ५ १ ६ २
इटो दीर्घो वा ग्रहेस्त्वलिटो नित्यम् ॥ ४६५ ॥

ऋदन्तात्, वृङः, वृञश्च परस्य लिट्परस्मैपदसिज्, लिङ्-भिन्नस्थानजातस्य इटः दीर्घः वा स्यात्, ग्रहेः परस्य तु अलिटः इटः नित्यम्। इति दीर्घे स्तॄ—अस्तरीष्ट, पक्षे अस्तरिष्ट। इडभावपक्षे कित्त्वेन इरि दीर्घे च अस्तीर्ष्ट। वृङः वृञश्च अवरीष्ट अवरिष्ट, पक्षे कित्त्वे गुणाभावे सिचः लोपे अवृत। स्कृ तु समस्कृत। ग्रहेः—अग्रहीष्ट।

५
स्वरतिसूतिसूयतिधूञ्रधादिदिक्कुष्यूदितो
१ ६ ६ १
वार्द्धधातुकस्य वलादेरिट् ॥ ४६६ ॥

स्वरत्यादिभ्यः ऊदितश्च परस्य आर्द्धधातुकस्य वलादेः इट् वा स्यात्। तत्र रध, नश, तृप, दृप, द्रुह, मुह, ष्णुह, ष्णिह इति रधादि। स्वृ-अस्वारीत् अस्वार्षीत्। सूतिसूयत्योः असविष्ट असोष्ट। धूञः परस्मैपदे।

५ः ७ ६ १
सुस्तुधूञ्भ्यः परस्मैपदे सिच इट् * ॥४६७॥

---

* सुस्तुधूञ्भ्यः इति पाणिनीयसूत्रे षुञ् गतौ ष्टुञ् स्तुतौ धूञ् कम्पे इत्येते उभयपदिनः एव त्रयः गृहीताः, अकारेण

एभ्यः परस्मैपदे सिचः इट् स्यात्। इति नित्यम् इटि अधावीत्। तनि तु अधविष्ट अधोष्ट। सु-इटि दे: ईटि सिचः लोपे वृद्धग्रादौ च अमावीत्। तृपेः सिचः वेटि अतर्पीत्। इडभावपक्षे अमि अत्राप्सीत्। अमभावपक्षे अतार्प्सीत् सिजभावपक्षे पुषादित्वात् अङि अतृपत्। एवं दृपेः। मुह—अमोहीत् अमुचत्। द्रुह—अद्रोहीत् अध्रुचत्। निरः कुषेः निरकोषीत्, पक्षे निरकुचत्। ऊदितः गाहू—अगाहिष्ट अगाढ़। अन्जस्तु उदित्त्वेन वेट्कत्वेन।

५॰ ६॰ ॰१॰ २॰

## अन्जः सिच इट् नित्यम् *॥ ४६८ ॥

अन्जः परस्य सिचः नित्यम् इट् स्यात्। आञ्जीत्।

६॰ ७॰ ॰१॰

## जभोऽचि नुँम् ॥ ४६९ ॥

अजादौ परे जभेः नुँम् स्यात्। चमौ इतौ। अजम्भिष्ट।

६: ॰१॰ ॰१॰ ८॰

## सहवहोरदोत् ढि ॥ ४७० ॥

ढकारे परे सहे: वहेश्च अतः स्थाने ओत् स्यात्। इति ओति वह-अवोढ। सिचः कित्त्वे गुणाभावे सिलोपे अहुत। विद अवित्त। बुध (४६१ सू॰) चिणि अबोधि, पक्षे अबुद्ध।

त्रिभिः सम्बन्धात्। तेन धूधातोः दीर्घान्तस्य एव इह ग्रहणम्। ह्रस्वान्तपाठस्तु पाणिनीयविरुद्धत्वात् अनादेयः।

* अन्जेः सिचीति (७।२।७१ पां सू॰) परस्मैपदानिर्देशात् इह न तन्निर्देशः। तेन आत्मनेपदे कर्मणिवाच्ये आञ्जिषाताम् आङ्क्षाताम् इति विकल्पेन एव इट्।

६· १· ७· ७·
**सस्य द आर्द्धधातुके से * ॥ ४७१ ॥**

आर्द्धधातुके सादौ परे सस्य दः स्यात्। अवात्सीत्। आर्द्धधातुके इत्युक्तेः सार्वधातुके न चर्।

६ः १· ७· ७··१· ७· ·१··१·
**मिग्योर्ङा ल्यप्यकिङिति च सनि तु वा ॥४७२॥**

मिनोतेः मीनातेश्च ङा स्यात्, ल्यपि किद्ङिद्भिन्ने परे, सनि तु वा। ङः इत्। इति ङादेशे आदन्ततया इटि सकि च अमासीत्। तनि तु अमास्त।

६ः ·१· ७· ७· ·१· १·
**स्थाघ्वोरिदात्मनेपदे लुङि न गुणः † ॥४७३॥**

आत्मनेपदविषये लुङि तिष्ठतेः घुसंज्ञकस्य इदन्तादेशः स्यात्, तस्य च न गुणः। प्रास्थित। अदित अधित।

१· ७· ७· ७· ·१··१·
**दरिद्रालोप आर्द्धधातुकेऽसनि लुङि तु वा ॥ ४७४ ॥**

दरिद्रातेः अन्तस्य लोपः स्यात्, आर्द्धधातुके परे, न तु सनि, लुङि तु वा। इति आलोपे अदरिद्रीत्, पक्षे अदरिद्रासीत्। (३२२ सू०) ङित्त्वं स्फुट-अस्फुटीत् स्फुर-अस्फुरीत् स्फुल—अस्फुलीत्। विजस्तु इटः (३२३ सू०) ङित्त्वे अविजिष्ट।

* १०६ सू० खरिचरिति सूत्रेण चरि कर्त्तव्ये इस्यात् सस्थाने सः एव प्राप्तः, इत्यतः दत्वविधानार्थम् इदम्।

† स्थाधातोः परस्मैपदित्वे अपि ५८६ सू० पं को आत्मनेपदित्वसम्भवात् प्रास्थित इति उदाहृतम्।

गोहोऽजादौ भवेद् गूहो १ ऽकृपादौ च कृपेः* कॢपः २।
भ्रस्जेर्भर्ज्जो ३ वचिर्ब्रूञो ४ भूरस्तेः ५ चार्द्धधातुके।
नाने नोमसि तत्रैव चक्षिङः ख्याञ६वर्जने।
क्शाञुक्तो भाष्यकारैर्यौ लिटि तौ च विभाषया।
अदो घस्लृ ७ लुङि · सनि घञपोर्वा तु तल्लिटि।
आशीर्लिङि वधो हन्तेः ८ लुङि वा त्वात्मनेपदे।
गाऽङिङो लिटि वा तु स्यात् लुङ्ल्टङोर्गात्विणो १० लुङि।
ख्येश्वो ११ वोचो १२ वचेः पप्तः १३ पतेरस्थो १४ऽस्यतेरङि।
नश्यतेर्वाङि नेशः १५ स्यात् व्याख्यानोदाहृतौ क्रमात्।

अचि परे कृतगुणस्य गुहेः गूहः स्यात् १। अगूहिषाताम्। एवं सार्वधातुके अपि गूहते। कृपा, कृपण कृपाणाद्यन्यत्र कृपेः कॢपः स्यात् २। द्युतादित्वात् अङि अकॢपत्। अपि कल्पते॥ आर्द्धधातुके परे भ्रस्जः स्थाने भर्जः स्यात् ३। इति भर्जादेशे इटि अभर्जीत्, पक्षे संयोगादिसलोपे वृद्धौ जस्य षत्वे † तस्य कत्वे षत्वे च अभ्राक्षीत्। आर्द्धधातुके परे ब्रूञः वचिः अस्तेस्तु भूः स्यात् ४-५। इति वच्यादेशे अङि, वचेः वोचः स्यात् अङि १२। इति वोचादेशे अवोचत्। तनि अवोचत। भ्वादेशे तु सिचः लुकि अभूत्। चक्षिङः ख्याञादेशः स्यात् आर्द्धधातुके परे, न तु अने नोमि नासि च लिटि तु वा स्यात् ६। भाष्ये तु क्शाञ् इति

* अजादौ इत्युक्तेः गोह्यम् इत्यादौ न गूहादेशः, तेन गुणमात्रनिमित्ते गूहादेशविधानम् अपाणिनीयत्वात् अनादेयम्।

† धात्वादेशे स्थानिवत्त्वं नास्ति इत्युक्तेः अभर्जीत् इत्यत्र इट।

पठितम् इति ख्यादेशे ( ४५६ सू० ) अङि आलोपे अख्यत्। तनि अख्यत। लुङि सनि घञि अपि च परे अदः स्थाने घस्ऌ लिटि परे तु वा स्यात् ७। ऌदित्त्वात् अङ् अघसत्। आशीर्लिङि लुङि च परे हन्तेः बधः स्यात् आत्मनेपदलुङि तु वा ८। वधश्च अदन्तः। इति बधादेशे सिचि * अतो लोपे अवधीत्। आत्मनेपदे तु आवधिष्ट ( ३३१ सू० ) सिचः कित्त्वे न नलोपे आहत। लिटि परे इङः गाङ् स्यात् लुङि ऌङि च परे तु वा ९। ङः इत्। इति गादेशे ( ३२२ सू० ) सिचः ङित्त्वे।

६: ६ १ ७ ७

**घुमास्थागापाजहातिसामात ईद्धलि क्किति**

८ ७ ७

**ङित्यार्द्धधातुके—ऽल्यपि ॥ ४७५ ॥**

क्किति ङिति च आर्द्धधातुके हलादौ परे घुमादीनाम् आतः ईत् स्यात्, न तु ल्यपि। इति ईत्त्वे अध्यगीष्ट। अध्यैष्ट। लुङि परे इणः गा स्यात् ( १० ) इति गादेशे सिचः लुकि अगात्। एवम्, अधीकः अध्यगात्। श्वयतेः श्वः स्यात् अङि ( ११ )। इति अङि श्वादेशे अश्वत्। पक्षे चङि द्वित्वे आदिहल्शेषे इयङि अशिश्वियत्, तदभावपक्षे सिचि वृद्धिनिषेधे अश्वयीत्। पतेः ऌदित्त्वात् अङि, पतेः पप्तः स्यात् अङि ( १२ ) इति पप्तादेशे अपप्तत्। अस्यतेः

* लक्षणप्रतिपदोक्तयोः मध्ये प्रतिपदोक्तस्यैव ग्रहणम् इति न्यायात् प्रतिपदोक्तवधस्यैव वृद्धिनिषेधात् अस्य च लाक्षणिकस्य अनिषेधात् वृद्धिप्रसङ्गे अदन्तः इत्युक्तं, तेन ४३० सूत्रेण अकारलोपे अकारस्य उपधाभूतत्वाभावेन अवधीत् अवधि अवधिषाताम् इत्यादौ न वृद्धिः।

अश: स्यात् अङि (१४)। इति अश्वादेशे आश्वत्। नश्यते: नेश: वा स्यात् अङि (१५)। इति वा नेशादेशे अनेशत् आश्रमतम्। अनशत् इति सूत्रमतम्।

इति लुङ्प्रकरणम्।

---

## लिट्प्रकरणम्।

भू— अ इति स्थिते वुकि द्वित्वे आदिहल्शेषे जशि।

६· ६· ·१· ७·

**भवतेरभ्यासस्यात् लिटि ॥ ४७६ ॥**

लिटि परे भवते: अभ्यासस्य उकारस्य स्थाने अत् स्यात्। इकार: इत्। इति उत: अत्वे बभूव इह वुक् गुण वृद्ध्यादिं बाधते बभूवतु: बभुवु:। बभूविथ। बभूवथु: बभूव *। बभूव बभूविव बभूविम। बभूवे बभूवाथे बभूविरे। बभूविषे बभूवाथे बभूविढ्वे, बभूविध्वे बभूवे बभूविवहे बभूविमहे। अट-द्वित्वे उपधात: वृद्धौ आट। अतुसि पररूपप्राप्तौ।

६· ६· ६· १·

**अत आदेरभ्यास्य—दीर्घ: ॥ ४७७ ॥**

अभ्यासस्य आदे: अत: दीर्घ: स्यात्। पररूपापवाद:। आटतु: आटु:। अर्च—द्वित्वे अन्त्यहल्लोपे।

५· ५· ६· ६· ६··१· ७·

**दीर्घादत: संयुक्तस्याश्नोतेर्ऋतश्च लिटि— नुँट् ॥ ४७८ ॥**

* गुणस्येव वृद्धे: उवङश्च बाधनं वाच्य, तेन बभूव इत्यादौ न वृद्धि:, बभूविव इत्यादौ च न उवङ्।

अभ्यासस्य दीर्घीभूतात् अतः परस्य संयुक्तस्य अश्नोतेः ऋकारस्य च नुँट् स्यात्। उटौ इतौ। इति नुटि आनर्च्चे। अश-आनशे ऋध-आनृधे। एधङ् वृद्धौ लिटि द्वित्वे प्राप्ते।

५· ५· ५· ५·
इजादेर्गुरुमतोऽनृच्छ्रूर्णोरनेकाचः कासद-
५· ·१· ·१· ५· ·१· ·१·
यायासश्चामुँ दरिद्राकाशजागुषस्तु वा ॥४७९॥

ऋच्छतेः ऊर्णोतेश्च अन्यस्मात् गुरुमतः इजादेः, अनेकाचः, कासादेश्च परम् आमुँ स्यात्, लिटि परे दरिद्रादेस्तु वा। उः इत्। इति आमौ।

५· ६· ·१· १ः· ·१· १ः·
आमो लिटो लुक् कृभ्वस्तयोऽनु लिट्पराः*

॥ ४८० ॥

आमन्तात् धातोः लिटः लुक् स्यात्। तदुत्तरम् अव्यवहितमेव लिडुत्तराः कृभ्वस्तयः प्रयुज्यन्ते। इति कृाद्यनुप्रयोगे आमन्तधातोः इव कृञः एव पदव्यवस्था न भ्वस्त्योः इति सिद्धान्तात् कृञः आत्मनेपदे द्वित्वे अभ्यासकार्य्ये एधाञ्चक्रे। एधाम्बभूव एधामास। अस्तेः पृथग्ग्रहणसामर्थ्यात् न भ्वादेशः। कास—कासामास। कासाञ्चक्रे। अनेकाचः चकाशामास। दय—दयामास दयाञ्चक्रे। अय—अयामास अयाञ्चक्रे। आस-आसामास आसाञ्चक्रे। दरिद्रा-दरिद्रा-

---

* आमन्तात् लिटः लोपविधानात्तदन्तं पदं, तेन तस्य क्वचित् स्वतन्त्रप्रयोगोऽपि, तं पातयां प्रथममासेति उक्तां प्रचक्रुः इत्यादौ। किन्तु अनुशब्दोपादानात् पदान्तरव्यवधाने नास्य साधुता इति वार्त्तिककाराशयः।

मास (४७४ सू०) आलोपे ददरिद्र। जागृ-जागरामास जजागार।

५ः ७॰ ॰१॰ ॰१॰ ॰१॰

भीह्रीभृहुभ्यो लिट्यामुँ तच्च सार्वधातुक-
॰१॰
वत् * ॥ ४८१ ॥

लिटि परे एभ्यः आमुँ स्यात्। तच्च सार्वधातुकवत् कार्य्यं लभते। तेन सार्वधातुकवत्त्वित्वे अभ्यासकार्य्यगुणे लिट्परत्वाद्यनुयोगे भी—बिभयाम्बभूव ह्री-जिह्रयामास भृ-बिभराञ्चकार बिभराञ्चक्रे हु-जुहवामास जुहवाञ्चकार। विद (३७१ सू०) वा ङामि ङित्त्वात् गुणाभावे विदाम्बभूव विवेद। मन्थ—लिटः (३२५ सू०) वा कित्त्वे नलोपे ममथतुः ममन्थतुः। पतेः द्वित्वे।

६॰

असंयुक्तहल्मध्यस्थस्य तॄफलभजत्रपश्रिंसा-
६ः॰ ॰१॰ ६॰ ॰१॰ १॰ ॰१॰ ७॰ ७॰ ७
थराधाञ्चात एदभ्यासलोपश्च किति लिटि सेटि
७॰ ॰१॰ ॰१॰ ६ः॰
थपि च न विकृतादिशसददवादिगुणिनलोपिनां
६॰ ॰१॰ ॰१॰
जॄवमभ्रमत्रसफणादेस्तु वा ॥ ४८२ ॥

किति लिटि, सेटि थपि च परे असंयुक्तहल्मध्यस्थस्य, तॄफलादेश्च अतः स्थाने एत् स्यात् अभ्यासलोपश्च, न तु आदि-

* सार्वधातुकवत् इति वत्करणात् न सर्वथा तद्रूपत्वम्, तेन पमः अपित्त्वे अपि न ङित्त्वं ततश्च बिभरांबभूव इत्यादौ गुणः।

ष्टादेः, न च शसददादेश्च, ज्यादेस्तु वा। इति एत्वे अभ्यासलोपे पेततुः पेतिथ। फल-फेलतुः फेलिथ। तॄ द्वित्वे अभ्यासकार्य्ये।

६. १. ७. ७.

**ऋतो गुणो लिटि किति॥ ४८३॥**

किति लिटि परे ऋकारस्य गुणः स्यात्। इति गुणे अतः एत्वे अभ्यासलोपे तेरतुः तेरिथ। आदिष्टादेस्तु गद-जगदतुः। शस-शशसतुः। गुणिनः पॄ-पपरतुः। वादेः वल-ववलतुः। नलोपिनः रन्ज-ररजतुः। जॄ-जेरतुः जजरतुः जेरिथ जजरिथ। फण राज भ्राज भ्राश भ्लाश स्यम स्वन। इति फणादि। एषाम् आतोऽपि एत्त्वम् इष्यते। रेजतुः रराजतुः।

६. १. ७ः

**जेर्गिः सन्लिटोः॥ ४८४॥**

सनि लिटि च परे जेः गिः स्यात्। जिगाय। जिग्यतुः। धे-आतः एत्वे द्वित्वे अभ्यासकार्य्ये।

५. ६. १.

**आतो णप औः॥ ४८५॥**

आतः परस्य णपः स्थाने औः स्यात्। दधौ। (४५४ सू०) आलोपे दधतुः गै-जगौ सो-ससौ।

६ः ६. १. ७ः ७.

**अर्त्तिसंयोगाद्योर्ऋतो गुणो यङ्यकोः कितोः**

७ः ·१· ६ः ·१· ७.

**लिडाशीर्लिङोश्च स्कुस्तु लिटि॥ ४८६॥**

अर्त्तेः संयोगादेश्च ऋकारस्य गुणः स्यात् यङि, यकि, किति, लिटि, आशीर्लिङि च परे, स्कुस्तु लिटि एव परे। इति गुणे ऋ-आरतुः स्मृ-सस्मरतुः स्कृ-सञ्चस्करतुः।

६: ६· १·
## द्युतिस्वाप्योरभ्यासस्य सम्प्रसारणम्— ॥४८७॥

द्युतेः स्वापेश्च अभ्यासस्य सम्प्रसारणं स्यात्। इति सम्प्रसारणे पूर्वरूपैकादेशे च दिद्युते।

६· ७:
## श्वेर्यङ्लिटोः ॥ ४८८ ॥

श्वयतेः सम्प्रसारणं स्यात्, यङि लिटि च परे। इति सम्प्रसारणे।

·१· ५· ·१· १· ७· ७·
## न द्वित्वात् प्रागजादेशो द्वित्वनिमित्तेऽचि ॥ ४८९ ॥

द्वित्वनिमित्ते अचि परे द्वित्वात् प्राक् अजादेशः न स्यात्। इति शु शु इत्यस्य द्वित्वे हलादौ शुशाव। एवङ्गि शुशुवतुः।

६· ७· १·
## ह्वोऽभो द्वित्वहेतौ सम्प्रसारणम् ॥ ४९० ॥

द्वित्वहेतौ परे ह्वेञः सम्प्रसारणं स्यात्। इति सम्प्रसारणे प्राग्वत् जुहाव जुहुवतुः। अद-( १४२ पृ० ५ प० ) वा घसादेशे जघास आद। उपधाऽलोपे जक्षतुः आदतुः। हन्तेः द्वित्वे आदिहल्शेषे।

५· ६· ६· १· ९· ७· ·१·
## अभ्यासात् हन्तेर्हो घो ञिति णिति च ॥४९१॥

अभ्यासात् परस्य हन्तेः हस्य घः स्यात्, ञिति च परे, अनभ्यासात् अपि। जघान, उपधाऽलोपे जघ्नतुः। इणः द्वित्वे ह्रस्वे इयङि इयाय। अतुसि द्वित्वे।

५॰ ६॰ १॰ ७॰ ७॰ ॰१॰
अभ्यासादिणो दीर्घः किति ङिति चाशी-
७॰ ॰१॰ ॰१॰ ५॰
र्लिङि तु नोपसर्गात् ॥ ४९२ ॥

अभ्यासात् परस्य इणः दीर्घः स्यात् किति ङिति च परे, आशीर्लिङि तु न उपर्गात्। ईयतुः ईयुः। इङः गादेशे अधिजगे। वचेः सम्प्रसारणे उवाच ऊचतुः। खन-चखान। उपधाऽलोपे चख्नतुः।

तासि नित्यानिडजन्तो गणे वाऽकारवानपि।
सृजिदृशिश्च वेट्कोऽयम् थेऽदर्त्ति र्च्छितस्थपि ॥
तास्यदन्तो नित्यानिट् थपि ऋत्वुस्तवर्जितः।
नित्यानिटः क्रादिभिन्ना सेटस्ते लिटि वादिषु ॥

क्र सृ भृ वृ स्तु द्रु स्रु श्रु एते क्रादयः। तत्र अजन्तस्य, नी-निनयिथ निनेथ निन्यिव निन्यिम। च्यु-चुच्यविथ चुच्योथ चुच्युविव। मृ-ममर्थ मम्रिव। अकारवतः, गम-जगमिथ जगन्थ जग्मिव संजग्मिषे। पच-पेचिथ पपक्थ पेचिव। पेचिषे। सृज-ससर्जिथ सस्रष्ठ ससृजिव। दृश-ददर्शिथ दद्रष्ठ ददृशिव। सन्ददृशिषे। वे-विवयिथ। अद-आदिथ ऋ-आरिथ। वृ-ववरिथ स्तृ-मञ्चस्करिथ, अन्यत्र चकर्थ। क्रादिषु असुट्कस्य एव ग्रहणात् चकृषे। सुटि तु सञ्चस्क्रिव।

६॰ १॰ ॰१॰ ७॰
चेः किर्वा लिट्सनोः ॥ ४९३ ॥

चिनोतेः किः स्यात् लिटि सनि च परे। इति कादेशे

चिकाय चिचाय। ऊर्णु—(४७८ सू०) आम् निषेधे सर्व-
द्वित्वे प्राप्ते।

६॰ ६॰ ५॰ ६॰ १॰ ७॰ ७॰

**अजादेर्बहुच आद्याचः परस्य द्वित्वं तत्राये नबदरसंयोगादेर्न * ॥ ४९४ ॥**

६॰ ॰१॰

अजादेः अनेकाचः आद्याचः परस्य द्वित्वम्। तस्मिन् द्वितीये नबदरसंयोगादेः न द्वित्वं स्यात्, न तु ये॥ इति ऊर् इत्येतौ विहाय नु, नु, इति द्वित्वे वृद्धिणत्वे ऊर्णुनाव। उवङि ऊर्णुनुवतुः। (३२२ सू०) इटः वा ङित्त्वे ऊर्णुनुविथ ऊर्णुनविथ। गुहेर्गूहे-जुगूह। जुगुहतुः। क्लृपेः क्लृपादेशे चक्लृपे। अस्तेः भ्वादेशे बभूव। ब्रुवः वच्यादेशे ऊचतुः। चक्षिङः ख्याजादेशे चख्यौ चख्ये चचक्षे। ग्रहेः इटः दीर्घनिषेधे जग्रहिथ। सम्प्रसारणे जगृहिव।

६॰ १॰ ॰१॰ ७॰ ७॰

**शृदृपां ह्रस्वो वा लिटि किति ॥ ४९५ ॥**

किति लिटि परे एषां ह्रस्वः वा स्यात्। इति ह्रस्वे शश्रतुः, पक्षे गुणे शशरतुः।

७॰ ६॰ ॰१॰ १॰

**लिटि वेञ्प्रच्छव्रश्चभ्रस्जां न सम्प्रसारणम् ॥ ४९६ ॥**

लिटि परे एषां सम्प्रसारणं न स्यात्। इति सम्प्रसारण-निषेधे प्रच्छ-पप्रच्छतुः, व्रश्च-वव्रश्चतुः। भ्रस्ज-धा भर्जादेशे

---

* तत्र इत्यस्य प्रसक्तद्वित्वे इत्यर्थः, तथार्थद्योतनाय वृत्तौ द्वितीये इत्युक्तम्।

बभर्जतु बभ्रज्जतुः। सम्प्रसारणे यज-इयाज ईजतुः। व्यथ-विव्यथे। स्वप-सुष्वाप सुषुपतुः। गुणे जागृ-जजागरतुः।

इति लिट्प्रकरणम्।

---

## अथ लुट्प्रकरणम्।

भू-लुटि इटि गुणावादेशौ भविता भवितारौ भवितारः। भवितारः। भवितासि भवितास्थः भवितास्थ। भवितास्मि भवितास्वः भवितास्मः। भविता भवितारौ भवितारः। भवितासे भवितासाथे भविताध्वे। भविताहे भवितास्वहे भवितास्महे।

५· ६· ·१··१·

### इषसहलुभरुषरिष आर्द्धधातुकस्य वेट् ॥ ४९७ ॥

एभ्यः परस्य आर्द्धधातुकस्य इट् स्यात् वा। इष-एषिता एष्टा। सह-सहिता (४७० सू०) ओत्वे सोढ़ा। लुभ-लोभिता लोब्धा। रुष-रोषिता रोष्टा। रिष-रेषिता रेष्टा (४६६ सू०) वेटि स्वृ स्वरिता स्वर्त्ता। सु-सविता सोता। ऊदितः गुह्-गूहादेशे गूहिता गोढ़ा। नश-नशिता, पक्षे।

६ः ·१· ७· ६ः

### नशमस्जोर्नुम् झलि रभलभोरशब्लिट्यचि ॥ ४९८ ॥

७· ७·

झलि परे नशमस्जोः, अशपि अलिटि च अजादौ परे रभलभोश्च नुम् स्यात्। उमौ इतौ। इति नुमि (२३५ सू०) पक्षे वत्वे तस्य धत्वे जसि गडुधा, पक्षे मस्य मत्वे टुत्वे

नंष्टा। मसृज-मंष्टा। रभ-रब्धा लभ-लब्धा। क्लृपेस्तु ऊदित्वात् वा इटि प्राप्ते।

५· ६·　　७·　·१· ·१·

## क्लृपेर्लुटः परस्मैपदे नेट्॥ ४९९॥

क्लृपेः परस्य लुटः स्थाने इट् न स्यात् परस्मैपदविषये। अतएव परस्मैपदम्। एवं द्युतादित्वात् अङि अपि। तेन लुटि लृटि लृङि च परे, द्युतादिपाठेनाङ्प्रसक्तये लुङि च क्लृपेः परस्मैपदम्, अन्यत्र आत्मनेपदम्। क्लृपादेशे कल्प्ता, आत्मनेपदे तु कल्पितासे कल्प्तासे। अस्तेः भ्वादेशे भविता। ब्रूञः वचादेशे वक्ता। भ्रस्ज वा-भर्जादेशे भर्जिता भ्रष्टा। चक्षिङः ख्यादेशे ख्याता। ऊर्णोः (३२२ सू॰) ऊर्णुविता ऊर्णविता। विज-विजिता। कुटादित्वात् गुणाभावे त्रुट-त्रुटिता। स्फुट-स्फुटिता स्फुर-स्फुरिता।

इति लुट्प्रकरणम्।

# आशीर्लिङ्प्रकरणम्।

आशीर्लिङः परस्मैपदस्य कित्त्वेन गुणाभावे भूयात् भूयास्ताम् भूयासुः भूयाः भूयास्तम् भूयास्त भूयासम् भूयास्व भूयास्म।

६·　१·　७·　　७·　·१·

## इको दीर्घो यि—क्ङिति—न कृत्सार्वधा-

७·

## तुके—॥ ५००॥

किति ङिति च यादौ परे इगन्ताङ्गस्य दीर्घः स्यात्, न त

क्षति, सार्वधातुके च परे। इति दीर्घे जि-जीयात्। चि-चीयात् स्तु-स्तूयात्।

५· ६· १·
## उपसर्गादूहतेर्ह्रस्वः ॥ ५०१ ॥

उपसर्गात् परस्य ऊहतेः ह्रस्वः स्यात्, प्रागुक्तरूपे थादौ परे इति ह्रस्वे समुह्यात्। (४९२ सू०) दीर्घे ईयात्, उपसर्गात् तु समुदियात्। (४८६ सू०) गुणे स्तृ-स्तर्य्यात् ऋ-अर्य्यात् (४१३ सू०) रिङि हृ-ह्रियात्। क्र-क्रियात्। स्तृ-स्त्रियात्। तॄ-तीर्य्यात्। पॄ-पूर्य्यात्। नलोपे मन्थ-मथ्यात्। इदितात्र वदि-वन्द्यात्। हन्तेः वधादेशे बध्यात् (४०४ सू०) पक्षे ङा खायात् खन्यात् सायात् सन्यात्।

६: ·१· ६· ·१·
## घुमास्थागापाजहातिसामेत् संयोगादेस्तु
·१·
## वा ॥ ५०२ ॥

घुसंज्ञस्य मास्थादीनाम् एदन्तादेशः स्यात् स्थान्यसंयोगादेस्तु वा। दा-देयात्। धा-धेयात्। मा-मेयात्। स्था-स्थेयात्। पा-पेयात्। हा-हेयात्। सो-सेयात्। संयोगादेस्तु घ्रा-घ्रेयात् घ्रायात्। म्ना-म्नेयात् म्नायात्।

आत्मनेपदे इटि गुणावादेशषत्वानि भविषीष्ट भविषीयास्ताम् भविषीरन्। भविषीष्ठाः भविषीयास्थाम् (४४२ सू०) वा ढत्वे भविषीढ्वम् भविषीध्वम्। भविषीय भविषीवहि भविषीमहि। (४६४ सू०) वेटि दीर्घाभावे तृ-तरिषीष्ट इडभावे (३३० सू० कित्त्वे तीर्षीष्ट। स्तृ-स्तरिषीष्ट स्तृषीष्ट। वृ-वरिषीष्ट वृषीष्ट। ग्रहेस्तु ग्रहीषीष्ट। स्तृ-संस्तृषीष्ट।

गुहेः-स इट् गूहिषीष्ट एवे ( ३३० सू० ) किन्त्वेन गुणाभावे ढत्वे भष्भावे कत्वे षत्वे घुक्षीष्ट। दुहेः दादितया (२३५ सू०) हस्य घत्वे भषि चरि षत्वे धुक्षीष्ट। वेटि सविषीष्ट सोषीष्ट। क्लृपेः कल्पिषीष्ट क्लृप्सीष्ट। ऊर्णु-ऊर्णुविषीष्ट ऊर्णविषीष्ट। भ्रस्ज—भर्जिषीष्ट भ्रक्षीष्ट। हन—आवधिषीष्ट ब्रूञः वक्षीष्ट। यज-यक्षीष्ट चक्षिङ्-ख्यासीष्ट।

इति आशीर्लिङ्प्रकरणम्।

---

## लृट्प्रकरणम्।

भू-लृटि गुणावादेशषत्वानि भविष्यति भविष्यतः भविष्यन्ति। भविष्यसि भविष्यथः भविष्यथ। भविष्यामि भविष्यावः भविष्यामः। भविष्यते भविष्येते भविष्यन्ते। भविष्यसे भविष्येथे भविष्यध्वे। भविष्ये भविष्यावहे भविष्यामहे।

५·   ६· ·१·

### ऋद्धनः स्येट्— ॥ ५०३ ॥

ऋकारान्तात् हन्तेश्च परस्य स्यादेः इट् स्यात्। स्र सरिष्यति हन-हनिष्यति।

५·   ६·   ६·   ७·

### गम आर्द्धधातुकस्य सस्य परस्मैपदे ॥५०४॥

गमः परस्य आर्द्धधातुकस्य सस्य स्थाने इट् स्यात् परस्मैपदविषये। गमिष्यति। आत्मनेपदे तु सङ्गंस्यते। (४६६ सू०) वेटि सू—सविष्यते सोष्यते नश-नशिष्यति ( ४९८ सू० ) नुमि षत्वे भत्वे चरि, मत्वकत्वे वा नंक्ष्यति; हृतादेरुदित्त्वेन वेट्टि प्राप्ते।

५ः ५००१० ६ः ७० ०१०
वृतादिभ्यः स्यसनोः परस्मैपदे न ॥५०५॥

वृतादिभ्यः परस्य स्यादेः सनश्च स्थाने इट् न स्यात् परस्मैपदविषये। वृत वृध शृध स्यन्द वृतादि। अतएव परस्मैपदम्। वृत-वर्त्स्यति वृध-वर्त्स्यति स्यन्द—स्यन्त्स्यति। आत्मनेपदे तु वर्त्तिष्यते वर्त्स्यते। कल्पिष्यते कल्प्स्यते।

५० ६० ६००१०
कृतचतच्छृदतृदनृतोऽसिचः सस्य वा ॥५०६॥

कृतादिभ्यः परस्य असिचः सस्य स्थाने इट् न स्यात् वा। कृत-कर्त्स्यति कर्त्तिष्यति। नृत-नर्त्स्यति नर्त्तिष्यति। अस्तेः-भविष्यति। गुहेः-गूहिष्यति घोक्ष्यति। भ्रस्ज-भर्जिष्यति भ्रक्ष्यति। ब्रुवः वक्ष्यति। चक्षिङः-ख्यास्यति ख्यास्यते। प्रच्छ-प्रक्ष्यति। यज-यक्ष्यति यक्ष्यते। तॄ-तरीष्यति तरिष्यति। धे-धास्यति। गै-गास्यति। ऊर्णु-ऊर्णुविष्यति ऊर्णविष्यति। विज-विजिष्यति। स्फुर-स्फुरिष्यति।

इति लृट् प्रकरणम्।

---

## लृङ् प्रकरणम्।

भू—लृङि अटि इटि गुणावादेशषत्वानि अभविष्यत् अभविष्यताम् अभविष्यन्। अभविष्यः अभविष्यतम् अभविष्यत। अभविष्यम् अभविष्याव अभविष्याम। अभविष्यत अभविष्येताम् अभविष्यन्त। अभविष्यथाः अभविष्येथाम् अभविष्यध्वम्। अभविष्ये अभविष्यावहि अभविष्यामहि। अजादेस्तु आटि अट—आटिष्यत् अन्यत् सर्वं लङ्वत्। इङस्तु (४७४सू० का० १०स०) पक्षे गादेशे (३२२सू०) ङित्त्वेन (४७५सू०) ईत्वे

अत अध्यैष्यत इति भेदः। एवं सर्वत्र धातुरूपाम्। विस्तरस्तु मत्कृतधातुरूपादर्शे ज्ञेयः।

इति लङ्प्रकरणम्।

## तिङन्तेषु णत्वषत्वप्रकरणम्।

विशेषविधिं विना निमित्तस्य नकारसकारयोश्च एकपदस्थत्वे एव णत्वषत्वे प्राप्ते तत्र उपसर्गादेः असमस्ततया भिन्नपदत्वे अपि संहितानित्यत्वस्वीकारेण णत्वषत्वयोः साधनार्थम् आरभ्यते।

णोपदेशषोपदेशौ गणे यौ णादिषादिकौ।
नृताद्यन्यस्वपाद्यन्यौ तौ णत्वषत्वभागिनौ।
नादयो धातवो ये स्युर्गणे ते णादयो मताः।
नृत्यतिं नन्दतिं नाथिं विना ते णोपदेशकाः।
स्वरान्तसादयो ये च दन्त्यवर्णान्तसादयः।
स्वर्पास्वदस्वर्दस्मिङश्च सृप्सृज्स्त्यैस्तृविवर्जिताः।
एकाचश्च गणे प्रोक्ताः षादयः षोपदेशकाः।
णादिषादी गणेयुक्तौ प्रयोगे नादिसादिकौ।
प्राप्नुतो णत्वषत्वे तावुपसर्गादियोगतः। यथा—

५:॰ ६॰ ६॰
प्रपरापरिनिरन्तर्भ्यः णोपदेशस्य नादेः शास्त-

६॰ ६: ६॰ ६॰ ६॰ ॰१॰ ६॰
नशो हिनुमीनात्योरानिपो ह्रन्तेरतपूर्वस्य च नो

१॰ ॰१॰ ६: ॰१॰ ॰१॰
णः—प्राग्वदनानिन्द्योस्तु वा ॥ ५०७ ॥

एभ्यः परस्य णोपदेशस्य नादेः धातोः, शान्तनशः, हिनु-मीनात्योः, आनिपः प्रत्ययस्य, अयुक्तस्य हन्तेश्च नस्य णत्वं, प्राग्वत् अडादिव्यवधाने अपि स्यात्, अननिन्द्योस्तु वा। प्रणदति प्रणश्यति। शान्तेत्युक्तेः प्रनंष्ट इत्यादौ न। प्रहिणोति प्रमीणाति प्रभवाणि। प्रहण्यात्। अतपूर्वस्य किं, प्रघ्नन्ति। प्राणिति प्रानिति। परिणिन्दति परिनिन्दति।

६·
नेर्गदनदपतपदघुमास्यतिहन्तियातिवाति-
७:·
द्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु
॥ ५०८ ॥

गदादिधातुषु परेषु प्रादिभ्यः परस्य नेः उपसर्गस्य नस्य णत्वं स्यात्। प्रणिगदति। प्रणिनदति प्रणिपतति। प्रणिपद्यते प्रणिददाति प्रणिदधाति।

७· ७· ७· ६··१··१·
अकखादावषान्ते शेते भवान्तहन्तेश्च वा
॥ ५०९ ॥

कादिखादिभिन्ने षान्तभिन्ने च गदादेः अन्यस्मिन् धातौ परे प्रादिभ्यः परस्य नेः भवान्तहन्तेश्च नस्य णत्वं वा स्यात्। इति विभाषया णत्वे प्रणिभवति प्रनिभवति। प्रहणवः प्रहन्वः। प्रहण्मः प्रहन्मः। कखादौ तु प्रनिक्रामति प्रनिखादति। षान्ते प्रनिम्लेषति।

इति णत्वप्रकरणम्।

## षत्वप्रकरणम्।

६· ५·
उपसर्गस्थेक:—सुनोतिसुवतिस्यतिस्तौति-
६ः ५·
स्तोभतिस्थासेनयसेधसिचसन्जस्वन्जामप्रते: स-
६· ·१· ·१· ६· १·
देश्च प्राग्वत् सस्य—ष:— ॥ ५१० ॥

प्राग्वत् नुम्विसर्गव्यवधाने अपि उपसर्गस्थ इक: परेषाम् एषां सस्य ष: स्यात्। ग्रहणसामर्थ्यात् अषोपदेशस्य अपि णिजन्तसेनाशब्दस्य षत्वम्। सुनु-अभिषुणोति परिषुणोति। सुव-अभिषुवति सो-अभिष्यति। स्तु-अभिष्टौति स्तुभ-परिष्टोभते। स्था-अभिष्ठाता। सेनय-अभिषेणयति। सेध-अनिषेधति। सिच-अभिषिञ्चति। सन्ज-अभिषजति। स्वन्ज-अभिष्वजते। सद-अभिषीदति। प्रतेस्तु प्रतिसीदति।

६· ·१· ५· ·१· ७:
स्तम्भेश्चावात्त्वालम्बनसामीप्ययो: ॥ ५११ ॥

उपसर्गस्थ इक: परस्य स्तम्भे: सस्य ष: स्यात् अवात् तु आलम्बनसामीप्ययो: अर्थयो:। अभिष्टभ्नोति प्रतिष्टभ्नाति, अवष्टभ्नाति यष्टिम् अवलम्बते इत्यर्थ:। अवष्टभ्यते गौ: सामीप्ये निरुध्यते इत्यर्थ:।

५ः ६· ७·
व्यवाभ्यां स्वनो भोजने ॥ ५१२ ॥

आभ्यां परस्य भोजनार्थे स्वन: सस्य ष: स्यात्। विष्व-

ष्यति अवष्यति सम्यक् भुङ्क्ते इत्यर्थः। आभ्यां * किं निस्यति। भोजने किम्, विस्यनति वीणा।

५:,

## परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तु-

६:,

## स्वञ्जाम् ॥ ५१३ ॥

एभ्यः परेषाम् एषां सस्य षः स्यात्। सेव-परिषेवते निषेवते विषेवते। क्तान्तसो-परिषितः। अजन्तसि-परिषयः विषयः। सिवु-परिषीव्यति निषीव्यति। सह-परिषहते। सुट्-परिष्करोति। स्तु-परिष्टौति। स्वञ्ज-परिष्वजते। एषु किम्, अभिसेवते। स्तुस्वञ्जोः पूर्वेण एव सिद्धे उत्तरत्र अनुवृत्त्यर्थम् इह पुनः ग्रहणम्।

५:, ६:, ७, १,

## एभ्यः सिवादीनामड्व्यवधाने वा ॥५१४॥

परिनिविभ्यः परेषां सिव सह सुट् स्तु स्वञ्ज इत्येषाम् अड्व्यवधाने सस्य षत्वं वा स्यात्। सिव-पर्य्यषीव्यत् पर्य्यसीव्यत्। सह-पर्य्यषहत पर्य्यसहत। सुट्-पर्य्यष्करोत् पर्य्यस्करोत्। स्तु-पर्य्यष्टौत् पर्य्यस्तौत्। स्वञ्ज-पर्य्यष्वजत पर्य्यस्वजत।

६:, ७, १,

## सेवान्तानामड्व्यवधाने नित्यम् ॥ ५१५ ॥

* सति तु उपसर्गाणां तिङन्तपदैः समस्तत्वे समासत्वेन प्रातिपदिकसंज्ञाप्राप्तया ततः सुपः प्रसङ्गः सामान्ये नपुंसकतया सुपः लोपसमर्थने तु प्राभवन् प्राकुर्वीरन् इत्यादौ नलोपस्य, प्रकुरुते इत्यादौ क्लीवे ह्रस्वस्य च आपत्तिः इत्यतः उक्तम् असमस्तेति, अतः तत्र समासविधानम् अतीव प्रामादिकम्।

सुनोति इति आरभ्य सेवपर्य्यन्तानां पञ्चदशानाम् अड्-व्यवधाने नित्यं षत्वं स्यात् । सुनु-अभ्यषुणोत् सुव-पर्य्यषुवत् । सो-अभ्यष्यत् स्तु-अभ्यष्टौत् । न्यष्टौभत । स्था-न्यष्ठात् । सेनय-अभ्यषेणयत् । सिध पर्य्यषेधत् । सिच-अभ्यषिञ्चत् । सन्ज-पर्य्यषजत् । स्वन्ज-अभ्यष्वजत । पर्य्यादिभ्यस्तु स्तु-स्वन्जोः पूर्वेण एव वा । सद-पर्य्यषीदत् स्तन्भ-व्यष्टभ्नात् अवाष्टभ्नात् । स्वन्-व्यष्वणत् अवाष्वणत् सेव-पर्य्यषेवत ।

७· ६ः· २· ६· ·१·

तेषु स्थादीनामभ्यासेनाभ्यासस्य च ॥५१६॥

प्रागुक्तानां पञ्चदशानां मध्ये स्थादीनां दशानाम् अभ्यासेन व्यवधाने अपि षत्वं स्यात्, अभ्यासस्य च । स्था-अभितष्ठौ । सेनय-अभिषिषेणयिषति । सिध-अभिषिषेध सिच-अभिषिषेच । सन्ज-अभिषिषङ्क्षति * । स्वन्ज-अभिषिष्वङ्क्षते । सद-निषषाद । स्तम्भ-अभितष्टम्भ । स्वन-विषष्वाण अवषष्वाण । सेव-परिषिषेव ।

५ः· ६· ६·

अनुविपर्य्यभिनिभ्यः स्यन्दतेरप्राणिकर्त्तृकस्य

·१·

वा— ॥ ५१७ ॥

एभ्यः परस्य स्यन्दतेः सस्य षः वा स्यात्, प्राणिकर्त्तृकस्य तु न । अनुष्यन्दते विष्यन्दते निष्यन्दते घृतम् । पक्षे असत्वम् । प्राणिकर्त्तृकस्य तु निस्यन्दते मत्स्यः । विधानसामर्थ्यात् असोपदेशस्य अपि षत्वम् ।

* अभिषिषङ्क्षति इत्यत्र ५५१ सूत्रेण षत्वनिया-मकेन न षत्वस्य बाधः, तस्य उपसर्गरहिते चारितार्थत्वात् ।

५· ६·५··१· ७·
## परेः स्कन्देर्वेस्त्वनिष्ठायाम् ॥ ५१८ ॥

परिपूर्वकस्य स्कन्देः सस्य षः वा स्यात्, विपूर्वकस्य तु अनिष्ठायाम्। परिष्कन्दति परिस्कन्दति। विष्कन्दति विस्कन्दति। निष्ठायान्तु विस्कन्नम्। परेस्तु विभाषया स्यात् एव, परिष्कन्नं परिस्कन्नम्।

५:· ६:
## निर्निविभ्यः स्फुरस्फुलोः ॥ ५१९ ॥

एभ्यः परयोः अनयोः सस्य षः वा स्यात्। निष्फुरति निष्फुलति। पक्षे अषत्वम्।

५: ६· ७· ७· ७··१·
## उपसर्गैकप्रादुर्भ्यामस्तेरचि ङिति ये च ॥५२०॥

आभ्यां परस्य अस्तेः ङित्संज्ञके अचि ये च परे सः षः स्यात्। निषन्ति निष्यात् प्रादुःषन्ति प्रादुःष्यात्।

उपसर्गात् सुनःस्ये नो सिवस्तम्भोस्वणेस्वङि।

सङ्गेति च सः षत्वं वयुक्तस्य स्पर्शेश्च न।

सेधेर्गतौ न षत्वं स्यान्न कथञ्चित् सिचेर्यङि। यथा—

परिसोष्यते। पर्य्यसोषिवत् व्यतस्तम्भत्। पर्य्यसोषहत् विसोढा। सुसुप्वाप, अन्यत्र सुषुपुपतुः। ग्रामं परिसेधति गच्छति इत्यर्थः। एषु तु मूलधातोस्तु इण्कोः इत्यनेन षत्वम्, उपसर्गात् परस्य एव निषेधात्। संसिच्यते इत्यत्र तु कथञ्चित् इत्युक्तेः न षत्वम्।

इति षत्वप्रकरणम्।

# णिजन्तप्रकरणम्।

५· ·१· ७·

## धातोर्णिच् प्रवर्त्तनायाम् ॥ ५२१ ॥

प्रवृत्तिजनकः व्यापारः प्रवर्त्तना, तदर्थे धातोः णिच् स्यात्। इचौ इतौ। णिचि वृद्ध्यादौ भावि (४२८ सू०) धातुसंज्ञायां सामान्यतः अपि गुणावादेशे भावयति। भावयेत्। भावयतु। अभावयत्। वच-वाचयति। हन-हस्य (४८१ सू०) घत्वे।

६· ·१· ७· ८·

## हनस्तङ् णप्चिणि ञ्णिति ॥ ५२२ ॥

हन्तेः तङ् स्यात् ञिति णिति च परे, न तु णपि चिणि च। ङः इत्। इति नस्य तङि घातयति।

६· ·१· ७· ६·' १·

## अर्त्यातो पुक् णिचि—शा, सा ह्वेवेपिवान्तु

·१·

## युक् ॥ ५२३ ॥

णिचि परे अर्त्तेः आदन्तस्य च पुक् स्यात् शा, सादीनान्तु युक्। ऋ—अर्पयति। आतः स्था—स्थापयति या—यापयति। शो—शाययति सो—साययति ह्वे—ह्वाययति वे—वाययति पिबतेः पाययति।

६·' ६· ·१·

## क्रीङ्जीनामच आत् चिस्फुरप्रजनार्थवी-

६· ·१· ·१·

## यतेस्तु वा ॥ ५२४ ॥

णिचि परे एषाम् अचः आत् स्यात्, चिस्फुरादेस्तु वा।

इति भास्वे पुकि क्री-क्रापयति इङ्-अध्यापयति जि—जापयति। चि—चापयति चाययति। स्फुर स्फारयति स्फोरयति। वी-वापयति वाययति पुरोवातः गर्भं पाहयति इत्यर्थः। अन्यत्र वाययति।

५: ·१· ५· ७· ६: ·१··१·
भीस्मिङ्भ्यां तङ् हेतोर्भयस्मये तयोस्त्वात्
७·
णिचि ॥ ५२५ ॥

प्रयोजकात् भये स्मये च गम्यमाने भीस्मिङ्भ्याम् आत्मनेपदं स्यात्, तयोश्च अचः आत् णिचि। तङ् इति आत्मनेपदसंज्ञा। विस्मापयते।

६· १· ·१· ७·
भियो भीषो वा तङ् विषये ॥ ५२६ ॥

प्रागुक्तात्मनेपदविषये भियः भीषः स्यात् वा णिचि। भीषयते, पक्षे भाययते। हेतुभये किम्, अस्त्रेण भाययति।

पातेः पालो,ऽगतौ शातः शदेः, रोपस्तु वा रुहेः।
दुषेर्दूषि,र्वा विकारे, ऽज्ञाने गमिरिणो णिचि।
स्नेहद्रवे लियो लापिः, सिधेः साधस्तु लौकिके।'
प्रीञः प्रीणो णिचि भवेत्, धूञो धूनिश्च वा णिचि।

पातेः—प्रजाः पालयति। शद—पत्रं शातयति नाशयति इत्यर्थः। गतौ तु शादयति गाः गमयति इत्यर्थः। रुह-रोपयति रोहयति। दुष-दूषयति। चित्तविकारे तु, दूषयति दोषयति वा चित्तम्। इण-गमयति वक्ष्यमाणेन क्रमः। ज्ञाने तु प्रत्याययति। लिय,-घृतं विलापयति।

अन्यत्र लोहं विलाययति। सिध-अन्नं साधयति। अन्यत्र ग्रहः अरिष्टं सेधयति सेचयति इत्यर्थः। प्रीञ्—प्रीणयति प्राययति। धूञ्—धूनयति धावयति।

घटधातोः णिचि उपधाभूताकारस्य ह्रस्वो।

६:· ६·

**घटादिजनीजीर्य्यतीनामकमामचमोऽमन्त-**

६· ६· १· ७· ७· ·१· ·१·

**स्योपधाया—ह्रस्वो—णौ—चिण्णमुल्परे तु वा**

६· ·१·

**आगुश्च ॥ ५२७ ॥**

णौ परे घटादीनां कमादिवर्जितस्य अमन्तस्य च उपधायाः ह्रस्वः स्यात्, चिण्णमुल्परे णौ तु आगुश्च वा स्यात्। णौ इति णिङ्णिचोः ग्रहणाय। घटादिः (सि० उ० ८२ पृ०) ज्ञेयः। इति ह्रस्वे घटयति रण-रणयति ध्वन-ध्वनयति इत्यादि। जन-जनयति जीर्य्यतिः जरयति। जॄणातेस्तु जारयति। अमन्तस्य गम—गमयति दम—दमयति। कमादेस्तु कम णिङि कामयते अम—आमयति चम-चामयति।

६· ७· ६· ७· ६· ७· ६·

**अमा दर्शने यमो भोजने चलिः कम्पने श्रः**

७· ७:· ६·

**पाके मारणतोषणचाक्षुषज्ञानेषु ज्ञापेः ***

**॥ ५२८ ॥**

---

* चिण्णमुल्परे तु वा इति अनुवर्त्तनीयम्, तेन चिण्परे अशामि अशमि इत्येव। एवं णमुल्परे अपि।

एषु अर्थेषु एषां ह्रस्वः स्यात् णौ, न अन्यत्र अर्थे। शमयति दर्शयति इत्यर्थः। अन्यत्र निशामयति आवयति इत्यर्थः। यमयति विप्रं भोजयति इत्यर्थः। अन्यत्र आयामयति हस्तं व्यापारयति इत्यर्थः। पाकः विक्लित्तिमात्रम्। अन्नं श्रपयति विक्लेदयति इत्यर्थः। अन्यत्र हस्तं श्रापयति स्वेदयति इत्यर्थः। चलयति शाखां कम्पयति इत्यर्थः। अन्यत्र चालयति शीलम् अन्यथाकरोति इत्यर्थः। ज्ञपयति मृगं मारयति तोषयति वा अर्थः। ज्ञपयति वेदं आवयति इत्यर्थः। चाक्षुषज्ञाने तु, ज्ञापयति नृपं दर्शयति इत्यर्थः।

५॰ ६ः॰ ॰१॰

**अनुपसर्गात् ज्वलह्वलग्लास्नावमनमां वा ॥५२९॥**

अनुपसर्गात् एषां ह्रस्वः वा स्यात्। तत्र ग्ला, स्ना, इत्यनयोः अप्राप्ते इतरेषां प्राप्ते विकल्पः। ज्वलयति ज्वालयति। ह्वलयति ह्वालयति। ग्लपयति ग्लापयति। स्नपयति स्नापयति। वमयति वामयति। नमयति नामयति। उपसर्गात् तु प्रज्वलयति इत्यादौ नित्यं ह्रस्वः, प्रग्लापयति प्रस्नापयति इत्यादौ अह्रस्वः। भू-णिचि लुङि (४५२ सू॰) चङि द्वित्वादौ प्राप्ते (४८९ सू॰) अजादेशात् प्राक् भू इत्यस्य द्वित्वे अभ्यासकार्य्ये जश्ह्रस्वे मूलधातोः वृद्धौ आवादेशे।

७॰ ७॰ ६॰ १॰

**चङ्परे णावुपधाया ह्रस्वोऽनग्लोपिशास्दृदितां भ्राजादेस्तु वा ॥ ५३० ॥**

६ः॰ ६॰ ॰१॰ ॰१॰

चङ् परः यस्मात् तथाभूते णौ परे उपधायाः ह्रस्वः स्यात्, न तु अग्लोपिनः, शास्तेः, ऋदितश्च, भ्राजादेस्तु वा। भ्राज

भास भाष जीव मील पीड कण रण वण भण श्रण लप लुप हेट भ्राजादि । इति उपधाह्रस्वे ।

७· ७· ६· ·१·
चङ्युत्तरणिपरे लघुन्यभ्यासस्य सन्वदनग्-
७·
लोपे ॥ ५३१ ॥

चङुत्तरवर्त्ती णिः परः यस्मात् तादृशे लघुवर्णे परे अभ्यासस्य सनि इव कार्य्यं स्यात्, न तु धातोः अग्लोपे । इति सन्वद्भावे ।

६· ६· ·१· ७:· ७:· ७·
ओरभ्यासस्यात् पुयण्जेष्ववर्णोत्तरेषु सनि
६· ·१· ·१·
स्रुवादेस्तु वा ॥ ५३२ ॥

सनि परे अङ्गस्य यः अभ्यासः तस्य उकारस्य स्थाने अत् स्यात्, अवर्णोत्तरपवर्गयण्जकारेषु परेषु, स्रुवादेस्तु वा । श्रु स्रु द्रु प्रु, प्लु च्यु इति स्रुवादि । इति अभ्यासस्य उतः स्थाने अत्वे ।

६· ६· ·१· ७·
अभ्यासस्यात इत् सनि ॥ ५३३ ॥

सनि परे अङ्गस्य यः अभ्यासः तस्य अतः स्थाने इत् स्यात् । इति अतः इत्वे ।

६· १· ७·
दीर्घो लघोः सन्वद्भावे ॥ ५३४ ॥

सन्वद्भावविषये अभ्यासस्य लघोः स्थाने दीर्घः स्यात् । इति दीर्घे ।

६· १· ७· ७·

णेर्लोपोऽनिडामिश्वाल्विष्वाकार्द्धधातुके ॥५३५॥

इट्, आम्, इश्‌, आलु, इष्णुभिन्ने आर्द्धधातुके परे णे: लोपः स्यात्। इति णिलोपे अबोभवत्। पु-अपीपवत् यु-अयीयवत् रु-अरीरवत् लु-अलीलवत् जु अजीजवत्। पुादिषु किम्, अनूनवत् असूषवत् इत्यादौ सन्वद्भावे दीर्घः एव। श्रुवादेस्तु अशुश्रुवत् अशिश्रुवत् इत्यादि। अल्लोपिनः—अवादिवीरत्। भास-अबभासत्। चटित्-अचचाटत्।

६· ·१· ६:· ७· ७·

अभ्यासस्यात् स्मृदृत्वरस्तृप्रथां चङ्परे णौ

६: ·१· ·१· ६: ·१··१· ·१·

चेष्टिवेष्ट्योस्तु वा गणकथयोस्त्वीच्च ॥ ५३६ ॥

चङ्परे णौ परे स्मादीनाम् अभ्यासस्य अदन्तादेशः स्यात्, चेष्टिवेष्ट्योस्तु वा, गणकथयोः ईत् च। स्मृ—असस्मरत् दृ—अददरत् त्वर—अतत्वरत् स्तृ-अतस्तरत् प्रथ-अपप्रथत्। चेष्ट—अचचेष्टत् अचिचेष्टत्। वेष्ट-अववेष्टत् अविवेष्टत्। गण-अजीगणत् अजगणत्। कथ-अचीकथत् अचकथत्।

६· ·१· ·१· ७· ७·

इङो गा वा सन्चङ्परे णौ ॥ ५३७ ॥

इङः गादेशः वा स्यात्, सन्परे चङ्परे च णौ परे॥ इति गादेशे अध्यजीगपत्, पक्षे अध्यापिपत्।

५· १· १··१· ·१·

ऋदुपधाच्चङ्परो णिर्ङिद्वा ॥ ५३८ ॥

ऋदुपधात् धातोः परः चङ्परः णिः वा ङित् स्यात्। इति ङित्त्वे वृत-अवीवृतत्, पक्षे गुणे लघुपरत्वाभावात्

सन्वद्भावाभावेन अप्रवर्त्तत्। लिटि तु अनेकाच्त्वेन आम्यनुप्रयोगे भू-भावयाञ्चकार भावयाञ्चक्रे। भावयाम्बभूव भावयामास। लुटि भावयिता। आशीर्लिङि णेः लोपे भाव्यात्। लृटि भावयिष्यति। लृङि अभावयिष्यत्।

इति णिच्प्रकरणम्।

---

## सनन्तप्रकरणम्।

५· ५· ५· ७·
**इष्यमाणाद्धातोः समानकर्त्तृकादिच्छायां**
·१· ·१·
**सन् वा ॥ ५३९ ॥**

इष्यमाणात् इषिणा एककर्त्तृकात् धातोः सन् वा स्यात् इच्छार्थे। नः इत्। भवितुम् इच्छति इति वाक्ये सनि सनन्ततया (४२९ सू॰) धातुसंज्ञायां भू भू इति द्वित्वे अभ्यासकार्य्ये इटि प्राप्ते।

५· ६··१··१·
**उग्रहगुहः सनो नेट् ॥ ५४० ॥**

उवर्णान्तात् ग्रहेः गुहश्च परस्य सनः स्थाने इट् न स्यात्। इति इटः निषेधे (३२९ सू॰) किच्त्वे गुणाभावे कर्त्तृलकारे अपि परत्वे बुभूषति। ग्रहेस्तु इटः निषेधे।

६ः १· ७·
**ग्रहस्वपप्रच्छां सम्प्रसारणं सनि ॥ ५४१ ॥**

एषां सम्प्रसारणं स्यात् सनि। इति सम्प्रसारणे पूर्वरूपे किच्त्वेन गुणाभावे हस्य ढत्वे भषि चरि षत्वे क्षत्व इत्वस्य धातुसंज्ञायां द्वित्वे आदिहल्शेषादौ अभ्यासकार्य्ये (५२३

सू० ) इत्त्वे जिहृषति गुह-जुगुक्षति। स्वप-सुषुप्सति धोक-देशतया ( १७८ सू० ) षत्वम्। प्रच्छेस्तु-सम्प्रसारणे।

५ः ५ः ६ ०१

किरादिभ्यः पञ्चभ्यः सन इट् ॥ ५४२ ॥

कॄ गॄ दृ धृ प्रच्छ एभ्यः परस्य सनः स्थाने इट् स्यात्। इति इटि ऋकारस्य द्वित्वे तत्पूर्वस्य ऋतः उपधाभूतलघुत्वाभावेन गुणाभावे द्वित्वादौ पिपृच्छिषति कॄ-चिकरिषति धृ-दिधरिषति। ( ३२७ सू० ) कित्त्वे भिद-बिभित्सति रुज-रुरुक्षति। इगुपधत्वाभावेन कित्त्वाभावात् न सम्प्रसारणम् यज-यियक्षति वच-विवक्षति। इणस्तु।

६ ६ ०१ १ ७

अबोधार्थेणः इङस्य गमिः सनि— ॥५४३॥

अबोधनार्थस्य इणः इङश्च स्थाने गमिः स्यात्। इति गम्यादेशे इणाख्यानिकस्य परस्मैपदितया ( ५०४ सू० ) इटि जिगमिषति। बोधे गम्यादेशाभावे अजादितया इकारं विहाय षस्य द्वित्वे इत्त्वे प्रतीषिषति। कर्मणि भावे च वाच्ये गम्यादेशे आत्मनेपदितया इडभावे।

६ः १ ७ ६ ०१

आदिष्टगमिहनचां दीर्घोऽनिटि तनोतेर्वा * ॥ ५४४ ॥

आदिष्टगमेः हन्तेः अजन्तस्य च दीर्घः स्यात् अनिटि

* लक्षणप्रतिपदोक्तयोः मध्ये प्रतिपदोक्तस्य एव ग्रहणम् इति न्यायेन अनादिष्टस्य एव ग्रहणे प्राप्ते आदिष्टात विशेषणम्।

गमि परे, तनोतेस्तु वा। इति दीर्घे जिगांसते। इङः गमेः आत्मनेपदितया इडभावे अधिजिगांसते। हनः (४८१ सू०) घत्वे जिघांसति। अत्र इगुपधत्वाभावेन किन्वाभावात् न नलोपः।

अजन्तस्य नुनूषति, ऋ—दीर्घे इरि इकः दीर्घे चिकीर्षति।

५·
इवन्तर्धभ्रस्जदम्भश्रियूर्णुभरज्ञपिसनस्तन-
५··१· ६· ·१··१·
पतद्दरिद्रातेश्च सनो वेट् ॥ ५४५ ॥

इवन्तस्य ऋधादेः तनादेश्च परस्य सनः स्थाने इट् वा स्यात्। इति इटि दिव-दिदेविषति सिव-सिसेविषति (३३७ सू०) वान्तत्वात् किन्वाभावेन गुणः। पक्षे।

६: १: ७· ७· ·१· ७·
छ्वयोः शूठावनुनासिके झलि च क्ङिति
७· ·१·
क्वौ च ॥ ५४६ ॥

छकारस्य शः, वकारस्य च ऊट्, स्यात् किति ङिति अनुनासिकादौ झलादौ क्विपि च परे। इति वस्य ऊठि यणि द्वित्वे हलादिशेषादौ दुद्यूषति सुस्यूषति। भ्रस्ज—वा भर्जादेशे बिभर्जिषति बिभ्रक्षति। स्तृ-सिस्तरिषति सुस्तूर्षति। अस्य संयोगादितया (४६४ सू०) वा इटि प्राप्ते अन्यसंयोगादेः नियमार्थम्, तेन स्मृ-सुस्मूर्षति इत्येव। यौत्यादेस्तु (५४० सू०) उवर्णान्ततया इडनिषेधे विभाषया इट् अभ्यासस्य उतः अत्वे यु-यियविषति युयूषति। ऊर्णु-अजा-

टितया ऊरभागं विहाय द्वित्वे वा ङित्त्वे च ऊर्णुनविषति ऊर्णुनुविषति, इडभावे ऊर्णूनूषति। तन-तितनिषति, वा दीर्घे तितांसति तितंसति। पत-पिपतिषति, पत्से।

६:· ६· १·
मीमाघुरभलभशकपतपदामच—इमुँ रनि·
७· १· ·१·
ट्सन्यभ्यासलोप—श्च ॥ ५४७ ॥

एषाम् अचः इमुँः स्यात् अनिट्सनि परे, अभ्यासलोपश्च। उकारः इत्। इति इसि (४७१ सू०) सस्य तत्वे चरि अभ्यासलोपे पित्सति। मा-मित्सति। दा-दित्सति धा-धित्सति, संयोगादिसलोपे रभ-रिप्सते लभ-लिप्सते शक-शिक्षति।

६: ·१·
ज्ञाप्यापोरीत् ॥ ५४८ ॥

ज्ञापेः आपश्च अचः स्थाने ईत् स्यात् अनिट्सनि, अभ्यासलोपश्च। ज्ञापि-जिज्ञपयिषति ज्ञीप्सति।

६· ६· १· ·१·
मुचोऽकर्मकस्य मोचो वा ॥ ५४९ ॥

अकर्मकस्य मुचः स्थाने मोचः स्यात् अनिट्सनि परे, अभ्यासलोपश्च। मोक्षते मुमुक्षते। अकर्मकस्य किं, वत्सं मुमुक्षति (५०५ सू०) इडभावे वृत-विवृत्सति, तङि तु विवर्त्तिषते। (५०६ सू०) वा इटि निनर्त्तिषति निनृत्सति (४६४, ४६५ सू०) वा इटि वा दीर्घे च वृ-विवरीषति विवरिषति वुवूर्षति। तॄ-तितरीषति तितरिषति तितीर्षति। स्कॄ तु संचिस्कीर्षति।

५: ६. १.
## स्मिङ्पूङ्‌ऋञ्ज्वशां सनः इट् ॥५५०॥

एभ्यः परस्य सनः स्थाने इट् स्यात्। इति इटि सिस्मयिषते (५३२ सू०) उतः अत्वे पिपविषते अरिरिषति अञ्जिजिषति। ऋ-इटि ऋकारं विहाय इषभागस्य द्वित्वे प्राप्ते "कार्य्यमनुभवन् हि कार्य्यो निमित्ततया नाश्रीयते" इति न्यायात् इषभागस्य अजादित्वे अपि द्वित्वनिमित्तत्वाभावेन द्वित्वात् प्राक् (४८८ सू०) न अजादेशनिषेधः, तेन गुणे अभागं विहाय रिषभागस्य द्वित्वे अरिरिषति, इङः णिचि सनि गाङादेशे अधिजिगापयिषते, पु-णिचि उतः अत्वे पिपावयिषति, यु-यियावयिषति। अन्यत्र तु, नु-नुनावयिषति।

६: १. ७. ५. ६. १.
## स्तौतिण्योरेव षण्यभ्यासेणः सस्य षः ॥५५१॥

अभ्यासस्थेणः परस्य स्तौतिण्यन्तयोः एव सस्य षः स्यात्, षभूते सनि परे, न अन्यस्य। तुष्टूषति (४८७ सू०) सम्प्रसारणे सुष्वापयिषति। सिषाधयिषति। एतयोः किं, सिसेधिषति। उपसर्गात् तु भवति एव, इण् कोः इत्यस्य एव नियमार्थत्वात् अस्य, तेन परिषिषेविषते परिषिषिक्षति। षणि किम्, तिष्ठासति। अभ्यासेणः इत्युक्तेः न इह इण्धातोः प्रतीषिषति।

१. ६:
## न स्विदिसदिसहीनाम् ॥ ५५२ ॥

एषान्तानाम् एषां प्रागुक्तं षत्वं न स्यात्। सिस्वेदयिषति सिसादयिषति सिसाहयिषति। "समानार्थसनन्तात् तु न सन्

तुल्यार्थकः पुनः” इत्युक्तेः इच्छार्थकसनन्तात् न पुनः इच्छार्थकः सन्, स्वार्थसनन्तात् तु स्यात् एव ।

इति सनन्तप्रकरणम् ।

## यङन्तप्रकरणम् ।

५· ५· ५·
धातोरेकाचो हलादेः सूचिसूत्रमूत्र्यट्यर्त्त्य-
५:· ·१· ७· ७· ·१· ·१·
र्णोतिभ्यश्च पौनःपुन्ये भृशार्थे च यङ् शुभरु-
५· ·१· ७·
चस्तु भृशार्थे ॥ ५५३ ॥

पौनःपुन्ये भृशार्थे च एकाचः हलादेः धातोः सूच्यादेश्च यङ् स्यात्, शुभरुचस्तु भृशार्थे । ङः इत् । ङित्वात् आत्मनेपदम् ( ४२१ सू॰ ) द्वित्वे अभ्यासकार्य्यं ।

६· १· ७:
अभ्यासस्य गुणो यङ्तलुकोः ॥ ५५४ ॥

यङि परे तलुकि च सति अभ्यासस्य इकः गुणः स्यात् । इति गुणे धातुसंज्ञायां कर्त्तृलकारे शबादौ, बोभूयते । बोभूयेत । बोभूयताम् । अबोभूयत । अबोभूयिष्ठ । अनेकाच्त्वात् आमि क्राद्यनुप्रयोगे बोभूयाञ्चक्रे बोभूयाम्बभूव बोभूयामास । बोभूयिता । बोभूयिषीष्ठ । बोभूयिष्यते । अबोभूयिष्यत । एकाचः किं, जागृदरिद्रादेः न । हलादेः किम्, अजादेः न । सूत्रादेः अनेकाच्त्वात् अप्राप्तौ पृथग्ग्रहणम् । सोसूच्यते सोसूत्र्यते इत्यादि । एकाचः एव षोपदेशविधानात्

स्वरान्तसादित्वे अपि अनेकाच्त्वेन षोपदेशाभावात् सुष्वा-
देः न षत्वम्।

५· ६· १· ७·

## यस्य हलो लोप आर्द्धधातुके ॥ ५५५ ॥

आर्द्धधातुके परे हलः परस्य यस्य लोपः स्यात्। यस्य इति यकारयुक्तस्य ग्रहणम्। यलोपे सोसूचाञ्चक्रे सोसूचिता इत्यादि।

६· ६· १· ७· ७· ·१·

## अकितोऽभ्यासस्य दीर्घो यङि तल्लुकि च ॥ ५५६ ॥

ककारेदन्यस्य अभ्यासस्य दीर्घः स्यात्, यङि परे, तल्लुकि च। इति दीर्घे अटाय्यते। ऋट-(४८६ सू०) गुणे अर्य्य इत्यस्य अजादितया अकारं विहाय (४८४ सू०) अये इत्युक्तेः रसहितस्य य्यं भागस्य द्वित्वे हलादिशेषे दीर्घे अरार्य्यते। दीर्घे ऊर्णूनूयते। बेभिद्यते। यलोपस्य स्थानिवत्त्वेन न गुणः बेभिदिता।

५ः· ७· ·१·

## गत्यर्थेभ्यः कौटिल्ये यङ् ॥ ५५७ ॥

गत्यर्थेभ्यः कौटिल्ये अर्थे यङ् स्यात्। कुटिलं व्रजति वाव्रज्यते।

५ः·

## लुपसदचरजपजभदहदन्शगृभ्यो भावगर्हायाम् ॥ ४५८ ॥

७·

एभ्यः क्रियानिन्दायाम् अर्थे यङ् स्यात्। गर्हितं लुम्पति लोलुप्यते। एवं सासद्यते।

६:· ६·

चरफलजपजभदहदन्भसनृजामभ्यासस्य

·१· ·१· ·१· ७· ७· ·१·

नुँक् पदान्तवच्च यङि तल्लुकि च ॥ ५५९ ॥

यङि परे तल्लुकि च सति एषाम् अभ्यासस्य नुँगागमः स्यात्। उक्तौ इतौ। इति नुकि पदान्तवद्भावात् अनुस्वारे पक्षे परसवर्णे च।

६: ५· ६· ६· ·१·

चरफलोरभ्यासात् परस्यात उत् ॥५६०॥

अनयोः अभ्यासात् परस्य अतः स्थाने उत् स्यात्, यङि तल्लुकि च सति। इति उत्वे चंचूर्य्यते चञ्चूर्य्यते। पंफुल्यते पम्फुल्यते। गर्हितं गिरति (४१५ सू०) लत्वे जेगिल्यते (४८६ सू०) गुणे सास्मर्य्यते।

६· ६·

अदुपधस्याऽनुनासिकान्तस्य नुँक् पदान्त-

·१··१·

वच्च ॥ ५६१ ॥

अदुपधस्य अनुनासिकान्तस्य अभ्यासस्य नुँगागमः पदान्तवच्च स्यात्, यङि परे तल्लुकि च सति। यंयम्यते। (४०४ सू०) ङाभावे जाजायते, पक्षे जंजन्यते।

६:·

वन्चुसन्सुध्वन्सुकसपतपदस्कन्दामभ्या-

६· ·१·

सस्य नीक् ॥ ५६२ ॥

एषाम् अभ्यासस्य नीगागमः स्यात्, यङि परे, तल्लुकि च सति । कः इत् । इति नीकि अकितः इत्युक्तेः न दीर्घः वनीवच्यते सनीस्रस्यते पनीपत्यते ।

७· ६· १· ७·

## हिंसायां हनो घ्नीर्यङि ॥ ५६३ ॥

यङि परे हिंसायां हन्तेः घ्नीः स्यात् । जेघ्नीयते । हिंसायाः अन्यत्र जाजंघन्यते ।

६· ·१· ६· ७:

## ऋत्वतो रीगभ्यासस्य यङ्यङ्लुकोः ॥५६४॥

ऋकारवतः धातोः अभ्यासस्य रीगागमः स्यात्, यङि तल्लुकि च । कः इत् । नरीनृत्यते जरीगृह्यते वरीवृत्यते परीस्पृश्यते ।

६: १· ७·

## स्वपिवेञोः सम्प्रसारणं यङि ॥ ५६५ ॥

अनयोः सम्प्रसारणं स्यात् यङि । सोषुप्यते वेवीयते ।

६· ·१· ७· ७·

## ओङोऽयँङ् यि क्ङिति ॥ ५६६ ॥

किति ङिति च यकारे परे ओङः अयँङ् स्यात् । अङौ इतौ । शाशय्यते । सिचस्तु सेसिच्यते ( १६२ पृ० १३ प० ) न षत्वम् ।

६· ·१· ·७· ७· ·१· ७·

## ऋतो रीङ् यि च्वौ चाकृत्सार्वधातुके ॥५६७॥

यादौ प्रत्यये च्वौ च परे ऋकारान्तस्य रीङ् स्यात्, न तु कृति सार्वधातुके च । ङः इत् ।

इति रीङि चेक्रीयते ।

इति यङन्तप्रकरणम् ।

## यङ्लुगन्तप्रकरणम् ।

५· ५· ६· ·१· ७· ·१· १·

**अनुतो धातोर्यङो लुग्वाऽच्प्रत्यये तु नित्यम् ॥ ५६८ ॥**

उदन्तभिन्नात् धातोः परस्य यङः लुक् वा स्यात्, अच्-प्रत्यये परे तु नित्यम् ।

७· ·१· ७· १·

**यङ्लुकि द्वित्वादि कर्त्तरि परस्मैपदम-**

·१· ·१·

**दादिवच्च ॥ ५६९ ॥**

यङः लुकि सति यङन्तनिमित्तकद्वित्वादिकार्य्यं तदन्तात् कर्त्तरि परस्मैपदम् अदादिवत् शप् तल्लुगूपकार्य्यञ्च स्यात् । भुवः यङः लुकि द्वित्वाभ्यासकार्य्यादौ बोभू इति धातुसंज्ञायाम् कर्त्तरि, परस्मैपदे अपि तल्लुकि च परे तिपः ( ३८७ सू॰ ) ईटि गुणे बोभवीति, द्वयोः एव अपितः अपि यङ्लुकस्तु पितः एव वा ईट् इति सिद्धान्तात् तसादेः न ईट् बोभूतः बोभुवति । बोभूयात् बोभवीतु बोभोतु । अबोभवीत् अबोभोत् । लुङि सिचः लुकि अबोभूत् ।

७· ७· ७· ·१· ·१· १:

**यङ्लुकि क्ङ्ल्लोपे च न गुणवृद्धी आर्द्ध-**

७·

**धातुके * ॥ ५७० ॥**

---

* आर्द्धधातुके इति निमित्तसप्तमी आर्द्धधातुके निमित्ते इति क्ङल्लोपः एव मन्यते यङ्लुकोऽनिमित्तत्वात्, तेन तत्र आर्द्धधातुके परे अपि गुणवृद्धी स्तः इति सिद्धान्तकौमुदी

सार्वधातुके परे यङ्लुकि क्वचित् श्लोपे च न गुणवृद्धी स्याताम्। इति गुणनिषेधे उवङि बोभुवाञ्चकार। बोभुविता। बोभूयात्। बोभुविष्यति। अबोभुविष्यत् (५५६ सू०) दीर्घं नद-नानदीति नानन्ति। नुकि उक्ते च चर-चञ्चुरीति चञ्चूर्त्ति। फल-पंफुलीति पंफुल्ति। गम-जंगमीति जंगन्ति। जंगतः। जंग्मति। जन-जंजनीति जञ्जन्ति। जाजातः। जंज्ञति। खन-चंखनीति चखन्ति। चाखातः। नौकि-वनीवञ्चीति वनीवङ्क्ति।

६॰ ६॰ १: ॰१॰ ७॰

**ऋत्वतोऽभ्यासस्य रुग्रिकौ च यङ्लुकि॥ पू ७१॥**

यङः लुकि सति ऋकारवतः धातोः अभ्यासस्य स्थाने रुग्रिकौ, चकारात् पूर्वप्राप्तः रीक् पर्य्यायेण एते स्युः। चरी-करीति चरिकरीति चर्करीति। ईडभावपक्षे चरीकर्त्ति इत्यादि। एवम् (४०३ सू०) गुणनिषेधे वृत—वरीवृतीति वरिवृतीति वर्वृतीति, पक्षे वरीवर्त्ति इत्यादि।

तिपा शपानुबन्धेन निर्दिष्टं यद्गणेन च।
यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि॥

इत्युक्तकार्य्यपञ्चकं विहाय सर्वं मूलधातोः इव कार्य्यम्, तेन ग्रहादेः क्ङिति सम्प्रसारणम् जाग्रढः। पापृछः। स्वपादेः किति एव सम्प्रसारणं सासुप्यात्। अप्रसिद्धत्वात् दिङ्मात्रम् उदाहृतम्।

इति यङ्लुगन्तप्रकरणम्।

---

ख्यातम्। भाष्ये तु बेभिदिता मर्मृजिता इति उदाहृते तत् अनुसृत्य इह यङ्लुकि गुणवृद्धिनिषेधः अभिहितः।

## नामधातुप्रकरणम् ।

आत्मनः पुत्रम् इच्छति इति वाक्ये ।

५· ५· ५· ·१·

**इच्छुसम्बन्धिन इष्यमाणात्—सुपः—क्यच्**

·१· ·१· ५ः ·१· ·१· ५ः ·१·

**वा न मान्ताव्ययेभ्यः काम्यच् तु तेभ्योऽपि ॥५७२॥**

इच्छाकर्तृसम्बन्धिनः इष्यमाणार्थकात् सुबन्तात् क्यच् वा स्यात्, न तु मान्तात् अव्ययाच्च। काम्यच् तु तेभ्यः अपि। क्यचः कचौ इतौ, काम्यचस्तु चः इत्। इति क्यचि सनाद्यन्ततया धातुत्वे।

६· ६· ·१·

**धातुप्रातिपदिकावयवस्य सुपो लुक् ॥५७३॥**

धातोः, प्रातिपदिकस्य, च अवयवस्य सुपः लुक् स्यात्। इति सुपः लुकि।

·१· ६· ७· ७· ·१· ७ः ·१· १·

**ईदस्य क्यचि च्वौ च क्यङ्क्यषोस्तु दीर्घः ॥ ५७४ ॥**

क्यचि च्वौ च परे अवर्णस्य ईत् स्यात्, क्यङ्क्यषोस्तु दीर्घः। इति अस्य ईत्त्वे कर्त्तरि लकारप्रवादौ पररूपे पुत्रीयति। मित्रीयति। धनीयति। गाम्-( ७१ सू० ) अवादेशे गव्यति। नावम्-आवादेशे नाव्यति। क्यचि क्यङि च नान्तस्य एव पदत्वम्ओकारः न अन्यस्य इति ( ६७ सू० ) न वलोपः। राजानम्-पदत्वात् नस्य लुपि तस्य ( १५८ सू० ) असिद्धत्वाभावेन अस्य ईत्त्वे राजीयति। कर्त्तारम् ( ५६६

सू० ) रीङि कर्त्रीयति। मातरम् मात्रीयति। वाचम् पद-
त्वाभावात् न कुलम् वाच्यति। समिधम् समिध्यति।

५· ६: ६: १· ·१· ७·
## हलः परयोः क्यच्क्यङोर्लोपो वार्द्धधातुके ॥ ५७५ ॥

आर्द्धधातुके परे हलः परयोः क्यच्क्यङोः लोपः वा
स्यात्। लुटि क्यलोपे (५७० सू०) न गुणः। समिधिता
समिध्यिता। धनम्-धनःकाम्यति। किम्-किंकाम्यति स्वर्-
स्वःकाम्यति।

१:· ७:·
## अशनायोदन्यधनाया बुभुक्षापिपासागर्द्धेषु ॥ ५७६ ॥

एतेषु अर्थेषु एते क्यजन्ताः निपात्यन्ते। अशनं बुभुक्षते
अशनायति। उदकं पातुम् इच्छति उदन्यति। धनम्
अतितृष्णया इच्छति धनायति।

६: ७· ·१· ७·
## अश्ववृषभयोर्मैथुनेच्छायां सुँक् क्यचि ॥५७७

एतयोः एतदर्थे सुँगागमः स्यात्, क्यचि परे। उक्तौ
इती। अश्वं यब्धुम् इच्छति अश्वस्यति। वृषम्-वृषस्यति गौः।

६:· १: ७·
## सर्वप्रातिपदिकानां सुँगसुँकौ लालसायां
·१· ·१· ·१·
## न सत्वस्य * ॥ ५७८ ॥

* क्यचि इति अनुवर्त्तनीयं, तेन क्यचि परे सुँगसुँकौ
स्तः इति व्याख्येयम्।

त्ताल्सायां सर्वप्रातिपदिकानां सुँगसुँकौ स्तः। सति निमित्ते तत्सस्य न षत्वम्। दधि-दधिस्यति दध्यस्यति। मधु-मधुस्यति मध्वस्यति।

५· ५· ५· ·१· ७· ·१·

## उपमानात्—कर्मण आधाराच्चाचारे क्यच् ॥ ५७८ ॥

उपमानात् कर्मणः आधाराच्च सुबन्तात् आचारे अर्थे क्यच् स्यात्। आचारश्च पोषणसम्माननादिरूपः व्यवहारः। पुत्रम् इव आचरति भृत्यम् पुत्रीयति पोषयति इत्यर्थः। नृपम् इव आचरति सचिवं नृपीयति सम्मानयति इत्यर्थः। मित्रम् इव आचरति शत्रुं मित्रीयति पश्यति इत्यर्थः। शिवम् इव आचरति द्विजं शिवीयति। विष्णुम् इव आचरति शिवम् ( ५०० सू० ) दीर्घं विष्णूयति। प्रासादे इव आचरति कुट्यां प्रासादीयति।

५· १: १··१· ·१·

## कर्त्तुः क्यङ्क्विपौ सलोपश्च न पदान्त-

१·

## कार्य्यम् ॥ ५८० ॥

उपमानात् कर्त्तुः सुबन्तात् क्यङ्क्विपौ स्यातां, सान्तस्य अन्त्यलोपश्च, तत्र न पदान्तकार्य्यम्।

ओजसोऽप्सरसो नित्यमन्यस्य तु विभाषया * ॥

क्यङः कङौ इतौ। ङित्त्वात् आत्मनेपदम्। क्विपस्तु सर्वे इतः। ( ५७४ सू० ) दीर्घे हंसः इव आचरति हंसायते काकः। ओजः-ओजायते। अप्सरः-अप्सरायते। पयः-पया-

* सर्वेषां नित्यसलोपे प्राप्ते व्यवस्थामाह ओजस इत्यादि।

यते पयस्यते। यश:-यशायते यशस्यते। हरितवर्णा स्त्री हरिणी वक्ष्यमाणेन पुंवद्भावे हरितायते। श्वेनी-श्वेतायते। कुमारी-कुमारायते। गुर्वी-गुरूयते। कोपधादेः निषेधात् पाचिकायते इत्यादि। क्विपि तु कृष्णः इव आचरति कृष्णति। कविः इव आचरति कवयति। श्रीः इव आचरति श्रयति। अस्य अनेकाच्त्वाभावात् लिटि न आमुः, तेन शिश्राय।

५: ७· ७· ·१· ६·
## भृशादिभ्योऽभूततद्भावे भवत्यर्थे क्यङ् हलो

१· ·१·
## लोपश्च ॥ ५८१ ॥

अभूततद्भावे भवत्यर्थे भृशादिभ्यः क्यङ् स्यात्, तस्मिन् परे च हलः लोपः। भृश शीघ्र चपल मन्द पण्डित उत्सुक सुमनस् दुर्मनस् अभिमनस् उन्मनस् रहस् शश्वत् ओजस् सुरजस्। इत्यादि भृशादि। अभृशः भृशः भवति भृशायते। सुमनसः सलोपे सुमनायते। भवत्यर्थे किम्, अभृशं भृशं करोति इत्यादौ न।

५: ·१· १· ·१·
## लोहितादिडाज्भ्यः क्यष् उभयपदञ्च ॥५८२॥

लोहितादिभ्यः डाजन्ताच्च क्यष् स्यात्। तदन्ताच्च उभयपदम्। कषौ इतौ। लोहित चरित नील फेन मन्द्र हरित दास। लोहितादि। दीर्घे लोहितायते लोहितायति। डाचः पटपटायते।

५: ७· ·१·
## कष्टकृच्छ्राभ्यां क्रमणे क्यङ्— ॥ ५८३ ॥

आभ्यां क्रमणे क्यङ् स्यात्। कष्टाय क्रमते कष्टायते पापं कर्त्तुम् उत्सहते इत्यर्थः। एवं कृच्छ्रायते।

५· ५· ७· ५· ७·

## कर्मणो रोमन्थाद्वावर्त्तने तपसश्चरणे ॥५८४॥

उद्गीर्य्य चर्वणं रोमन्थः। आवर्त्तनम् अभ्यासः। आवर्त्तने अर्थे रोमन्थात् कर्मणः, चरणे अर्थे तपसश्च कर्मणः, क्यङ् स्यात्। रोमन्थम् आवर्त्तयति रोमन्थायते। तपश्चरति तपस्यति।

५ः ५ः ७·

## कर्मभ्यां वाष्पफेनाभ्यामुद्वमने ॥ ५८५ ॥

आभ्यां कर्मभ्याम् उद्वमने अर्थे क्यङ् स्यात्। वाष्पम् उद्वमति वाष्पायते। फेनं—फेनायते।

५ः· ७·

## शब्दवैरकलहेभ्यः करणे ॥ ५८६ ॥

एभ्यः कर्मभ्यः करणे अर्थे क्यङ् स्यात्। शब्दं करोति शब्दायते। वैरं—वैरायते, कलहं-कलहायते।

५ः· ७·

## सुखादिभ्योऽनुभवे ॥ ५८७ ॥

सुखादिभ्यः कर्मभ्यः अनुभवे अर्थे क्यङ् स्यात्। सुख दुःख तृप्त कृच्छ्र अलीक प्रतीप करुण कृपण सुखादि। सुखम् अनुभवति सुखायते। दुःखम्-दुःखायते।

५· ७· ५· ७· ·१·

## पुच्छादुदसने भाण्डात् समाचयने णिङ्— * ॥ ५८८ ॥

---

* उदसनसमाचयनयोः आङौ उपसर्गौ उत्तमी विकल्पे अपि प्रयोज्यौ इति उदाहरणेन ज्ञापितम्।

आभ्यां कर्मभ्यां क्रमेण एतयोः अर्थयोः णिङ् स्यात्। अणौ इतौ। ङित्त्वात् आत्मनेपदम्। पुच्छम् उदस्यति उत्पुच्छयते। भाण्डानि समाचिनोति सम्भाण्डयते।

५ः ७ ५ ७ ७

मुण्डादिभ्यः कृतौ व्रताद्भोजने तन्निवृत्तौ

१ ५ ७

च वस्त्रात् समाच्छादने ॥ ५८९ ॥

मुण्डादिव्रतादिभ्यः एषु अर्थेषु णिङ् स्यात्। मुण्ड मिश्र श्लक्ष्ण लवण। मुण्डादि। मुण्डं करोति मुण्डयते। पयः व्रतयति भुङ्क्ते इत्यर्थः। शूद्रान्नं व्रतयति परिहरति। वस्त्रं समाच्छादयति संवस्त्रयति।

५ः ७ १ १ १

कलिहलिभ्यां कृतौ णिज—न्यलोपश्च *

॥ ५९० ॥

आभ्यां कृतौ णिच् स्यात्, अन्त्यलोपश्च। णचौ इतौ। कलनं कलिः महत् हलं हलिः। कलयति हलयति अन्त्यलोपित्वात् न सन्वद्भावः। अचकलत्। अजहलत्।

५ः १ १ ७

सत्यार्थवेदैकाजदन्तेभ्यः आपुक् च कृतौ

॥ ५९१ ॥

सत्यादिभ्यः करणार्थे णिच् स्यात्, तस्मिन् च आपुक्। उकौ इतौ। सत्यं करोति सत्यापयति। अर्थम्—अर्थापयति। वेदम्-वेदापयति। स्वम्—स्वापयति।

* अन्त्यलोपश्च इत्युक्तिः स्पष्टार्था, णिचः ङिद्भावस्य अग्रे वक्ष्यमाणत्वात्, तेन एव अस्य लोपसिद्धेः।

५ः ७

## पाशादिभ्योऽर्थविशेषे ॥ ५८९ ॥

अर्थविशेषे पाशादिभ्यः णिच् स्यात्। पाशं विमुञ्चति विपाशयति। रूपं पश्यति रूपयति। वीणया उपगायति उपवीणयति। श्लोकैः उपस्तौति उपश्लोकयति। सेनया अभियाति अभिषेणयति। लोमानि अनुमार्ष्टि अनुलोमयति। त्वचं गृह्णाति त्वचयति। वर्मणा संनह्यति संवर्मयति। वर्णं गृह्णाति वर्णयति। स्थूलादिभ्यः अपि करणार्थे णिच्, तत्र स्थूलादीनां स्थवाद्यादेशाः। यथा—

स्थूलः स्थवः स्थिरः स्थः स्याद् दूरो दव उरुर्वरः।
पृथुः प्रथः प्रियः प्रः स्यात् क्षिप्रः क्षेपो मृदुर्म्रदः॥
कृशः क्रशो बहुर्भूः स्याद्गाढः साधो गुरुर्गरः।
अन्तिकस्य भवन्नेदो दीर्घो द्राघो दृढो द्रढः॥
भृशो भ्रशो युवाल्पौ वा कन् स्यात् पक्षे युवा यवः।
क्षुद्रः क्षोदः प्रशस्यः श्रो ह्रस्वो ह्रस इतीष्यते॥
बहुलस्य भवेद्बंहो वृद्धो वर्षस्तथा भवेत्।
णिचीमनीष्ठे आदेशा इयसौ च क्रमादिमे॥
एषु डिद्वदनेकाचष्टिलोपः स्यात्ततो भवेत्।
विनो मतोश्च लुक् तेषु प्रकृतेः पूर्वरूपता *॥

स्थूलं करोति-स्थवयति। स्थिरम्-एकाजदन्तत्वात् आपुकि स्थापयति। दूरम्-दवयति इत्यादि। तनुम्-डिद्भावे टिलोपे

---

* पूर्वरूपता इति पूर्वरूपकारकतायाः अपि उपलक्षणं, तेन सीताहरणम् आचष्टे इत्यत्र सीतां हारयति इत्यादिप्रयोगः, तत्र कृतो लोपे प्रकृतिवत् कर्मकारकत्वम्। प्रपञ्चितञ्च एतत् शब्दार्थरत्नेऽस्माभिः।

तनयति। लघुम्-लघयति। आख्यानार्थे अपि सर्वनामभ्यः णिच्। तत्र विनः मतुपश्च लुकि प्रकृतेः पूर्वरूपता। स्रग्विणम् आचष्टे स्रजयति। ईशमन्तम्-ईशयति। श्रीमन्तं श्रीमतीं वा आचष्टे श्राययति।

५ः ७· ·१·

## कण्ड्वादिभ्यः स्वार्थे यक्॥ ५६३॥

कण्डूप्रभृतिभ्यः धातुनामरूपेभ्यः स्वार्थे यक् स्यात्। कः इत्। कण्ड्वादि (सि० उ० २३७ पृ०)। कण्डूयते मह्यीयते चितीयते क्षोणीयते। ईर्ष्यति ईर्ष्यते।

इति नामधातुप्रकरणम्।

---

## आत्मनेपदप्रकरणम्।

५· १· ७·

## ङित आत्मनेपदं—कर्त्तरि—॥ ५६४॥

कविकल्पद्रुमगणपाठे ङकारेतः धातोः आत्मनेपदं स्यात्, कर्त्तरि। एधङ्-एधते। शीङ्-शेते। आसङ्-आस्ते। वसङ्-वस्ते।

७· ५ः

## कर्मव्यतिहारेऽहृगतिहिंसार्थहसजल्पान्येभ्यः॥ ५६५॥

हृभिन्नगत्यर्थहिंसार्थहसजल्पान्येभ्यः सर्वेभ्यः धातुभ्यः कर्मव्यतिहारे कर्त्तरि आत्मनेपदं स्यात्। एकजातीयक्रियाकरणं कर्मव्यतिहारः। लु-व्यति लुनीते अन्यकर्तृकलवनजातीयं लवनं करोति इत्यर्थः। अस-व्यतिस्ते (५२० सू०) पक्षे व्यतिषाते व्यतिषते व्यतिषे (४४१ सू०) सलोपे व्यतिध्वे।

६। १। ७।
## अस्तेर्ह एति ॥ ५८६ ॥

एकारादौ परे अस्तेः हः स्यात्। इति हादेशे अस्तेः अल्लोपे पररूपे व्यतिहे। गत्यर्थादौ तु व्यतिगच्छन्ति व्यतिखादन्ति। व्यतिहसन्ति व्यतिजल्पन्ति। हरतेस्तु भवति एव, व्यतिहरते।

विपराभ्यां परस्मात्र जयते१रात्मनेपदम्।
परिव्यवेभ्यः क्रीणाते२स्तङ् स्यात् कर्त्तरि नेर्विशः ३।
आङो दो४ऽमुखविस्तारे प्रपथे प्रपतं५र्भवेत्।
पर्य्यन्ववाङः क्रीड़ः ६ स्यादकूजार्थात्तु ७ तङ्समः।
आङो नौतेः ८ पृच्छतं९श्च क्षमायामागमे१०र्भवेत्।
नाथते११राशिषि भवेत् जिज्ञासायान्तु शिक्षतेः १२।
हर्षात् भक्षाय वासाय लेखनार्थात् किरस्तु १३ तङ्।
अपात् कर्त्तरि सुट् तस्य चतुष्पादेऽथ पक्षिणि।
प्रतिज्ञायां, निर्णयार्थमाश्रये,ऽभीष्टबोधने।
वर्त्तमानात्तिष्ठतेस्त१४ङ् तथा कर्मविवर्जितात् १५।
देवपूजासङ्गमयोर्मैत्र्यां मार्गगतौ तथा।
उपात्तङ्१६ तिष्ठतेश्चैव मन्त्रसाधनकाच्च १७ तङ्।
तथा सम्परिभ्यस्य १८ उदं१९श्चानूर्ध्वकर्मणि।
स्वाङ्गकर्माकर्मकात् २० तङुद्भ्यां तपते२१र्भवेत्।

विजयते पराजयते। १। परिक्रीणीते एवं वेः अवाच्च। तङ् आत्मनेपदम्। २। निविशते। ३। आदत्ते मुखविस्तारे तु मुखं व्याददाति। ४। कृष्णाय प्रपते गोपी। ५। परिक्रीड़ते अवक्रीड़ते। ६। संक्रीड़ते, कूजने तु संक्रीड़ति चक्रम्। ७। आनुते। ८। आपृच्छते। ९। कालम् आगमयते सहते म

स्वरते इत्यर्थः। १०। मोक्षं नाथते मोक्षः मे भूयात् इति प्रार्थयते इत्यर्थः। ११। शास्त्रं शिक्षते ज्ञातुम् इच्छति इत्यर्थः। १२। हर्षेण भक्षार्थी वासार्थी वा वृषः श्वा कुक्कुटः वा अपस्किरते: अन्यत्र अपकिरति। १३। शब्दं नित्यम् आतिष्ठते प्रतिजानीते इत्यर्थः। संशय्य कर्णादिषु तिष्ठते यः कर्णादीन् निर्णेतृत्वेन आश्रयति इत्यर्थः। रामाय तिष्ठते सीता स्वाभिप्रायं प्रकाशयति इत्यर्थः। १४। तिष्ठते। १५। विष्णुम् उपतिष्ठते पूजयति इत्यर्थः। गङ्गा यमुनाम् उपतिष्ठते तया सङ्गच्छते इत्यर्थः। साधुम् उपतिष्ठते मैत्रीकरोति इत्यर्थः। पन्थाः काशीम् उपतिष्ठते प्राप्नोति इत्यर्थः। १६। गायत्र्या सूर्य्यम् उपतिष्ठते। १७। सन्तिष्ठते प्रतिष्ठते परितिष्ठते। १८। ग्रामात् उत्तिष्ठते उत्पद्यते इत्यर्थः। ऊर्द्ध्वं कर्म्मणि तु आसनात् उत्तिष्ठति। १९। उत्तपते वितपते ग्रीष्मम्। २०। उत्तपते वितपते वा। २१।

हनो २२ यम२३स्तथाभूतादाङः कर्त्तरि तङ् भवेत्।
सम: कर्माविवक्षायां गम्य२४र्त्ति २५श्रु२६दृशो २७ भवेत्।
उपसर्गादस्यते२८स्तङूहते२९श्च विभाषया।
निसंव्युपेभ्यो ह्वयतेः ३० स्पर्द्धायामाङ ३१ एव तङ्।
सूचने, भर्त्सने, दुष्टे सहसैव प्रवर्त्तने।
सतो गुणान्तराधाने, सेवायां विनियोजने।
कथने च कृञ३२स्तङ् स्यादधेस्तु ३३ सहने तथा।
वेः शब्दकर्मणस्तस्मात् ३४ कर्मणा रहिताच्च ३५ तङ्।
शास्त्रार्थवेदनेनैव सम्माने तत्त्वनिश्चये।
उत्क्षेपणे प्रार्थने च ऋणनिर्यातने तथा।
भृतिकप्रापणे भृत्या व्यये चापनये तथा।
अमूर्त्ते कर्तृगे कर्मण्येषु तङ् नयते ३६ भवेत्।

णंर: आहते, पादम् आयच्छते आहते आयच्छते वा। २२। २३। सङ्गच्छते। २४। समृच्छते। २५। संशृणुते। २६। सम्पश्यते। २७। निरस्यते निरस्यति। २८। समुहते समुहति। २९। निह्वयते संह्वयते। ३०। कृष्णः कंसम् आह्वयते, अन्यत्र आह्वयति। ३१। उत्कुरुते हिंसाद्यनिष्टरूपम् अपकारं सूचयति इत्यर्थः। शत्रून् अपकुरुते भर्त्सयति इत्यर्थः। परदारान् प्रकुरुते सहसैव तेषु प्रवर्त्तते इत्यर्थः। स्वर्णस्य उपस्कुरुते कुण्डलादिरूपान्तरं प्रापयति इत्यर्थः। अत्र कर्मणि षष्ठी। साधून् उपकुरुते सेवते इत्यर्थः। शतं* प्रकुरुते विनियुङ्क्ते इत्यर्थः। गाथाः प्रकुरुते कथयति इत्यर्थः। ३२। शत्रून् अधिकुरुते सहते इत्यर्थः। ३३। शब्दं विकुरुते। ३४। छात्रा विकुर्वन्ते विकारं लभन्ते। ३५। गुरुम् उपनयते शास्त्रज्ञानलाभेन सम्मानयति। शास्त्रम् उपनयते तत्त्वेन निश्चिनोति इत्यर्थः। दण्डम् उन्नयते उत्क्षिपति। राजानम् उन्नयते प्रार्थयते। राजकरम् उन्नयति विगणय्य शोधयति इत्यर्थः। भृत्यान् उन्नयते भृतिदानेन अन्तिकं प्रापयति इत्यर्थः। धनम् उन्नयते व्ययित करोति इत्यर्थः। शिष्यम् उपनयते उपनयनसंस्कारेण अन्तिकस्थं करोति इत्यर्थः। क्रोधं विनयते शमयति इत्यर्थः। कर्त्तृगे किम्, गुरोः क्रोधं विनयति। अमूर्त्ते किम्, व्रण विनयति। ३६।

उत्साहे चाप्रतिहतौ हृद्धौ च क्रमतेस्तु ३७ तङ्।
परोपाभ्याञ्चेतरार्थे ३८ तङाङो ३९ ज्योतिरुद्गमे।

* कर्मणि षष्ठी वक्ष्यमाणेन ज्ञः प्रतियत्ने इति ८८७ सूत्रेण।

प्रोपाभ्यां तङ् ४० समारम्भे वेः पादचलनार्थकात् ४१।
विभाषया क्रमेस्तङ् स्यादुपसर्गविवर्जितात् ४२।
निह्नवे ज्ञो४३ऽकर्मकाच्च ४४ संप्रतिभ्यामचिन्तने ४५।
यत्ने च ज्ञानपूर्वोक्तौ विमतावुपसान्त्वने।
प्रार्थने च वदे४६र्व्यक्ते सम्भूयोच्चारणे ४७ तु तङ्।
अनोरकर्मका ४८ द्व्यक्ते सहोक्ते विमते तु वा ४९।
अवाद्गिरः ५० कर्त्तरि तङ् प्रतिज्ञायां सम५१स्तथा।
उदश्चरः ५२ कर्मयुक्तात् समो ५३ युक्तात् तृतीयया।
तृतीया चेच्चतुर्थ्यर्थे दाणः संपूर्वकात्तु ५४ तङ्।
उपपूर्वाद्विवाहार्थे यम५५स्तङ् कर्त्तरीष्यते *।

अध्ययनाय क्रमते उत्सहते इत्यर्थः। शास्त्रे बुद्धिः क्रमते न प्रतिहन्यते इत्यर्थः। शास्त्राणि क्रमन्ते स्फुरन्ति इत्यर्थः। ३७। एवं पराक्रमते उपक्रमते, अर्थस्तु तदन्यः ३८। सूर्य्यः आक्रमते। ३९। प्रक्रमते उपक्रमते आरभते इत्यर्थः। ४०। विक्रमते वाहः पद्भ्यां चलति इत्यर्थः। ४१। क्रमते क्रामति। ४२। शतम् अपजानीते अपलपति इत्यर्थः। ४३। सर्पिषा जानीते प्रवर्त्तते इत्यर्थः। ४४। सञ्जानीते प्रतिजानीते, चिन्तने तु सञ्जानाति स्मरति इत्यर्थः। ४५। चैत्रे वदते यतते इत्यर्थः। शास्त्रे वदते ज्ञानपूर्वं वदति। विमतौ, क्षेत्रे विवदन्ते। भृत्यान् उपवदते सान्त्वयति इत्यर्थः। नृपम् उपवदते प्रार्थयते इत्यर्थः। ४६। संप्रवदन्ते विप्राः सम्भूय व्यक्तं वदन्ति इत्यर्थः। ४७। अनुवदते। ४८। विप्रवदन्ते विप्रवदन्ति वा वैद्याः विप्राः वा व्यक्तं सम्भूय विरुद्धं वदन्ति इत्यर्थः। ४९।

* तृतीया चेत् इति अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीयेति २, ३, २३ सूत्रस्थवार्त्तिकेन इति शेषः।

अवगिरति। ५० । संगिरते प्रतिजानीते इत्यर्थः। ५१ । धर्मम् उच्चरते उल्लङ्घ्य गच्छति, अन्यत्र उच्चरति उपरिष्टात् गच्छति इत्यर्थः। ५२। यानेन सञ्चरते। ५३। वेश्यया संयच्छते अभीष्टम् वेश्यायै ददाति इत्यर्थः। ५४। भार्य्याम् उपयच्छते। ५५। तङ् ज्ञा, ५६ श्रु५७स्मृ५८ पश्यते५९श्च सनन्तात्कर्त्तरीष्यते।

अनोर्जिज्ञासतेर्नैव प्रत्याङ्भ्याञ्च तथा श्रुवः।
स्वराद्यन्तोपसर्गात्तङ् युजे६०र्न यज्ञपात्रके *।
अपालने भुजे६१स्तङ् स्यात् स्नुवः ६२ संपूर्वकात्तु तङ्।
अस्मृत्यर्थस्य धातोर्यत् कर्माण्यन्तस्य चेद्भवेत्।
ण्यन्तस्य कर्त्ता स, तदा तस्मात् ण्यन्तात् ६३ भवेत्तु तङ्।
णिजन्ताच्च गृधे६४र्वञ्चेः ६५ प्रतारार्थे तु तङ् भवेत्।
कविकल्पद्रुमग्रन्थे चिह्नेन पठितास्तु ये।
णिजन्ताश्चोभयपदास्तेभ्यस्तङ् ६६ कर्त्तृगे फले (उद्देश्ये)।
अपाद्वदो ६७ यमो६८ऽग्रन्थे समुदाङ्भ्यस्तथैव तङ्।
उपसर्गाद्दते ज्ञ६९श्च तथा तङ् कर्त्तृगे फले (उद्देश्ये)।
समीपस्थपदेनैव कर्त्तृगस्य फलस्य (उद्देश्यस्य) चेत्।
द्योतनं स्यात्तदा तत्र तङ् कर्त्तरि ७० विभाषया।

जिज्ञासते।५६। शुश्रूषते। ५७। सुस्मर्षते ५८। दिदृक्षते। ५९। अनोर्यस्तु अनुजिज्ञासति। तथा प्रतिशुश्रूषति आशुश्रूषति स्वराद्युपसर्गात् उद्युङ्क्ते। स्वरान्तोपसर्गात् प्रयुङ्क्ते नियुङ्क्ते। यज्ञपात्रकर्मकात्तु न। ६०। अन्नं भुङ्क्ते सुखं भुङ्क्ते। अपालने किं, भूमिं भुनक्ति। ६१। संस्नुते ग्रसम्। ६२। दर्शयते नृपः सेवकान् अणिकर्म चेत् न ण्यन्तस्य कर्त्ता तदा तु भृत्यान् दर्शयति नृपं सचिवः।६३। वञ्चयते ६४ गर्ध-

* स्वरादेः स्वरान्ताच्च उपसर्गात्, तेन दुर्निभ्यां न।

श्यते ६५ अतं प्रतारयति इत्यर्थः। यजति यजते। अत्र क्रियायाः फले (उद्देश्ये) कर्त्तृगामिनि यजते इत्येव। ६६। एवं नयते हरते कुरुते इत्यादि। न्यायम् अपवदते। ६७। व्रीहीन् संयच्छते भारम् उद्यच्छते। वस्त्रम् आयच्छते ग्रन्थं तु वेदम् उद्यच्छति। ६८। जानीते ज्ञातुं यतते इत्यर्थः। ६९। स्वं यज्ञं यजति यजते वा। स्वर्गकामः यजति यजते ७० व्रा॰।

इति आत्मनेपदप्रकरणम्।

---

## परस्मैपदप्रकरणम्।

५॰ १॰ ७॰

### ञित उभयपदं कर्त्तरि * ॥ ५९७ ॥

ञकारेतः धातोः उभयपदं स्यात् कर्त्तृवाच्ये अर्मात विशेषे। नयति नयते।

५ः ५॰ १॰

### जिट्ङिड्भ्यामन्यस्मात् परस्मैपदम् ॥५९८॥

जितः ङितश्च अन्यस्मात् धातोः परस्मैपदं स्यात्, कर्त्तरि वाच्ये। भू-भवति। चित-चेतति।

परानुभ्यां करोतेः १ स्यादतिप्रत्यभितः क्षिपः २।
परेर्मृषः ३ प्राद्वहः ४ श्च व्याङ्परिभ्यो रमेः ५ स्तथा।
उपाद्रमेः ६ विकल्पेन परस्मैपदमिष्यते।
बुधेर्युधेर्नशेः एर्णन्तात् प्रवर्तद्रवतेरिङः।

* ञितः इति णिजन्तस्य अपि उपलक्षणम् १९२ पृ॰ १३ पं का॰ णिजन्तेभ्यः उभयपदविधानात्।

स्रवतेश्च जनेश्चैव परस्मैपदमन्वयात्। ७,—१४
अदिं विना भोजनार्थात् १५ चलनार्थाच्च१६पण्डिताः।
अणावकर्मकात्प्राणिकर्त्तृकाच्च णिजन्ततः।
परस्मैपदमिच्छन्ति कर्त्तृगेऽपि क्रियाफले १७।
पिबतिं नृत्यतिं हित्वा दमिमायममायमम्।
वचिं परिमुहिं मुक्त्वा वदतिं वसतिं तथा॥

परा करोति अनुकरोति। १। अतिक्षिपति प्रतिक्षिपति अभिक्षिपति। २। परिमृषति। ३। प्रवहति। ४। विरमति आरमति। ५। उपरमति उपरमते वा। ६। बोधयति। ७। योधयति। ८। नाशयति। ९। प्रावयति। १०। द्रावयति। ११। अध्यापयति। १२। स्रावयति। १३। जनयति। १४। भोजयति। १५। चलयति। १६। शाययति बालं माता। १७। प्राणिकर्त्तृकात् किम्, शोषयते धान्यं कालः। अदेस्तु आदयते। एवं पाययते नर्त्तयते दमयते आयामयते आयामयते। वाचयते परिमोहयते वादयते वासयते। अत्र चलनार्थतया भोजनार्थतया अकर्मकतया वा फलस्य कर्त्तृगत्वेन प्राप्तौ अपवादः *।

इति परस्मैपदप्रक्रिया।

## भावकर्मप्रकरणम्।

५· ·१· ७:
### धातोस्तङ् भावकर्मणोः— ॥ ५८९ ॥

भावे कर्मणि च वाच्ये धातोः तङ् स्यात्।

---

* प्राप्तौ परस्मैपदप्राप्तौ, अपवादः विनयाद्युदासः।

७· ·१·
## सार्वधातुके यक्॥ ६०० ॥

भावकर्मणोः सार्वधातुके परे धातोः यक् स्यात्। कर्त्तुः इत्।

७· ६· १·
## भावे तङ आद्यवचनम् ॥ ६०१ ॥

भावे वाच्ये तङः आद्यवचनम् एव प्रयुज्यते। भावः धात्वर्थः। स च धातुना बोधितः अपि तङा अनूद्यते एकः द्वौ इत्यादौ प्रथमायाः इव अनुवादकत्वे अपि पदसाधुत्वार्थम् एव तस्य प्रयोगः। तत्कर्त्तुश्च प्रत्ययेनाभिहितत्वाभावेन तद्वाचकात् तृतीया। त्वया मया अन्यैः वा भूयते। भूयेत। भूयताम्। अभूयत। लुङि तु अड़ागमे।

·१· ७: ·७·
## चिण् भावकर्मणोस्तनि ॥ ६०२ ॥

भावकर्मवाचिनि तनि परे धातोः चिण् स्यात्। चणौ इतौ। इति चिणि वृद्धौ आवादेशे च (४६२ सू०) तनः लुपि अभावि। लिटि बभूवे। लुटि तु।

७· ५:·
## उपदेशेऽज्झनग्रहदृशिभ्यः स्यसिजाशीर्लिङ्-
६:· ·१· ·१· ·१· ·१ ७:
## लुटामिट् वा चिण्वच्च भावकर्मणोः ॥ ६०३ ॥

उपदेशे अजन्तात् हनादिभ्यश्च भावकर्मणः गम्यमानयोः स्यादीनां स्थाने इट् वा स्यात्, स च चिण्वत्। इति इटि चिण्वद्भावात् वृद्धौ भाविता। पक्षे वलादिनिमित्ते इटि

भविता। आशीर्लिङि भाविषीष्ट भविषीष्ट। लृटि भाविष्यते भविष्यते। लृङि अभाविष्यत अभविष्यत। अनुभवतेश्च सकर्मकत्वात् ( ३४१ सू० ) कर्मणि लकारः, तेन तिङा उक्तत्वात् कर्मणि प्रथमा कर्त्तुश्च अनुक्तत्वात् तृतीया अनुभूयते आनन्दः जनेन त्वया मया वा। अनुभूयेते सुखदुःखे। अनुभूयन्ते विषयाः। अन्वभावि। अन्वभाविषाताम् अन्वभविषाताम्। अन्वभाविषत अन्वभविषत। भावेस्तु णिलोपे भाव्यते। अभावि। चिण्वत्पक्षे णिलोपे अभाविषाताम् ( ५३५ सू० ) इटि णिलोपाभावे अभावयिषाताम्। भावयाञ्चक्रे भावयाम्बभूवे भावयामासे इत्यादि। भाविता भावयिता। भावयिषीष्ट भाविषीष्ट। भावयिष्यते भाविष्यते। सनन्तात् तु बुभूष्यते। यङन्तात् बोभूय्यते। यङ्लुगन्तात् बोभूयते। स्तु-स्तूयते अस्तावि अस्ताविषाताम् अस्तोषाताम्। ऋ-( ४८६ सू० ) गुणे अर्य्यते। आरि-आरिता अर्त्ता। स्मृ—स्मर्य्यते स्मारिता स्मर्त्ता। कृञ् ( ४१२ सू० ) रिङि क्रियते अकारि कारिता कर्त्ता। सृ-स्रियते असारि सारिता सर्त्ता। हन्यते अघानि अवधि। अघानिषाताम् अवधिषाताम् अहसाताम्। घानिता हन्ता। सम्प्रसारणे गृह्यते अग्राहि ग्राहिता ग्रहीता। दृश्यते अदर्शि। अदर्शिषाताम् अदृक्षाताम्। दर्शिता द्रष्टा। ( ४०८ सू० ) नलोपे मन्थ-मथ्यते। इदितस्तु न, वदि-वन्द्यते। यज-इज्यते। वच-उच्यते। स्वप-सुप्यते। ओङः ( ५९६ सू० ) अयङि शय्यते। जनः ४०४ सू० ) वा ङा जायते जन्यते, खायते खन्यते। तनोतेः अपि वा ङाम् इच्छन्ति। तायते तन्यते। ( ४७५ सू० ) ईत्त्वे दा-दीयते धा-धीयते मा-मीयते स्था—स्थीयते गा-गीयते पा-पीयते। लुङि तु।

६· ·१· ७· ७· ७· ७· ·१·

## आतो युँक् चिण्णि कृति ञिति णिति च ॥६०४॥

आदन्तानां युँगागमः स्यात् चिण्णि, कृति ञिति णिति च परे। उकौ इतौ। इति युकि अदायि। अदायिषाताम् (४७३ सू०) इत्त्वे अदिषाताम् अधायि अधायिषाताम् अधिषाताम् इत्यादि। शमेः णिचि णिलोपे शम्यते। लुङि (५२७ सू०) वा ह्रस्वे अशामि अशमि। शामिता शमिता शमयिता। ण्यन्तत्वाभावे शम्यते (४६३ सू०) वृद्धिनिषेधे अशमि। नमेस्तु अनिट्कत्वात् वृद्धौ अनामि। कामादेस्तु अकामि अचामि अवामि।

६· ७· १· ·१·

## भञ्जेश्चिण्णि नलोपो वा ॥ ६०५ ॥

चिण्णि परे भञ्जेः नलोपः वा स्यात्। अभाजि अभञ्जि *।

६· ·१· ८· ·१· ५· ·१· २·

## लभेर्नुँम् चिणमुलोर्वोपसर्गात् तु नित्यम् ॥६०६॥

चिण्णि णमुलि च परे लभेः नुँमागमः वा स्यात्, उपसर्गात् तु नित्यम्। अलाभि अलम्भि। प्रालम्भि, उपालम्भि। द्विकर्मकाणां तु।

गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम्।
बुद्धिभक्षार्थयोः शब्दकर्मणाञ्च निजेच्छया।
प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः।

दुह्यादयः कारके वक्ष्यन्ते। गौः दुह्यते पयांसि। राजा

---

* नलुपः इव नलोपस्य अपि पूर्वं सिद्धत्वोक्त्या अभाजि इत्यत्र उपधाकारस्य वृद्धिः, सति तु असिद्धत्वे अकारस्य उपधाभूतत्वाभावात् न वृद्धिः।

अर्थं याचते। बालः ग्रामं नीयते ह्रियते कृष्यते उह्यते वा। भोज्यते विप्रम् ओदनः, ओदनं विप्रः वा। बोध्यते बालं धर्मः, धर्मं वा बालः। अन्येषां तु बालः घटं दर्श्यते कार्य्यते इत्यादि। अकर्मकाणाम् अपि कालदेशादिकर्मणां कर्मणि भावे च लकारः इष्यते। मासः मासं वा स्थीयते जनेन।

इति भावकर्मार्थतिङ्प्रकरणम्।

## कर्मकर्त्तृप्रकरणम्।

उत्पत्तिमात्रे कर्त्तृत्वं सर्वत्रैवास्ति कारके।

इत्युक्तादिशा कर्मणः यत्र कर्त्तृत्वविवक्षा तत्र कार्य्यभेदम् आह।

**कर्मस्थया क्रियया तुल्यक्रियः कर्त्ता कर्मवत् न त्वपचदुहसकर्मकेभ्यः॥ ६०७॥**

कर्मस्थया क्रियया समानाधिकरणव्यापारः कर्त्ता कर्मवत् लकाररूपं कार्य्यं लभते, पचदुहभिन्नसकर्मकेभ्यस्तु न। धातोः अर्थः क्रिया, सा च फलं व्यापारश्च, तत्र फलस्य कर्मस्थत्वं व्यापारस्य कर्त्तृस्थत्वम्। तथाच कर्मस्थफलेन समानाधिकरणः व्यापारः यत्र धात्वर्थः विवक्ष्यते तत्र कर्मकर्त्तृव्यवहारः। तत्र धातुविशेषव्यवस्था।

कर्मस्थः पचतेर्भावः कर्मस्थाश्च भिदादयः।

कर्त्तृस्थो बुध्यतेर्भावः कर्त्तृस्थाश्च गमादयः॥

**कार्य्यञ्च यक् चिण् चिण्वदिट् तङ् च इति।** तत्र कर्मस्थभावके पच्यते ओदनः। भिद्यते काष्ठम्। अपाचि।

अभेदि । कर्त्तृस्थभावके तु गच्छति ग्रामः । जानाति वेदः इत्यादौ कर्त्तृवत् कार्य्यम् इति भेदः ।

·१·  ५·  १·  ७·  ५··१·

## न दुहस्नुनमो यक्चिणौ कर्मकर्त्तरि रुधस्तु

·१·  ·१·

## न चिण्— ॥ ६०८ ॥

कर्मकर्त्तरि वाच्ये एभ्यः यक्चिणौ न स्तः, रुधस्तु न चिण् । इति यकः निषेधे दुहः अपि तलुकि च गौः पयो दुग्धे । अदुग्ध । प्रस्नुते गौः । नमते दण्डः ।

५·  ५··१·  ७··१·  ·१·  ७·

## अचो दुहश्च कर्मकर्त्तरि वा चिण् तनि ॥६०९॥

कर्मकर्त्तरि वाच्ये तनि परे अजन्तात् दुहश्च चिण् वा स्यात् । दुहेः पूर्व्वेण निषेधे विकल्पः । अकारि अकृत । अदोहि अदुग्ध ।

५ः·  ५·

## भूषाकर्मकिरादिसनन्तेभ्य आत्मनेपदाद-

१· १·

## न्यन्न ॥ ६१० ॥

भूषावाचिनः किरादिभ्यः सनन्तेभ्यश्च आत्मनेपदात् अन्यत् न भवति । अलं कुरुते कन्या अलम् अकुरुत । अवकिरते हस्ती । किरादि (सि० उ० १५४ पृ० ) द्रष्टव्यः । चिकीर्षते घटः । इच्छायाः कर्त्तृस्थत्वे अपि उत्पादनार्थककरोतेः उत्पत्तिरूपफलेन एव कर्मस्थत्वात् तदुत्तरसनः अपि तदनुसारेण एव पदव्यवस्थावत् कर्मस्थत्वम् इति ।

इति कर्मकर्तृप्रकरणम् ।

## लकारार्थप्रकरणम् ।

३· १·: १·: १·:

**तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः ॥६११॥**

लडादीनां त्रीणि त्रीणि क्रमेण प्रथममध्यमोत्तमसंज्ञानि स्युः ।

७· ·१· ७· ७·

**अप्रयुज्यमानेऽपि तिङर्थकारकाभिन्ने युष्मदि**

१· ७· १· ७· ·१· १·

**मध्यमोऽस्मदि उत्तमः शेषे तु प्रथमः तत्संख्या-**

३· ·१·

**भेदेनैकवचनादि * ॥ ६१२ ॥**

तिङ्वाच्यकारकाभिन्ने अप्रयुज्यमाने अपि युष्मदि मध्यमः, अस्मदि उत्तमः, युष्मदस्मद्भिन्ने तु प्रथमः स्यात् । तिङर्थकर्त्रभिन्नयुष्मदादिसंख्यानुसारेण एकवचनद्विवचनबहुवचनप्रयोगः । त्वं भवसि युवां भवथः यूयं भवथ । अहं भवामि आवां भवावः वयं भवामः । स भवति तौ भवतः ते भवन्तु । एवं तिङर्थकर्माभिन्नयुष्मदादिसंख्याभेदेन त्वं दृश्यसे युवां दृश्येथे यूयं दृश्यध्वे । अहं दृश्ये आवां दृश्यावहे वयं दृश्यामहे । स दृश्यते तौ दृश्येते ते दृश्यन्ते । एवं विधिलिङादौ अपि ।

७· ·१·

**वर्त्तमाने लट्— ॥ ६१३ ॥**

* शेषतियोगिनः अनभिधाने शेषे इति वक्तुम् अशक्यतया व्युत्क्रमेण अपि मध्यमादेः प्रथमम् उक्तिः ।

वर्त्तमानक्रियावाचिधातोः लट् स्यात्। वर्त्तमानस्तु आरब्धापरिसमाप्तः कालः। स च प्रयोगसमानकालः एव भवति।

७· ३: ७·

## भविष्यति यावत्पुराभ्यां योगे ॥ ६१४ ॥

यावत्पुराशब्दाभ्यां योगे भविष्यति लट् स्यात्। यावत् पुरा वा भवति भविष्यति इत्यर्थः।

७· ५· ·१· ३·

## अनद्यतनभूते धातोर्लट् स्मेन ॥ ६१५ ॥

स्मशब्दयोगे अनद्यतनातीतार्थे धातोः लट् स्यात्। हन्ति स्म रावणं रामः जघान इत्यर्थः। रावणहननम् अनद्यतनातीतम्। गतरात्रिशेषाद्युक्तवर्त्तमानदिनम् अद्यतनम्।

३· ७· १: ·१· ·१· ·१· ३·

## पुराशब्देनातीते लुङ्लटौ वा न तु स्मेन ॥ ६१६ ॥

पुरायोगे अतीते काले लुङ्लटौ वा स्याताम्, न तु स्मशब्दप्रयोगे। पक्षे यथाप्राप्तम्। वसन्ति इह पुरा छात्राः अवात्सुः वा, पक्षे अवसन् ऊषुः वा।

३: ७· ·१· ·१·

## कदाकर्हिभ्यां भविष्यति—वा—लट्— ॥ ६१७ ॥

आभ्यां योगे भविष्यति लट् स्यात्। कदा कर्हि वा भुङ्क्ते। पक्षे भोक्ष्यते भोक्ता वा।

७·

## प्रैष्यादिलक्षणे ॥ ६१८ ॥

प्रैष्यादिः लक्ष्यते येन तस्मिन् अर्थे वर्त्तमानात् धातोः

भविष्यति लट् वा स्यात्। कृष्णः चेत् भुङ्क्ते त्वं गाः चारयसि चारयिष्यसि वा। भावि कृष्णभोजनं गोचारणप्रवर्त्तकम्।

७· ७· ७· ·१·

## वर्त्तमानसामीप्ये भूते भविष्यति—च ॥६१९॥

वर्त्तमानकालासन्ने भूते भविष्यति च लट् वा स्यात्। कदा आगतः असि, अयम् आगच्छामि अयम् आगमं वा। कदा गमिष्यसि एष गच्छामि गमिष्यामि वा।

७· ·१· ·१· ·१·

## आशंसायां भूतवत् वर्त्तमानवच्च ॥६२०॥

भविष्यति काले भूतवत् वर्त्तमानवत् च प्रत्ययाः वा स्युः आशंसायाम्। देवः चेत् अवर्षीत् वर्षति वा, पक्षे वर्षिष्यति। धान्यम् अभवत् भवति वा, पक्षे भविष्यति।

७· ७· ·१·

## आशंसावचने उपपदे लिङ् ॥ ६२१ ॥

आशंसावाचिनि उपपदे भविष्यति लिङ् स्यात्। पूर्व्वसूत्रापवादः। गुरुः चेत् आयात् आशंसे अधीयीय।

३ः ७· ·१· ७·

## जात्वपिभ्यां सर्व्वकाले—लट् गर्हायाम् ॥६२२॥

आभ्यां योगे सर्व्वस्मिन् काले लट् स्यात् गर्हायाम्। जातु वेश्यां गच्छसि अपि जायां त्यजसि गर्हितम् एतत्।

३· १ः ·१·

## कथमा विधिलिङ्लटौ वा ॥ ६२३ ॥

कथम्शब्दयोगे सर्व्वस्मिन् काले विधिलिङ्लटौ वा स्तः गर्हायाम्। कथं धर्मं त्यजेः त्यजसि वा, पक्षे कालत्रयलकाराः।

३:· १:
## किंकतरकतमैर्विधिलिङ्‌लृटौ— ॥६२४॥

एभिः योगे सदा विधिलिङ्लृटौ स्तः गर्हायाम्। कः कतरः कतमः वा हरिं निन्देत् निन्दिष्यति वा।

७: ३·
## असम्भावनामर्षयोः—शब्दमात्रेण ॥६२५॥

शब्दमात्रयोगे सदा विधिलिङ्लृटौ स्तः असम्भावनायाम् अक्षमायाञ्च। न सम्भावयामि न मर्षये वा। भवान् हरिं निन्देत् निन्दिष्यति वा।

३:· ·१·
## जातुयदायद्यत्रयच्चयदिभिर्विधिलिङ्— ॥६२६॥

एभिः योगे सदा विधिलिङ् स्यात् असम्भावनामर्षयोः। जातु, यदा, यद्, यत्र, यच्च, यदि, वा तादृशः हरिं निन्देत् न सम्भावयामि न मर्षये वा।

३: ७· ७· ·१·
## यच्चयत्राभ्यां गर्हायां चित्रीकरणे च ॥६२७॥

आभ्यां योगे गर्हायां चित्रीकरणे च सदा विधिलिङ् स्यात्। यच्च यत्र वा त्वं शूद्रं याजयेः गर्हितम् एतत् आश्चर्यम् एतत् इति वा।

७· ·१· ·१·
## कामप्रवेदने लोट् च ॥ ६२८ ॥

प्रयोक्तृकामवेदनार्थकशब्दयोगे सदा लोट्, चात् विधिलिङ् स्यात्। इच्छामि भुञ्जीत भुङ्क्तां वा भवान्। कामप्रवेदने किम्, इच्छन् भुङ्क्ते इत्यादौ न।

३: १

## समानकर्त्तृकेच्छार्थैर्विधिलिङ् — ॥६२९॥

समानकर्त्तृकेच्छार्थैः योगे सदा धातोः विधिलिङ् स्यात्। भुञ्जीयेति इच्छति।

५: ७ १

## इच्छार्थेभ्यो वर्त्तमाने वा ॥ ६३० ॥

इच्छार्थकधातुभ्यः वर्त्तमाने विधिलिङ् स्यात्। यः इच्छेत् इच्छति वा।

७: १:

## प्रवर्त्तनसंप्रश्नप्रार्थनेषु विधिलिङ्लोटौ ॥६३१॥

एषु अर्थेषु धातोः विधिलिङ् लोट् च स्यात्। भृत्यादेः निकृष्टस्य प्रवर्त्तनं प्रेरणम्। आवश्यके श्राद्धभोजनादौ प्रवर्त्तनं निमन्त्रणम्। कामचारानुज्ञा आमन्त्रणम्। सत्कारपूर्वकप्रवर्त्तनम् अध्येषणम्। एतत् चतुर्विधं प्रवर्त्तनम्। यथा व्रजेत। इह भुञ्जीत भवान्। इह आसीत भवान्। पुत्रम् अध्यापयेत् भवान्। संप्रश्ने किं, भो वेदम् अधीयीय। प्रार्थने भो भोजनं लभेय। एवं लोट्।

७ ७ १ १

## कार्य्यकारणभावे भविष्यति लिङ् वा ॥६३२॥

धात्वर्थयोः द्वयोः कार्य्यकारणभावे गम्यमाने धातुभ्यां विधिलिङ् स्यात्। विद्याम् अभ्यस्येत् चेत् सुखं यायात्। पक्षे भविष्यत्कालप्रयोगः।

७ १ ७

## सम्भावने लिङ् सामर्थ्ये ॥ ६३३ ॥

सामर्थ्ये द्योत्ये सम्भावने विधिलिङ् स्यात्। अपि गिरिं शिरसा भिन्द्यात्।

७· ७· ·१·

**अर्हे शक्तौ च ॥ ६३४ ॥**

अर्हे शक्तौ च धातोः विधिलिङ् स्यात् । कन्यां वहेः । भारं वहेः ।

७· ७ ·१·

**अनद्यतने भूते लङ् ॥ ६३५ ॥**

अनद्यतनभूतार्थे धातोः लङ् स्यात् । अभवत् । अपचत् । परोक्षे लोकविज्ञाते प्रयोक्तुः दर्शनयोग्ये एव अयम् इष्यते इति भाष्यम्, तदुदाहरणञ्च तत्र एव दर्शितम् । यवनाः साकेतम् अरुन्धन् । तद्रीत्या अद्य इंलण्डीयाः पञ्चनददेशान् अजयन् इति उदाहरणम् ।

३· ७· १:

**मास्मेन सर्वकाले लङ्लुङौ ॥ ६३६ ॥**

मास्मशब्दयोगे धातोः सर्वकाले लङ्लुङौ स्तः । मास्म भवत् दुःखम् मास्म भूत् शोकः ।

७· ·१·

**भूतमात्रे लुङ् — ॥ ६३७ ॥**

भूतसामान्ये धातोः लुङ् स्यात् । अभूत् ।

३· ७·

**माङा सर्वकाले ॥ ६३८ ॥**

माङ्शब्दयोगे सर्वकाले लुङ् स्यात् । मा भूत् दुःखम् ।

७· ·१·

**परोक्षानद्यतने लिट् — ॥ ६३९ ॥**

प्रयोक्तुः अपरोक्षे अनद्यतने भूते धातोः लिट् स्यात् । सः जगाद । त्वं जगदिथ । मत्ततादिना स्वव्यापाराप्रत्यक्षे

एव अहं जगाम इत्यादिप्रयोगः। सुप्ताहं विललाप किम् इत्यादि।

७· ७· ·१·

भविष्यत्यनद्यतने लुट्॥ ६४० ॥

अनद्यतने भविष्यति धातोः लुट् स्यात्। श्वः भविता।

·१· ७·

आशीर्लिङाशिषि ॥ ६४१ ॥

आशिषि अर्थे धातोः आशीर्लिङ् स्यात्। सुखं ते भूयात्।

७· ·१·

भविष्यत्सामान्ये लृट्— ॥ ६४२ ॥

भविष्यत्सामान्ये धातोः लृट् स्यात्। अद्य श्वः वा भाविनि वस्तुनि भविष्यति इत्येव प्रयोगः।

३ः· ७· ·१·

स्मरणार्थैरतीते लृट्॥ ६४३ ॥

स्मरणार्थकशब्दयोगे अतीते लृट् स्यात्। स्मरसि शास्त्रम् अध्येष्यसि।

६ः ७· ७· ·१·

क्रिययोरनिष्पत्तौ कार्य्यकारणभावे लृङ्॥६४४॥

क्रिययोः अनिष्पत्तौ हेतुहेतुमद्भावे गम्ये धातोः लृङ् स्यात्। ज्ञानं चेत् अभविष्यत् सुखम् अभविष्यत्। ज्ञानानिष्पत्तौ सुखानिष्पत्तिः अत्र गम्यते।

६ः ·१· ७·

तुह्योस्तातङाशिषि ॥ ६४५ ॥

अनयोः स्थाने तातङ् स्यात्। ङः इत्। ङित्त्वेन सर्वा-
:। सुखं ते भवतात् भवतु वा।

७· ७·१· ६· १: १:
पौनःपुन्ये भृशार्थे च लोटो हिस्वौ तध्वमौ
:ा॥ ६४६॥

पौनःपुन्ये भृशार्थे च द्योत्ये सर्वलकारस्थाने लोटः हिस्वौ
ध्वमौ च वा स्तः। मुहुः भृशं वा पचति पचतः पचन्ति
त्याद्यर्थे सर्वत्र पच पचस्व पचत पचध्वम्। पक्षे यथाप्राप्तं
कारा:।

इति लकारार्थनिरूपणम्।

## कृदन्तप्रकरणम्।

५· १· ·१· १· ·१·
धातोर्विहितोऽतिङ् प्रत्ययः कृत्॥ ६४७॥

धातोः विहितः तिङ्भिन्नः प्रत्ययः कृत्संज्ञः स्यात्।

१:· १:·
तव्यानीययण्यत्क्यप्केलिमाः कृत्याः॥६४८॥

तव्यादयः कृत्यसंज्ञाः स्युः।

१: ·१·
क्तक्तवतू निष्ठा॥ ६४९॥

क्तः क्तवतुश्च निष्ठासंज्ञः स्यात्।

१· १· ·१· ६· १·
असत्रीविहितः सरूपः कृत् सरूपस्य बाधकः
६५०॥

स्त्रीविहितप्रत्ययं विना समानरूपः क्तप्रत्ययः समानरूपक्तः बाधकः स्यात्, न अन्यस्य।

७· ·१· २· ·१·

कर्त्तरि कृत् विशेषोक्तिं विना ॥ ६५१ ॥

विशेषार्थानुक्तौ सर्वः एव कृत् कर्त्तरि वाच्ये स्यात्।

१:· १·

कृत्यादयो बहुलम् ॥ ६५२ ॥

कृत्यादयः कृतः यत्र अर्थे विहिताः, ततः अन्यत्र अर्थे अपि स्युः।

१· १· ·१· १·

कृत्तद्धितान्तं समासश्च प्रातिपदिकम् ॥६५३॥

कृताद्यन्तं समासश्च प्रातिपदिकसंज्ञं स्यात्। ततः सुप्।

७: ५· १:·

भावकर्मणोर्धातोः कृत्यक्तखलर्थाः ॥६५४॥

कृत्यादयः धातुमात्रात् भावे कर्मणि च अर्थे स्युः।

७:· १··

शक्यार्हप्रैषानुज्ञाप्राप्तकालेषु कृत्याः ॥ ६५५ ॥

कृत्यसंज्ञकाः प्रत्ययाः शक्याद्यर्थेषु स्युः।

कृत्यमध्ये धातुभेदे प्रत्ययभेदम् आह।

५:· १:

सर्वधातुभ्यस्तव्यानीयौ ॥ ६५६ ॥

सर्वेभ्यः धातुभ्यः तव्यानीयौ स्याताम्। तत्र भावे भू-तव्य इटि गुणे भवितव्यम् भवनीयम्। कृ-कर्त्तव्यम् करणीयम्। कर्मणि तु अनुभवितव्यः अनुभवनीयः आनन्दः। द्रष्टव्यः दर्शनीयः घटः।

५: ·१· ५· ·१· ७·

## ऋहलोर्ण्यत् ण्यदोस्त्वावश्यके ॥ ६५७ ॥

ऋवर्णान्तात् हलन्ताच्च धातोः ण्यत् स्यात्, उवर्णात् तु आवश्यके अर्थे ण्यत् स्यात्। णतौ इतौ। कृ-कार्य्यम्। तृ-तार्य्यम्। दह-दाह्यम्। मन-मान्यम्।

५· १·

## अचो यः— ॥ ६५८ ॥

अजन्तात् धातोः यः स्यात्। वि-चेयम् भू-गुणे (७२ सू०) अवादेशे भव्यम्। आवश्यके तु पूर्वेण ण्यति वृद्धौ भू-भाव्यम् सु-साव्यम्।

६· ·१· ७·

## आत एद्यो ॥ ५५९ ॥

आतः स्थाने एत् स्यात् ये परे। दा-देयम्।

५· ५· ·१· १· ५·

## पोः सहशकशसश्च योऽचमवपरपलपत्रपदभः ॥ ६६० ॥

चमादिवर्जात् पवर्गान्तात् सहादेश्च यः स्यात्। ण्यतः अपवादः। पोः शप-शप्यम् लभ-लभ्यम् सह-सह्यम् शक-शक्यम्। चमादेस्तु चाम्यम् वाप्यम्।

५· ·१· ७·

## आलभेर्नुँम् ये ॥ ६६१ ॥

यादौ प्रत्यये आलभेः नुँम् स्यात्। उमौ इतौ। आलम्भः अश्वः।

५· ·१· ५·

## गदमदचरयमश्चानुपसर्गात् ॥ ६६२ ॥

अनुपसर्गात् गदादेः यः स्यात्। गद्यं मद्यम् चर्य्यम् यम्यम्। उपसर्गात् तु प्रगाद्यम् प्रमाद्यम् प्रचार्य्यम् आयाम्यम्।

१:· ७:·
## अवद्यपण्याचार्य्या गर्ह्यव्यवहार्य्यगुरुषु ॥६६३॥

गर्ह्याद्यर्थेषु एते यान्ताः निपात्यन्ते। न उद्यते इति अवद्यं गर्ह्यम्। गर्ह्यं किम्, अनुद्यं गुरुनाम। पण्या गौः व्यवहार्य्या इत्यर्थः, अन्यत् पाण्यं स्तुत्यर्हम्। आचार्य्यः गुरुः, अन्यत्र चर्य्यः देशः।

यान्तं वह्यं भवेद्याने स्यादर्य्यः स्वामिवैश्ययोः।
उपसर्य्या गर्भयोग्या सङ्गतेऽजर्य्यमिष्यते॥

७· ५· १: ७·
## सुपि—वदः क्यब्यौ भावे—* ॥ ६६४॥

भावे वाच्ये सुबन्ते उपपदे वदेः क्यप् यश्च स्यात्। ण्यतः अपवादः। कपौ इतौ। ब्रह्मोद्यम् ब्रह्मवद्यम्। ब्रह्म वेदः तस्य वदनम् इत्यर्थः।

५: ·१· ६· ·३· ·१·
## भूहनिभ्यां क्यप्—हनस्तङ् च ॥ ६६५ ॥

भावे वाच्ये सुबन्ते उपपदे भूहनिभ्यां क्यप् स्यात्, हनश्च तङ्। ण्यतः अपवादः। ब्रह्मभूयम् ब्रह्महत्या। देवभूयम् विप्रभूयम् विप्रहत्या।

५: ७:
## स्तुशासिभ्यां कर्मभावयोः ॥ ६६६ ॥

---

* क्यब्यौ कर्मणि अपि इष्येते, तेन अनुद्यं गुरुम् भाव इत्यादि उदाहृतम्।

आभ्यां कर्मभावयोः वाच्ययोः क्यप् स्यात्। यण्यतोः अपवादः।

६· ·१· ७· ७·

## ह्रस्वस्य तुक् पिति कृति ६६७ ॥

कृत्संज्ञके पिति परे ह्रस्वस्य तुक् स्यात्। उकौ इतौ। कित्त्वात् अन्तावयवः। स्तु-स्तुत्यः। शास-( ३८३ सू० ) इत्त्वे शिष्यः।

५ः ·१· ·१·

## शंसिगुहिभ्यां वा क्यप्॥ ६६८ ॥

आभ्यां वा क्यप् स्यात्, पक्षे ण्यत्। शस्यम्। शंस्यम्। गुह्यम् गोह्यम्।

५· ५·

## ऋदुपधादक्लृपिचृतः॥ ६६९ ॥

क्लृपिचृतिवर्जात् ऋदुपधात् क्यप् स्यात्। नृत-नृत्यं, वृध-वृध्यम्। क्लृपेस्तु ये कल्प्यम्।

५· १· ·१·

## खनः इश्च ॥ ६७० ॥

खनः क्यप् स्यात्, इश्च अन्तादेशः। खेयम्।

५· ७· ५· ·१· ·१·

## भृञोऽसंज्ञायां समस्तु वा॥ ६७१ ॥

असंज्ञायां भृञः क्यप् स्यात्, संपूर्वकात् तु वा स्यात्। ण्यतः अपवादः। भृत्याः भर्त्तव्याः कर्मकराः। संज्ञायां भार्य्याः नाम क्षत्रियाः। समस्तु संभृत्यः सम्भार्य्यः।

५· ·१·

## मृजेर्वा॥ ६७२ ॥

मृजेः क्यप् वा स्यात्, पक्षे ण्यत्। मृज्यम्, पक्षे ण्यति।

७॰ ६॰ ६॰ १॰ ७ः

निष्ठायामनिटश्चजोः कुर्घिण्यतोः ॥ ६७३ ॥

घिति ण्यति च परे निष्ठायाम् अनिटः धातोः चजोः स्थाने कुः स्यात्। इति जस्य गत्वे (३८५ सू॰) वृद्धौ मार्ग्यम्।

१॰ ७॰ ७॰ ६॰ १॰

न ण्य आवश्यके यजत्यजयाचप्रवचश्च ॥ ६७४॥

आवश्यकार्थे ण्ये परे यजादेश्च चजोः स्थाने कुः न स्यात्। अवश्यपाच्यम् *। अन्यत्र पाक्यम्। याज्यम् त्याज्यम्।

६॰ ७॰ ६॰ ७॰ ६॰ १॰

वचोऽशब्दसंज्ञायां निप्रयुजो शक्यार्थे भुजेश्च

७॰

भक्ष्ये ॥ ६७५ ॥

एषु अर्थेषु एतेषां चजोः स्थाने कुः न स्यात्। वाच्यम्। शब्दसंज्ञायान्तु वाक्यं पदसमुदायः। प्रयोक्तुं शक्यः भृत्यः प्रयोज्यः। एवं नियोज्यः। अर्हार्थे तु नियोक्तुम् अर्हति इति नियोग्यः प्रभुः। भोज्यं भक्ष्यम्, अन्यत्र भोग्या पृथिवी।

६॰ ६॰ १॰ ७॰ १ः ७॰

भिदेरुज्झेश्च क्यपि—भिद्योद्ध्यौ नदे ॥६७६॥

एताभ्यां क्यपि नदे अर्थे कर्त्तरि एतौ निपात्यौ। कूलं भिनत्ति इति भिद्यः नदः। वारि उज्झतीति उद्ध्यः नदः निपातनात् ढत्वम्।

* लुम्पेदवश्यमः कृत्ये इत्यादिना परत्र वक्ष्यमाणेन (१२२१ सू॰ इ॰) अवश्यमः मलोपः।

१:·

## राजसूयसूर्य्यमृषोद्यकुप्यकृष्टपच्याः ॥६७७॥

एते क्यबन्ताः निपात्यन्ते। राज्ञा सोतव्यः अभिषवद्वारा निष्पादयितव्यः राजसूयः। सरति इति सूर्य्यः कर्त्तरि क्यपः ऊत्वञ्च निपात्यते। मृषा उद्यते इति मृषोद्यम् नित्यार्थं निपातनम्। गुपः आदेः कुत्वं क्यप् च निपात्यते, सुवर्णरजतभिन्नं धनम् कुप्यम्। कृष्टे क्षेत्रे स्वयमेव पच्यते कृष्टपच्यः कर्मकर्त्तरि क्यप्।

१:· ७· ७·

## सिध्यतिष्यपुष्याणि नक्षत्रे कर्त्तरि ॥६७८॥

कर्त्तरि वाच्ये नक्षत्रे अर्थे एतानि क्यबन्तानि निपात्यन्ते। साधयति इति सिध्यम् पुष्णातीति पुष्यम् तिष्यश्च।

८:· ५· ·१·

## परतन्त्र, वाह्या, पक्षेषु ग्रहेः क्यप् ॥६७९॥

एषु अर्थेषु क्यबन्तेन द्योत्येषु ग्रहेः क्यप् स्यात्। गृह्याः शुकाः पञ्जरबन्धादिना परतन्त्रीकृताः। ग्रामगृह्या ग्रामवाह्या सेना। आर्य्यगृह्यः आर्य्यपक्ष्यः।

५: ·१·

## कृष्टधिभ्यां वा ॥ ६८० ॥

आभ्यां क्यप् वा स्यात्, पक्षे ण्यत्। कृत्यम् कार्य्यम्, वृध्यं वर्ध्यम्।

युग्यं याने ण्यति युजेः सह्यार्थामापटाद्वसेः।

अमावास्याप्यमावस्या कुह्वां ण्यति निपात्यते॥

अमा सह वसतः अर्केन्दू यत्र सा सा अमावास्या अमावस्या कुहूः।

५· ·१·

**आसु, यु, वपि, लपि, चमो ण्यत् ॥६८१॥**

एभ्यः ण्यत् स्यात्, अनावश्यके अपि। आसु-आसाव्यम्। वप-वाप्यम् लप-लाप्यम् इत्यादि।

१· ८· १· ७·

**सान्नाय्यं हविषि निकाय्यो निवासे ॥६८२॥**

एषु अर्थेषु एते ण्यदन्ताः निपात्यन्ते। संनीयते होमार्थम् अग्निं प्रति इति सान्नाय्यं हविः। निचीयते अस्मिन् धान्यादिकं निकाय्यः निवासः, अन्यत्र निचेयः।

**भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापा-**

१:· १:· ·१· ७·

**त्याः कृत्यान्ता वा कर्त्तरि ॥ ६८३ ॥**

एते कृत्यप्रत्ययान्ताः वा कर्त्तरि निपात्यन्ते। पक्षे कर्मभावयोः यथाप्राप्तम्। भवति इति भव्यम् गायति इति गेयः, पक्षे भव्यम् अनेन गेयं साम अनेन इत्यादि।

५· १· ७·

**धातोः केलिमः कर्मकर्त्तरि ॥ ६८४ ॥**

कर्मकर्त्तरि वाच्ये धातोः केलिमः स्यात्। कः इत्। पचेलिमाः तण्डुलाः। भिदेलिमाः माषाः।

कृदन्ते णत्वप्रकरणम्।

·१· ५· ६· ६· ·१· ६· १·

**प्राग्वद्‌चः कृतो निर्विंसास्य च नो णः ॥६८५॥**

प्रपरानिर्परिभ्यः अन्तःशब्दाच्च परस्य अचः परं विहितस्य कृतः, निर्विंसस्य च नस्य णत्वं स्यात्, अड्ादिव्यवधाने

अपि। प्रपाणीयम् प्रमाणीयम्। निर्विषम् इत्यत्र परस्य णत्वे पूर्वस्य टुत्वम्। अचः किं, प्रमग्नः इत्यादौ न।

५· ५· ·१· ५· ·१· ५· ५· ·१· २·

**णेर्हलश्चेजुपधाद्वा सनुम इजादेस्तु नित्यम्**
**॥ ६८६ ॥**

प्रादिभ्यः परस्य ण्यन्तधातोः, इजुपधात् हलन्ताच्च धातोः परं विहितस्य कृतः नस्य णत्वं वा स्यात्, नुम्सहितात् इजादेस्तु नित्यम्। प्रयापणीयम् प्रायापनीयम्। एवं प्रयाप्यमाणं प्रयाप्यमानम् इत्यादि। प्रकोपणीयम् प्रकोपनीयम्। सनुमस्तु प्रेङ्गणीयम्।

·१· ५:·

**न भाभूपूकमिगमिप्यायीवेपिभ्यः ॥६८७॥**

एभ्यः विहितस्य कृतः नस्य णत्वं न स्यात्। प्रभानीयम् प्रभवनीयम् इत्यादि।

·१· ·१· ६:· ७·

**प्राग्वत् वा निंसनिक्षनिन्दां कृति ॥ ६८८॥**

प्रादिभ्यः परस्य एषां नस्य णः स्यात् वा, कृति परे। प्रणिन्दितव्यम् प्रनिन्दितव्यम् इत्यादि।

इति कृत्यप्रकरणम्।

## कर्त्तृकृत्प्रकरणम्।

५· १: ७·

**धातोर्ण्वुल्तृचौ कर्त्तरि ॥ ६८९ ॥**

कर्त्तरि वाच्ये धातोः ण्वुल् तृच् च प्रत्ययः स्यात्। ण्वुलः

णलौ इतौ, टचश्च चः इत्। घ्यति विशेषे सर्वत्र कर्त्तरि इति अनुवर्त्त्यम्। इति खुलि।

६ः ६ः १ः

## प्रत्ययाद्योर्युर्व्वोरनाकौ ॥ ६९० ॥

प्रत्ययाद्यस्य योः स्थाने अनः, वोः स्थाने च अकः स्यात्। इति वोः अके णित्त्वात् वृद्धौ नी-नायकः, भू-भावकः, कृ-कारकः। हनः (५२२ सू०) तङि घत्वे घातकः। दा-(६०४ सू०) युकि दायकः। (४६२ सू०) अवृद्धौ शमकः, जनकः। भू-तृचि इटि भविता। कृ-कर्त्ता। विज (३२३ सू०) इटः ङित्त्वे विजिता। नश-नशिता। इडभावपक्षे (४९८ सू०) नुमि पक्षे षत्वे नंष्धा नंष्टा। इष-(४९७ सू०) इटि एषिता, पक्षे एष्टा। सह-सहिता, पक्षे (४७० सू०) ओत्वे सोढ़ा।

५॰ ५॰ ६॰ ॰१॰॰१॰

## क्रमेर्नित्यात्मनेपदविषयात् क्त्वो नेट् ॥६९१॥

नित्यात्मनेपदविषयात् क्रमेः परस्य क्त्वः स्थाने इट् न स्यात्। प्रक्रान्त्वा। (१९१ पृ० १प०) प्रोपाभ्याम् इति नित्यात्मनेपदयोग्यता अस्य। अन्यत्र क्रमिता।

५ः॰ १॰ ५ः॰ १॰

## नन्द्यादिभ्यो ल्युर्ग्रहादिभ्यो णिनिः पचादिभ्योऽच् ॥ ६९२ ॥

५ः॰ ॰१॰

एतेभ्यः क्रमेण एते प्रत्ययाः स्युः। ल्योः लः इत्, णिनेः इणौ इतौ, अचस्तु चः इत्। ल्योः युस्थाने अनः नन्दनः मधुसूदनः विचक्षणः विभीषणः। नन्द्यादिगणे निपातनात्

हसे वाच्ये षत्वं स्वरः । प्रष्ठः-पिनष्टि प्राष्टी, गुफि ख्याथौ । अत्र यथे विग्रथौ विषयौ॰ति ऋक्सपाठात् हस्वाभावः निपात्यते । पचतीति पचः नदः देवः इत्यादि । नन्द्यादिगणप्रत्ययं तु ( सि॰ उ॰ २१७ पृ॰ ) द्रष्टव्यम् ।

६॰ १॰ ७॰ १॰ १॰ १॰

चरिचलिहनीनां वाचि द्वित्वमाक् चाभ्या-

६॰ ६॰ १॰ १॰

सस्य हन्तेर्घत्वञ्च ॥ ६९३ ॥

अचि परे एषां द्वित्वं वा स्यात् अभ्यासस्य आक् च स्यात्, हन्तेः घत्वञ्च । चराचरः चलाचलः घनाघनः, पक्षे चरः चलः इत्यादौ अच् । पचादिषु आकृतिगणः अचि यङः लुकः निषेधज्ञापकात् ।

५॰ १॰

इदुपधज्ञाप्रीकिरः कः ॥ ६९४ ॥

एभ्यः कः स्यात् । कः इत् । क्षिपः । लिखः । बुधः । नुदः । कृशः । ज्ञः । प्रियः । किरः । असरूपत्वात् ण्वुल्तृचोः न बाधः, तेन क्षेपकः क्षेप्ता इत्यादि ।

५॰ ५॰

उपसर्गादातः * ॥ ६९५ ॥

उपसर्गपूर्वकात् आदन्तात् कः स्यात् । आतः ण्वाध्येत्यादिवक्ष्यमाणस्य णस्य बाधकः । प्रज्ञः । प्रदः । विधः । प्रस्थः । विष्ठः । अभिष्ठः । प्रस्थः । षत्वे निष्ठः । वक्ष्यमाणसूत्रेण अग्रगामिनि षष्ठे षत्वे प्रष्ठः ।

---

* प्रादिसमासे उपपदसमासे च रूपाभेदात् उपसर्गे इति अनुक्त्वा उपसर्गात् इति उक्तम् ।

५० १० ५० ०१० ७०
## पाघ्राध्मधेट: शो ह्रस्वसंज्ञायाम् ॥६६६॥

एभ्य: श: स्यात्, जिघ्रतेस्तु असंज्ञायाम्। श: इत्। शित्वात् शवादि। पिब: धम: पश्य: धय:। धया कन्या, खशन्तस्य एव स्त्रियाम् ईबन्तता इति सिद्धान्त:। घ्रा-जिघ्र:। संज्ञायान्तु व्याघ्र: इत्यादौ क: एव।

७०
## अनुपसर्गे—लिम्पविन्दधारिपारिवेद्यदेजि-

५:०
## चेतिभ्य: ॥ ६६७ ॥

अनुपसर्गे उपपदे एतेभ्य: श: स्यात्। लिम्प: विन्द:। अनुपसर्गे इत्युक्ते:, गोविन्द: अरविन्द: इत्यादौ अन्यस्मिन् उपपदे स्यात् एव। एवं धारय: पारय:।

५:० १० ०१०
## ज्वलादिभ्यो णो—वा ॥ ६६८ ॥

अनुपसर्गे उपपदे ज्वलादिगणेभ्य: ण: वा स्यात्, पक्षे पचाद्यच्। ज्वाल: ज्वल:। चाल: चल:। ज्वलादिगणस्तु (सि० उ० ८८-६० पृ०) द्रष्टव्य:। उपसर्गे तु उज्ज्वल: प्रज्वल: इत्येव।

५०
## आत: श्याव्यधाङ्संस्रवतीणवसावहृलिह-

५० ०१० २०
## श्लिषश्वसश्च नित्यम् ॥ ६६६ ॥

धादन्तात् श्यादेश्च नित्यं ण: स्यात्। श्लोके: भवस्यतेश्च इदान्तत्वे अपि पुनर्ग्रहणम् उपसर्गात् परतया प्राप्तस्य कस्य

बोधनार्थम्। दायः। माया। अवश्यायः। प्रतिश्यायः। व्याधः। आस्रावः संस्रावः। अत्यायः। अवसायः। अवहारः। लेहः। श्लेषः। श्वासः।

५· ५:
## अनुपसर्गाद्दुनोतिनीभ्याम् ॥ ७०० ॥

अनुपसर्गात् आभ्यां णः स्यात्। दावः, दवतेस्तु पचाद्यचि दवः। नायः, उपसर्गात् तु प्रणयः।

५· ७· १· ७· ·१·
## ग्रहेर्जलचरे णो ज्योतिष्यच् ॥ ७०१ ॥

अनयोः अर्थयोः ग्रहेः एतौ स्तः। ग्राहः जलचरः। ग्रहः ज्योतिः।

५· ७· १· ७· ·१·
## भवतेः पदार्थे णो हरसंसारयोरच् ॥७०२॥

भवतेः पदार्थे अर्थे णः, शिवसंसारयोः अर्थयोस्तु अच् स्यात्। भावः पदार्थः। भवः शिवः संसारश्च।

५· १· ७:·
## ग्रहेः को गेहदारेषु ॥ ७०३ ॥

गेहे दारेषु अर्थेषु च ग्रहेः कः स्यात्। कः इत्। गृह्णाति इति गृहं गेहम्। गृहाः दाराः।

५:· ७· ७·
## नृतिखनिरञ्जिभ्यः शिल्पिनि—कर्त्तरि

१·
## षकः ॥ ७०४ ॥

एभ्यः क्रियाकौशलवति कर्त्तरि षकः स्यात्। षः इत्। षित्वात् स्त्रियाम् ईप्, नर्त्तकी। खनकः (२५७ सू०) नलोपे, रजकः, स्त्रियां रजकी।

५॰ १:

गायतेल्र्युट्थकनौ ॥ ७०५ ॥

गायतेः शिल्पिनि कर्त्तरि ल्युट् थकन् च स्यात्। ल्युटः लटौ इतौ, थकनः नः इत्। इति ल्युटि अतः युकि योः अनादेशे गायनः, टित्त्वात् ईप् गायनी। गाथकः।

५॰ ॰१॰ ७:

जहातेर्ल्युट् व्रीहिकालयोः ॥ ७०६ ॥

व्रीहौ काले च कर्त्तरि जहातेः ल्युट् स्यात्। जहाति उदकम् इति हायनः व्रीहिः। जहाति भावान् इति हायनः वत्सरः।

७॰ ५॰ ॰१॰

आशिषि धातोर्वुन् ॥ ७०७ ॥

आशीर्वादे अर्थे धातोः वुन् स्यात्। जीवतात् जीवकः। नन्दतात् नन्दकः।

७॰ ॰१॰

कर्मण्यण् ॥ ७०८ ॥

कर्मणि उपपदे धातोः अण् स्यात्। णः इत्। वक्ष्यमाणः उपपदसमासः। कुम्भं करोति इति अणि कुम्भकारः, स्वर्णकारः, लौहकारः। गङ्गाधरभूधरादयस्तु धरति इति पचाद्यचि गङ्गादीनां सम्बन्धत्वेन विवक्षया षष्ठीसमाससाध्याः। अग्रे सर्वत्र अविशेषे कर्मणि इति अनुवर्त्त्यम्।

५: ५॰ ५॰ १॰

अवामाध्यामातोऽनुपसर्गात् कः ॥ ७०९ ॥

अनुपसर्गात् वयतिमातिवर्जात् आदन्तात् धातोः कर्मणि उपपदे कः स्यात्। अणः अपवादः। इति के (४५४ सू॰).

आतः लोपे धमदः पादत्रम्। अनुपसर्गात् किं, गोसंप्रदायः। गोप्रदस्तु गवां प्रदः इति कप्रत्ययान्तेन षष्ठीसमाससाध्यः। वयतेः मातेस्तु कर्मणि उपपदे पूर्वेण अण् एव। तन्तुवायः धान्यमायः।

७॰ ५॰ १॰

## सुप्यादन्तात् कः— ॥ ७१० ॥

सुबन्ते उपपदे आदन्तात् कः स्यात्। अकर्मणि अपि इदम्। तेन द्वाभ्यां पिबति इति द्विपः। समेन तिष्ठति इति समस्थः। एवं विषमस्थः। गावः तिष्ठन्ति इत्यत्र इति आधारे (६५२ सू॰) बाहुलकात् के अम्बष्ठादित्वात् वक्ष्यमाणेन षत्वे गोष्ठम्।

५॰ ५॰॰१॰ १॰॰१॰ ७ः॰ ॰१॰

## धरतेः छादेस्तु ह्रस्वश्च चक्रिविस्मनिनसु च ॥ ७११ ॥

कर्मणि उपपदे धरतेः छादेश्च कः, तस्मिन् परे त्वादिषु च छादेः ह्रस्वश्च स्यात्। अणः अपवादः। महीध्रः, उरश्छदः, दन्तच्छदः, तनुच्छदः।

१ः॰

## मनुघ्नादयः ॥ ७१२ ॥

एते कान्ताः निपात्यन्ते। मनुघ्नः, प्रलम्बघ्नः, हस्तिघ्नः ना, कपाटघ्नः चौरः। आकृतिगणः।

५॰ ५॰ ७ः ॰१॰ ५॰

## अनुपसर्गात् गायतेः सुराशीध्वोश्च पिबते-

॰१॰

## ष्टक् ॥ ७१३ ॥

कर्मणि उपपदे अनुपसर्गात् गायतेः, सुराशीधूपपदे च पिबतेः टक् स्यात्। टको इतौ। सामगः, स्त्रियां टित्त्वात् ईपि सामगी। सुरापः, सुरापी। शीधुपः। अन्यत्र चौरपः, चौरपा स्त्री। उपसर्गात् तु अण् एव, सामसङ्गायः, सुरासम्पायः।

५॰ ७॰ ७॰ ॰१॰॰१॰

हरतेरनुद्यमने वयसि चाच्— ॥ ७१४ ॥

कर्मणि उपपदे हरतेः अनुद्यमने अर्थे वयसि च गम्ये अर्थे अच् स्यात्। अंशहरः, भागहरः। उद्यमने तु भारहारः। वयसि कवचहरः वर्महरः युवा।

५॰ ॰१॰

अर्हतेश्च ॥ ७१५ ॥

कर्मणि उपपदे अर्हतेः अच् स्यात्। पूजार्हः, पूजार्हा ब्राह्मणी। अणि तु ईप् स्यात्।

७ः ५ः ७ः

स्तम्बकर्णयोः रमिजपिभ्यां हस्तिसूचकयोः ॥ ७१६ ॥

स्तम्बोपपदे रमतेः, हस्तिनि अर्थे, कर्णोपपदे च जपतेः सूचके अर्थे अच् स्यात्। स्तम्बे रमते इति स्तम्बेरमः हस्ती। कर्णे जपति इति कर्णेजपः सूचकः। उभयत्र अलुक्समासः *।

७॰ ५॰ ७ः॰ ॰१॰

अधिकरणे—शेतेः—पार्श्वादिषु च ॥७१७॥

---

* हलदन्तात् सप्तम्याः इति ११८८ सूत्रेण अलुक्समासः कर्णेजपस्तम्बेरमयोः संज्ञाशब्दत्वात्।

शेतेः अधिकरणे उपपदे पार्श्वादिषु अनधिकरणेषु अपि उपपदेषु च अच् स्यात्। भूमिशयः। पार्श्वाभ्यां शेते पार्श्वशयः। उदरेण शेते उदरशयः। उत्तानः सन् शेते उत्तानशयः। अवनतशयः।

७· १·

## गिरौ डः—॥ ७१८ ॥

गिरौ अधिकरणे उपपदे शेतेः डः स्यात्। गिरिशमुपचचार प्रत्यहं सा सुकेशी।

७· ५· ·१·

## सुपि गमेश्च ॥ ७१९ ॥

सुबन्ते उपपदे गमेः डः स्यात्। अन्तगः, अत्यन्तगः, अध्वगः, दूरगः, सर्वगः, सर्वत्रगः, पन्नं पतितं गच्छति इति पन्नगः। एवं ग्रामगभुजगादयः साध्याः।

५· ७: ५·

## अपात् क्लेशतमसोर्हन्तेः ॥ ७२० ॥

अपपूर्वात् हन्तेः एतयोः उपपदयोः डः स्यात्। क्लेशापहः पुत्रः, तमोपहः सूर्य्यः।

७: १·

## कुमारशीर्षयोर्णिनिः—॥ ७२१ ॥

एतयोः उपपदयोः हन्तेः णिनिः स्यात्। हणौ हतौ। कुमारघाती, शीर्षघाती। असरूपस्य अपि अणः बाधकः।

७· ·१· ·१·

## कर्मणि टक् च * ॥ ७२२ ॥

---

* टक् चेति चकारेण णिनिः अनुकृष्यते, तेन शत्रुघाती-त्यादिसिद्धिः। पूर्वसूत्रे कुमारादिग्रहणं तु टकः बाधनार्थम्।

कर्मणि उपपदे हन्तेः टक् स्यात्। टकौ इतौ। इति टकि (२६३ सू०) उपधातः लोपे (२५७ सू०) घ्नादेशे जायाघ्नः पुमान्, पतिघ्नी स्त्री। जायाघ्नः तिलकालकः पतिघ्नी पाणिरेखा, विषघ्नम् औषधम्, पित्तघ्नं घृतम् इत्यादि।

७• ५• १• ७: •१•

अधिकरणे चरेष्टः—सहसेनयोश्च ॥७२३॥

अधिकरणे उपपदे चरतेः टः स्यात् सहसेनयोस्तु अनधिकरणयोः अपि उपपदयोः। टः इत्। कुरुषु चरति इति कुरुचरः, टित्त्वात् स्त्रियाम् ईपि कुरुचरी। निशाचरः, निशाचरी। सहचरः, सहचरी। एवं सेनाचरः।

७:• ५• ७• •१• ७•

पुरोऽग्रतोऽग्रेषु सरतेः पूर्वे च कर्त्तरि ॥७२४॥

एषु उपपदेषु कर्त्तृरूपे पूर्वे च उपपदे सरतेः टः स्यात्। पुरस्सरः, अग्रतस्सरः। पूर्वः सन् सरति इति पूर्वसरः। कर्त्तरि किं, पूर्वं सरति इत्यत्र अण् एव, पूर्वसारः।

५• ७:• ७•

कृञो—हेतुताच्छील्यानुलोम्येषु कर्मणि ॥७२५॥

एषु अर्थेषु द्योत्येषु कर्मणि उपपदे करोतेः टः स्यात्। तत्र हेतौ, यशस्करी विद्या। स्वास्थ्यकरः सतततत्करणशीलः। वचनकरः वशंवदतारूपानुलोम्यकरः।

दिवाविभाप्रभानिशाहन्भास्करान्तानन्दबहुकिं-

७:• •१•

लिपिलिविभक्तिचित्रसंख्याधनुररुष्षु च ॥७२६

एषु उपपदेषु कृञः टः स्यात्। अहेत्वादौ अपि। दिवाकरः, निशाकरः। अहस्करः, धनुष्करः, अरुष्करः।

७· ७·
## कर्मणि भृतौ—॥ ७२७॥

कर्मेति उपपदे कृञः टः स्यात् भृतौ। कर्मकरः। भृतौ किम्, कर्मकारः अन्यः।

· ·१·
## न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु॥ ७२८॥

७·

एषु उपपदेषु कृञः टः न स्यात्। हेत्वादिप्राप्तस्य निषेधः। अतः तत्र अण् एव। शब्दकारः, श्लोककारः, चाटुकारः, मन्त्रकारः, पदकारः *।

७: ७: ·१·
## स्तम्बशकृतो व्रीहिवत्सयोरिन्॥ ७२९॥

स्तम्बे उपपदे व्रीहौ अर्थे, शकृति उपपदे च वत्से अर्थे कृञः इन् स्यात्। न इत्। स्तम्बकरिः व्रीहिः, शकृत्करिः वत्सः। अन्यत्र स्तम्बकारः इत्यादि।

५· ·१· ५· ·१· २·
## एजेः खश् अजादेश्च यथाशिष्टम्॥ ७३०॥

ण्यन्तात् एजतेः खश् स्यात्, अजादेस्तु उपपदविशेषे यथाप्रयोगं खशादि स्यात्। खशौ इतौ। शित्वात् शबादि। इति खशि।

---

* वेदासंहितायां सन्ध्यादिना पदानाम् अवयवपरिह्वृत्तिः, तानि च सन्ध्यादिकार्य्यम् अपहाय स्पष्टानि पृथग्भूतानि करोति इति पदकारः।

६· ·१· ७· ६·
अरुर्द्विषदजन्तस्य मुँम् खिति एकाजिच·
·१· ·१·
स्वम् ॥ ७३१ ॥

खिदन्ते धातौ परे अरुषः द्विषतः षजन्तस्य च मुँमागमः स्यात्। एकाजिजन्तस्य अम् (द्वितीयैकवचनम्) स्यात्। उभौ इतौ। इति मुँमि जनमेजयः।

अजादेष यथाग्निष्टं खग्नि वातमजो मृगे।
पुष्पन्धयो मधुकरे ज्ञेयो बाले स्तनन्धयः।
नाड़िन्धमः स्वर्णकारे पशौ तद्वत् वहंलिहः।
अभ्रंलिहस्तथात्युच्चे राहावर्थे विधुन्तुदः।
अरुन्तुदो दुःखदे स्यात् मेघज्योतिरिरम्मदः।
ललाटन्तप उग्रांशावसूर्य्यंपश्य आहृते।
वशंवदस्तथायत्ते प्रियोक्तौ च प्रियंवदः।
प्लवन् सन् गच्छतीत्यर्थे प्लवगश्च प्लवङ्गमः।
पतन् सन् गच्छतीत्यर्थे पतङ्गश्च पतङ्गमः।
पतगोऽपि भवेदत्र भुजङ्गोऽहो भुजङ्गमः।
उरसा गच्छतीत्यर्थे उरगश्चाप्युरङ्गमः।
तुरेण (वेगेन) गच्छतीत्यर्थे तुरगश्च तुरङ्गमः।
विहायसा गच्छतीति विहङ्गश्च विहङ्गमः।
विहगोऽपि भवेदत्र निपात्यन्ते खशादिभिः।
सर्वंसहः समर्थे स्यात् रोगभेदे भगन्दरः।
पुरन्दरः सहस्राक्षे पर्वते च युगन्धरः।
पतिंवरा कन्यकायां शत्रु वातिन्यरिन्दमः।
प्रभञ्जनो वायुभेदे भयहेतौ भयङ्करः।

सर्वंकषः सर्वहिंस्रे नदे कूलङ्कषो मतः।
क्षेमङ्करः क्षेमकारी प्रियकारप्रियङ्करौ।
प्रियकारिणि तद्वत् स्यात् विकल्पेन मताविमौ।
विश्वम्भरा धरण्याञ्च सामभेदे रथन्तरम्।
शत्रुन्तपः शक्तियुक्ते तस्मिन्नर्थेऽप्यरिन्दमः।
वाचयमो मौनिनि स्यात् हस्तिनि स्यात् मितङ्गमः।
* कूलमुद्रुजतीत्यर्थे नदे स्यात् कूलमुद्रुजः।
कूलमुद्वहते यस्तु नदोऽसौ कूलमुद्वहः।
आत्मम्भरिस्तथा कुक्षिम्भरिः स्यादुदरम्भरिः।
एते त्रयो निपात्यन्ते स्वोदरस्यैव पूरणे।

७: ७:
आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थे-
७ ५ ७ १
ष्वच्वौ कृञः करणे ख्युन्॥ ७३२॥

अभूततद्भावार्थेषु अच्व्यन्तेषु कर्मसु उपपदेषु एषु करणे वाच्ये कृञः ख्युन् स्यात्। खनौ इतौ। इति ख्युनि योः अनादेशे मुमि च अनाढ्यम् आढ्यं कुर्वन्ति अनेन इति * आढ्यङ्करणं, सुभगङ्करणम् इत्यादि।

५ ७ १:
भुवः—कर्त्तरि खिष्णुखुकञौ॥ ७३३॥

कर्मणि इति निवृत्तम्। भवतेः च्व्यर्थे एतौ स्तः कर्त्तरि वाच्ये। खञौ इतौ। अनाढ्यः आढ्यः भवति इति आढ्यम्भविष्णुः, आढ्यम्भावुकः इत्यादि। प्रियम्भविष्णुः।

---

* आढ्यादिषु उपपदेषु इत्येव वाच्यं, ततश्च पूर्वसूत्रात् आढ्यादिषु इति अनुवर्त्तनीयम्।

५· ७· ·१·

## स्पृशोऽनुदके क्विँन् ॥ ७३४ ॥

उदकभिन्ने उपपदे स्पृशेः क्विँन् स्यात्। क्विनौ इतौ। इति क्विनि।

६· १·

## वमात्रस्य लोपः ॥ ७३५ ॥

वमात्रप्रत्ययस्य लोपः स्यात्। इति वलोपे, कुत्वे घृतस्पृक्, मन्त्रेण स्पृशति इति मन्त्रस्पृक्।

१:·

## ऋत्विग्दधृक्स्रग्दिग्दृगुष्णिगसृक्क्रुञ्चः ॥७३६॥

एते क्विन्नन्ताः निपात्यन्ते। ऋतौ यजते इति ऋत्विक्, धृष्णोति इति दधृक्, सृज्यते इति स्रक्, दिश्यते इति दिक्, दृश्यते इति दृक्, ऊर्ध्वं स्निह्यति इति उष्णिक्, न सृज्यते इति असृक्, क्रुञ्चते इति क्रुङ्।

७:· ७:· ५:·

## समानान्यत्यदादिषूपमानेषु कर्मसु दृशेः

१: ·१· ७·

## सक्टकौ च कर्मणि ॥ ७३७ ॥

समानादिषु उपमानेषु कर्मसु उपपदेषु कर्मणि वाच्ये दृशेः सक् टक् क्विँन् च स्यात्। टकौ इतौ। समानः इव दृश्यते इति वाक्ये सकि वक्ष्यमाणेन समानस्य सादेशे शस्य षत्वे तस्य कत्वे षत्वे च सदृक्षः। टकि सदृशः, स्त्रियां टित्वात् ईपि सदृशी। क्विनि कुत्वे सदृक्। अन्यः इव दृश्यते इति सकि।

६· ७:·

## सर्वनाम्न आदृग्दृशदृक्षवतुषु ॥ ७३८ ॥

एषु परेषु सर्वनाम्नः आदन्तादशः स्यात्। इति आत्वे अन्यादृशः अन्यादृशः अन्यादृक्। तादृशः तादृशः तादृक्। एवं यादृशादयः।

समानस्य स आदेशः किमः कीः स्यात् सगादिषु।
ईर्भवेदिदमस्तेषु तथामूरदसो भवेत्।

किम्-कीदृशः, इदम्-ईदृशः। अदस्-अमूदृशः।

५·

सत्सुद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराज

७· ·१· ७· ·१·

उपसर्गेऽपि सुपि—क्विप्॥ ७३९॥

एभ्यः क्विप् स्यात्, उपसर्गे सति असति वा सुबन्ते उपपदे। क्विपो इतौ। नाकसद्, सभासद्, संसद्। प्रसूः। पितृद्विट्। मित्रध्रुक्। गोधुक्। कामधुक्। अश्वयुक्। वेदवित्।

५ः ६· ६· १·

अग्रग्रामाभ्यां नयतेर्णो णः॥ ७४०॥

आभ्यां परस्य नयतेः नस्य णः स्यात्। अग्रणीः, ग्रामणीः। स्वराट्।

७· ५· १·

सुपि भजो ण्विः॥ ७४१॥

सुबन्ते उपपदे भजतेः ण्विः स्यात्। इणौ इतौ। वलोपे। सुखभाक्, दुःखभाक्।

५· ७· ·१·

अदोऽनन्ने विट्॥ ७४२॥

अन्नभिन्ने उपपदे अत्तेः विट् स्यात्। इटौ इतौ। आमम् अत्ति इति आमात्, क्रव्यात्। अन्ने तु, अन्नादः।

१:

## असुसिग्मनिँक्कनिँब्वनिँप्क्वि॑पः ॥ ७४३ ॥

एते प्रत्ययाः उपपदाभावे ऽपि धातुसामान्यात् स्युः। एषु विच्क्विपोः सर्वाभावः, अन्येषाम् इकानपाः इतः। रज्यते इति असि (३५७ सू॰) नलोपे रजः। मनुते इति मनः। चष्टे इति उसि ख्यादेशाभावे चक्षुः। हूयते इति बाहुलकात् कर्मणि वाच्ये इसि हविः छादयति इति छादेः क्ले छदिः।

६॰ ६॰ ६॰ ·१॰ ६॰ ·१··१॰

## वशादेस्तस्य तेश्व क्तो नेट्— ॥ ७४४ ॥

वशप्रत्याहारादेः तस्य तेश्व क्तः इट् न स्यात्। इति इड-भावे शर्म सुशर्मा वर्म छादयति आन्तरम् इति क्ले छद्म। क्वनिपि तुकि सुत्वा तु अभिषवे क्ते, प्रातरित्वा। सहयुध्वा, पारदृश्वा। वनिपि अर्वा। क्विपि गीः पूः। (५४६ सू॰) ऊटि अक्षयूः। (३८३ सू॰) इत्वे पुरश्रीः आशीः।

६:॰ १॰ ७॰

## गमाद्यनिटामन्तलोपः क्वौ— ॥ ७४५ ॥

क्विपि परे गमादीनाम् अनिटाम् अन्तलोपः स्यात्। सङ्गत्, संयत्। "उपसर्गस्य दीर्घः स्यात् क्विब्घञादौ क्वचि-द्भवेत्" इत्युक्तेः दीर्घे परीतत्।

६॰ ६॰ ६॰ १॰

## अनुनासिकान्तस्योपधायास्तासिसेटो दीर्घः ॥ ७४६ ॥

तासिसेटः अनुनासिकान्तस्य धातोः उपधायाः दीर्घः स्यात्। क्विपि (२४६ सू॰) मस्य नत्वे प्रम-प्रशान्, तम-प्रतान्।

७॰ ७॰ १॰ ७॰

सुप्यजातौ णिनि—स्ताच्छील्ये ॥ ७४७ ॥

अजात्यर्थे सुबन्ते उपपदे धातोः णिनिः स्यात् ताच्छील्ये अर्थे। उष्णी उतौ। उष्णभोजी, शीतभोजी। उपजीवी। अजातौ किं, ब्राह्मणानाम् आमन्त्रयिता।

७ः ५॰

साधुब्रह्मणोर्वदेः ॥ ७४८ ॥

एतयोः उपपदयोः वदेः णिनिः स्यात् अताच्छील्ये अपि। साधुवादी, ब्रह्मवादी।

७॰ ७॰

कर्त्तर्युपमाने— ॥ ७४९ ॥

कर्त्तरि उपमाने उपपदे णिनिः स्यात्। सिंहः इव विक्रमते सिंहविक्रमी। सुधास्यन्दी।

७॰ ५॰

व्रते सर्वस्मात् ॥ ७५० ॥

व्रते गम्ये सर्वस्मात् धातोः णिनिः स्यात्। स्थण्डिलशायी, क्षीरपायी, शिरःस्नायी।

७॰ ५॰ ७॰ ॰१॰ ॰१॰

सुपि मन्यतेरात्ममाने खश् च ॥ ७५१ ॥

सुबन्ते उपपदे मन्यतेः खश् चात् णिनिः स्यात् आत्मकर्मकमाने। आत्मानं पण्डितं मन्यते इति वाक्ये खशि खित्त्वेन मुमि पण्डितम्मन्यः। गवि उपपदे द्वितीयैकवचनरूपे अमि (२०८ सू॰) आत्वे गाम्मन्यः, इयङि श्रियम्मन्या। उवङि सुभुवम्मन्या। पण्डितमानी, गोमानी।

७· ५· १·
**सुपि जनेर्डः ॥ ७५२ ॥**

सुबन्ते उपपदे जनेः डः स्यात्। अजः, अग्रजः, द्विजः। सरसिजः, मनसिजः। वक्ष्यमाणेन अलुक्समासः। पङ्कजः, संस्कारजः, पुण्यजः, प्रजा।

५· ·१·
**जीर्य्यतेरतृन् ॥ ७५३ ॥**

जीर्य्यतेः अतृन् स्यात्। ऋणौ इतौ। जरन्, जरती। शतरि तु जीर्य्यन् जीर्य्यन्ती इति स्यात्।

७· ५· १· ७·
**करणे यजेर्णिनिर्भूते— ॥ ७५४ ॥**

करणे उपपदे धातोः अतीते अर्थे णिनिः स्यात्। सोमेन इष्टवान् सोमयाजी, राजसूययाजी।

७· ५·
**कर्मणि हन्तेः— ॥ ७५५ ॥**

कर्मणि उपपदे भूते हन्तेः णिनिः स्यात्। शत्रुघाती।

७ः· ·१·
**ब्रह्मभ्रूणवृत्रेषु क्विप् ॥ ७५६ ॥**

एषु कर्मसु उपपदेषु हन्तेः भूते क्विप् स्यात्। इकपाः इतः। ब्रह्महा, भ्रूणहा, वृत्रहा। सामान्यतः क्विपि प्राप्ते अपि ब्रह्मादिषु एव क्विप् एव इति नियमार्थम् इदम्।

७ः· ५·
**सुकर्मपापपुण्यमन्त्रेषु कृञः ॥ ७५७ ॥**

एषु कर्मसु उपपदेषु कृञः भूते क्विप् स्यात्। सुकृत्, कर्मकृत्, पापकृत्, पुण्यकृत्, मन्त्रकृत्। अत्र स्वादिषु एवेति

नियमाभावात् भाष्यकृत् शास्त्रकृत् इत्यादौ सामान्यतः क्विँप् स्यात् एव । भूतार्थम् एव तु सूत्रम् ।

७· ५· ७· ·१· ५·

**सोमे सुञोऽग्नौ च चिनोतेः ॥ ७५८ ॥**

सोमे कर्मणि, सुञः, अग्नौ च कर्मणि, उपपदे चिनोतेः भूते क्विँप् स्यात् । सोमसुत्, अग्निचित् ।

७· ५· १· ७·

**कर्मणि विक्रिय इनिः कुत्सिते ॥ ७५९ ॥**

कर्मणि उपपदे विपूर्वात् क्रीणातेः इनिः स्यात्, भूते कुत्सिते अर्थे गम्ये । सोमविक्रयी, मद्यविक्रयी ।

५· ·१· ७:·

**धातोस्तृन् तच्छीलतद्धर्मतत्साधुकारिषु ॥७६०॥**

एषु अर्थेषु धातोः तृन् स्यात् । नः इत् । कटं कर्त्ता । तृणः शीलार्थकतया न कर्मणि षष्ठी * । एते च अर्थाः उत्तरत्र सर्वत्र अनुवर्त्याः ।

**अलंनिराकृञ्प्रजनोत्पतोन्मदरुचपत्रपवृत-**

५:· १

**वृधसहचरिभ्य इष्णुः ॥ ७६१ ॥**

प्रागुक्तेषु अर्थेषु एतेभ्यः इष्णुः स्यात् । अलङ्करिष्णुः । निराकरिष्णुः । प्रजनिष्णुः इत्यादि ।

५:· ·१· ६· ·१· ·१ ·१·

**ग्लाभूस्थाजिभ्यः स्नुक् स्नस्तु नेत् ॥ ७६२ ॥**

---

* न लोकाव्ययनिष्ठाखलर्थतृनामिति २।३।६७ सू० पाणिनिना षणत्वस्य निर्देशेन तृन्प्रत्याहारस्य ग्रहणस्य सूचनाय तन्मध्ये शीलार्थतृणः सत्त्वात् तदनुरोधेन शीलार्थतृणि न षष्ठी इति वक्तव्यसूत्रेण षष्ठीनिषेधः ।

एभ्यः स्नुक् स्यात्, तिष्ठतेस्तु ईत्त्वं न। कः इत्। ग्लास्नुः।
भुवः स्नुकि वलादिनिमित्ते इटि प्राप्ते।

५· ६· ६· ·१··१·

श्र्युकः क्डितः कितो नेट् * ॥ ७६३ ॥

श्रिञः उगन्तात् च परस्य कित्संज्ञस्य क्डितः स्थाने इट्
न स्यात्। भूष्णुः। स्थास्नुः। जिष्णुः।

५· १·

त्रसिगृधिधृषिक्षिपः क्नुः ॥ ७६४ ॥

पूर्वार्थेषु एभ्यः क्नुः स्यात्। कः इत्। त्रस्नुः, गृध्नुः †,
धृष्णुः, क्षिप्णुः।

५:

संपृच्संसृजयुजविविचत्यजरुजभुजभजिभ्यो

·१·

घिनुँण् ॥ ७६५ ॥

एभ्यः घिनुँण् स्यात्। उघणाः इतः। घित्वात् चजोः
कुत्वम्। सम्पर्की, समर्गी, योगी, विवेकी, त्यागी, रोगी,
भोगी, भागी।

५:· १·

जुक्रमुद्रुज्वलशुचक्रुधमण्डनार्थेभ्यो युः ॥७६६॥

ज्वादेः भूषणार्थात् च युः स्यात्। योः अनादेशे जवनः,

* श्रिसाहचर्य्यात् एकाचः एव ग्रहणं, तेन जागर्त्तेः न
निषेधः। ततश्च इटि निपातनात् गुणे जागरितमिति—

† त्रसगृधधृषां सेट्कत्वे अपि वक्ष्यमाणेन वश्चादेः इत्य-
नेन सूत्रेण इड्निषेधः।

संक्रमणः । सरणः । ज्वलनः । शोचनः । क्रोधनः । कोपनः । मण्डनः ।

५ः    १

लषपतपदस्थाभूवृषहनकमगमिभ्य उकञ् ॥ ७६७ ॥

एभ्यः उकञ् स्यात् । ञः इत् । लाषुकः, पातुकः, पादुकः, स्थायुकः, वर्षुकः, घातुकः, इत्यादि ।

५ः    १

प्रजुजिदृक्षिविश्रिपरिभूप्रसुभ्य इनिँः ॥ ७६८ ॥

एभ्यः इनिँः स्यात् । इकारः इत् । प्रजवी । जयी । दरी । क्षयी । विश्रयी । परिभवी । प्रसवी ।

५ः    १

स्पृहिगृहिपतिदयिनिद्रातन्द्रिभ्य आलुः ॥७६९॥

एभ्यः आलुः स्यात् । स्पृहयालुः, दयालुः, निद्रालुः ।

सृघस्यदः क्मरः ॥ ७७० ॥

एभ्यः क्मरः स्यात् । कः इत् । सृमरः । घस्मरः । अद्मरः ।

५  १   ५  १    ७

भासमिदो घुरो भन्जेस्तु कर्मकर्त्तरि ॥७७१॥

प्रागर्थेषु आभ्यां घुरः स्यात्, भन्जेस्तु कर्मकर्त्तरि । घः इत् । भासुरः, मेदुरः । घित्वात् जस्य गत्वे भङ्गुरः ।

५   १   ७

विदिभिदिच्छिदेः कुरः कर्त्तरि ॥ ७७२ ॥

एभ्यः कर्त्तरि वाच्ये प्रागर्थेषु कुरः स्यात् । कः इत् । विदुरः । भिदुरः । छिदुरः ।

५ः १०

इण्नशजिगमिभ्यः क्वरप् ॥ ७७३ ॥

इणादिभ्यः क्वरप् स्यात्। ककपाः इतः। पित्वात् तुकि पित्वात् स्त्रियाम् ईपि इत्वरी। नश्वरः, जित्वरः। मस्य-लोपे तुकि गत्वरः।

५० १०

जागृयङन्तयजजपदंशे ऊकः ॥ ७७४ ॥

प्रागर्थेषु एभ्यः ऊकः स्यात्। जागरूकः। यायजूकः। जंजपूकः। दंदशूकः।

५० १०

नमिकम्पिस्म्यजसकमहिंसदीपो रः ॥७७५॥

प्रागुक्तार्थेषु एभ्यः रः स्यात्। नम्रः। कम्प्रः। स्मेरः। नञ्-पूर्वः जसिः क्रियासातत्ये अजस्रः। कम्रः। हिंस्रः। दीप्रः।

५० १०

सनन्ताशंसभिक्ष उः ॥ ७७६ ॥

एभ्यः उः स्यात्। चिकीर्षुः। जिगमिषुः। आशंसुः। भिक्षुः।

१ः

विन्दूच्छू ॥ ७७७ ॥

एतौ उप्रत्ययान्तौ निपात्यौ।

७ः ५० १०

शंविप्रेषु भुवो डुः ॥ ७७८ ॥

एषु उपपदेषु भुवः डुः स्यात्। डः इत्। शम्भुः। विभुः। प्रभुः।

५० १ः

भियः क्रुक्लुकक्नुकाः ॥ ७७९ ॥

विभेतेः एते स्युः । क्रः इत् । भीरुः । भीरुकः । भीलुकः ।

५· १·
## स्थेशभासो वरः ॥ ७८० ॥

एभ्यः वरः स्यात् । स्थावरः । ईश्वरः । भास्वरः ।

इति कर्त्तृकृदन्तप्रकरणम् ।

# निष्ठाकृदन्तप्रकरणम् ।

५· १· ७·
## धातोर्निष्ठा भूते ॥ ७८१ ॥

भूते काले धातोः निष्ठा ( क्तक्तवतू ) स्यात् । उक्तौ इतौ । तत्र भावकर्मणोरेव इत्युक्तेः भावकर्मणोः क्तः । क्तवतुस्तु कर्त्तरि एव कर्त्तरि कृत् इत्युक्तेः । तत्र भावक्तान्तस्य नपुंसकता । विद्-भावे क्ते इटि विदितम्, कर्मणि विदितः, क्तवतौ विदितवान् (७६२ सू॰) इड् निषेधे श्रि-श्रितः । यु-युतः । हु-हुतः । भू-भूतः । ह्व-ह्वतः । कृ-कृतः । गॄ-इरि ।

५· ६· १· ६· ·१· ६· ६·
## रदाभ्यां निष्ठातो—नः—पूर्वस्य च दोऽमदेः ॥ ७८२ ॥

रेफदकाराभ्यां परस्य निष्ठातकारस्य स्थाने नः स्यात्, निष्ठातः पूर्वस्य धातोः दस्य च नः स्यात् । इति रपरतया णत्वे दीर्घे गीर्णः, शॄ-शीर्णः ।

५· ५· ५· ५· ५ः ·१·
## संयोगादेरातो धातोर्यण्वतः ल्वादिभ्यश्च ॥ ७८३ ॥

संयोगादेः यण्वतः आदन्तात् धातोः, ल्वादिभ्यश्च परस्य

निष्ठातस्य नः स्यात्। म्यानः। द्राणः। ग्लानः। त्यादयस्तु (सि० उ० २६५ पृ०) द्रष्टव्याः। लूनः। दूनः।

५० ५० ०१० ५०

ओदितः क्षियश्च दीर्घात्— ॥ ७८४ ॥

धातुपाठे ओकारेतः धातोः (डीभुजप्रभृतेः) दीर्घान्तात् क्षियश्च परस्य प्रागुक्तं स्यात्। ओडी-उड्डीनः। भुजो जस्य गत्वे भुग्नः। संयोगाद्यसलोपे मस्ज-मग्नः। दीर्घात् इत्युक्तेः क्षियः दीर्घः अपि क्षीणः।

५० ७०

दिवोऽजिगीषायाम् ॥ ७८५ ॥

अजिगीषावृत्तेः दिवः परस्य प्रागुक्तं स्यात्। इति निष्ठातस्य नत्वे ऊठि-आद्यूनः औदरिकः। अन्यत्र द्यूतम्।

५०० ०१० ५० ०१० ७०

नुदघ्राघ्राक्षीभ्यो वा विदस्तु धनप्रतीतयोः ॥ ७८६ ॥

नुदादेः परस्य प्रागुक्तं वा स्यात्, विदस्तु धनविख्यातयोः। नुन्नः नुत्तः। त्राणः त्रातः। घ्राणः घ्रातः। क्षीणः क्षीतः। वित्तं धनं, वित्तः ख्यातः। अन्यत्र विन्नः।

१० ७० १० ७०

भित्तं शकले ऋणमाधमर्ण्ये ॥ ७८७ ॥

एतयोः अर्थयोः एतौ निपात्यौ। अन्यत्र भिन्नम्। ऋतम्।

५० १० ५० १० ५००१० १०

शुषः कः पचो वः क्षायस्य मः ॥ ७८८ ॥

शुषः परस्य निष्ठातस्य कः, पचः परस्य वः, क्षायः परस्य च मः स्यात्। शुष्कः। पक्वः। क्षामः।

५·    १:·
अनुपसर्गात् फुल्लोत्फुल्लसंफुल्लक्षीबकृशाः
१· ·१· ७·
निर्वाणस्त्वावाते ॥ ७८९ ॥

अनुपसर्गात् एते निपात्यन्ते । क्तवत्वेकदेशतकारस्य अपि इदम् । फुल्लः फुल्लवान् । क्षीबः मत्तः । कृशः तनुः । निर्वाणः दीपः । वाते तु निर्वातः । उपसर्गे तु ञि फला विसरणे इत्यस्य आकारेत्त्वात् ।

५· ६· ·१··१· ७: ·१·
आदितो निष्ठाया नेट् भावादिक्रिययोस्तु
·१·
वा ॥ ७९० ॥

आकारेतः परस्य निष्ठायाः स्थाने इट् न स्यात्, भावार-भक्रियार्थयोस्तु वा । इति इड्निषेधे ।

६: ६· ·१· ७· ७·
चरफलोरत उत् ति किति ॥ ७९१ ॥

चरफलोः अकारस्य उत् स्यात् तादौ किति परे । इति उकारे प्रफुल्तः प्रफलितः फलितुम् आरब्धवान् । भावे तु प्रफुल्तम् प्रफलितम् । प्रफुल्तराजीवमिवाङ्कमध्ये * इत्यत्र तकारमध्यः एव पाठः । लोध्रद्रुमं सानुमतः प्रफुल्लम् इत्यत्र तु फुल्ल विकाशे इत्यस्य पचाद्यचि रूपम् । उदादेस्तु विशेषात् उत्फुल्लः संफुल्लः इति ।

* प्रफुल्तराजीवम् इत्यत्र कर्त्तरि निष्ठायाम् आदितः इत्यादिना इड् निषेधः ।

५॰ ६॰ ॰१॰॰१॰

**श्वयतीदितो निष्ठाया नेट्— ॥ ७९२ ॥**

श्वयतेः ईकारितश्च परस्याः निष्ठायाः इट् न स्यात्। श्वि-धातोः सम्प्रसारणे ओकारित्वात् तस्य नत्वे शूनः। मदी-मत्तः।

५॰ ५॰

**विकल्पितेट्कात् पतिदरिद्रानिष्कुषः ॥ ७९३ ॥**

पत्यादिवर्जात् विकल्पितेट्कात् धातोः परस्याः निष्ठायाः इट् न स्यात्। वृतू-वृत्तः। क्लृपू-क्लृप्तः। पत्यादेस्तु पतितः, दरिद्रितः, निष्कुषितः।

५ः ६ः ॰१॰ ५॰ ॰१॰

**वसतिक्षुधिभ्यां क्त्वानिष्ठयोरिट्—लुभस्तु**

७॰

**मोहने ॥ ७९४ ॥**

आभ्यां परयोः क्त्वानिष्ठयोः इट् स्यात्, लुभस्तु विमोहने अर्थे। वस-उषितः। क्षुध-क्षुधितः। लुभ-लुभितः, गार्द्धे तु लुब्धः।

५ः ॰१॰

**पूङ्क्लिशिभ्यां वा ॥ ७९५ ॥**

आभ्यां परयोः क्त्वानिष्ठयोः वा इट् स्यात्। पूङः (२३५ सू॰) कित्त्वाभावे पवितः, पक्षे पूतः। क्लिशितः क्लिष्टः। (२१३ सू॰) अकित्त्वे शयितः सुवेदितः। धर्षितः। मृष-मर्षितः क्षान्तौ, अन्यत्र अपमृषितम्।

७॰ ७॰ ॰१॰ १॰

**आरम्भक्रियायां कर्त्तरि च क्तः ॥ ७९६ ॥**

आरम्भार्थक्रियावृत्तिधातोः कर्त्तरि चात् भावकर्मणोः क्तः

स्यात्। खिदा-खेदितः खिन्नः। भिदा-भेदितः भिन्नः भेदितुम् आरब्धवान् इत्यर्थः। (३३४ सू०) पक्षे कित्त्वाभावे द्योतितम् द्युतितम्। तत्र प्रबृवतः इत्युक्तेः रुदितम्, विदितम्।

६· १· ७·

**णेर्लोपो निष्ठायाम् ॥ ७६७ ॥**

निष्ठायां परतः णेः लोपः स्यात्। भावितः।

• क्षुब्धो मन्थे ह्रुदि स्वान्तं ध्वान्तं तमसि साध्यते।
लग्नं सक्ते भृशे वाढं म्लिष्टमस्पष्टवाचकम्।
धृष्टोऽलज्जे विशस्तः स्यात् पक्षे विशसितो भवेत्।
दृढः स्थूले बलवति प्रभौ परिवृढो मतः।
कष्टं कृच्छ्रेऽतिगहने समीपेऽभ्यर्णमिष्यते।
वर्त्तिर्वृत्तमध्ययने श्रृतं पक्के निपात्यते।
णिजन्तस्य दमादेस्तु दान्तशान्तौ विभाषया।
पूर्णं स्पष्टं तथा छन्नं ज्ञप्तं पक्षे यथायथम्।
प्यायः पीनं तु निष्ठायां स्फायः स्फीतं तथा भवेत्।
हृषेर्लोमनि हृष्टं स्याद् दन्ते तु हृषितं मतम्।
त्वरितं तु त्वरेस्तूर्णं रुष्टं च रुषितं रुषेः।
निष्णातश्च नदीष्णातः स्नातेः स्यात् कुशलार्थके।

६:· ·१· ७· ७· ६· ·१·

**द्यतिस्यतिमास्थामित् ति—किति—शस्तु**

·१·

**वा ॥ ७६८ ॥**

तादौ किति परे एषाम् आकारः अन्तादेशः स्यात्, शयतेस्तु वा। दो-दितः। सो-सितः। मा-मितः। स्था-स्थितः। शो-शितः शातः।

६· १·
दधातेर्हिः ॥ ७९९ ॥

तादौ किति परे दधातेः हिः स्यात्। हितः।

६· ·१· ५··१· ·१· ६··१· १·
दो ददुपसर्गाचस्तु तुँश् इकस्तु दीर्घः ॥८००॥

तादौ किति परे दा इत्यस्य दत् स्यात्, उपसर्गाचः परस्य तु तुँश् स्यात्, तस्मिन् सति च इगन्तस्य उपसर्गस्य दीर्घः स्यात्। उशौ इतौ। शित्त्वात् सर्वादेशः। दत्तम्। प्रत्तम् आत्तम्। नीत्तम् वीत्तम्।

अवदत्तं विदत्तञ्च प्रदत्तञ्चादिकर्मणि।
सुदत्तमनुदत्तञ्च निदत्तं वा निपात्यते॥

६· १· ७· ·१· ७·
अदो जग्धिँल्यपि चानोदने * ॥ ८०१ ॥

ओदनभिन्ने अर्थे तादौ किति ल्यपि च परे अदः जग्धिँः स्यात्। इकारः इत्। जग्धम्। ओदने तु अन्नम्।

गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्य्य-
५ः· ७· ·१· १·
तिभ्यः कर्त्तरि च क्तः ॥ ८०२ ॥

एभ्यः कर्त्तरि भावकर्मणोश्च क्तः स्यात्। अकर्मकत्वेन प्राप्ते अपि आधारस्य कर्मसंज्ञया सकर्मकत्वेन अप्राप्तौ शीङा-दीनां पृथक् ग्रहणम्। ग्रामं गतः। गत्यर्थग्रहणे प्राप्त्यर्थस्य अपि ग्रहणम् इति प्राप्तः। ग्लानः। भूतः। श्रियम् आश्लिष्टः।

* अनोदने इति निष्ठाविषयं क्तिल्यपोः तद्वाचकत्वाभा-वात्।

शय्याम् अधिशयितः। आसनम् अधिष्ठितः। नृपम् उपासितः। रजनीम् उपोषितः। अग्रजम् अनुजातः। अश्वम् आरूढ़ः। देहम् अनुजीर्णः। भावकर्मणोस्तु यथायथम् ऊह्यम्।

५ः　१·　　७· १·

## स्थैर्य्यगतिभोजनार्थेभ्यः क्तोऽधिकरणे च ॥८०३॥

• स्थैर्य्याद्यर्थेभ्यः धातुभ्यः अधिकरणे, यथाप्राप्तं कर्मभावयोः, कर्त्तरि च क्तः स्यात्।

गुरोः स्थितमिदं तस्य यातमासनमन्तिके।
भुक्तं भाजनमस्येदं मनसा तं सदा भज ॥

यथाप्राप्तम् अपि भावादौ।

५·　　५ः· १·　　७· १·

## ञीत इच्छाबुद्धिपूजार्थेभ्यस्च वर्त्तमाने क्तः ॥८०४॥

गणे ञिकारेतः धातोः अभिलाषाद्यर्थेभ्यश्च वर्त्तमाने क्तः स्यात्। भूते इति अस्य अपवादः। ञि इन्धी इद्धः। अत्रा-कर्मकत्वात् कर्त्तरि क्तः। सताम् इष्टः-मतः बुद्धः विदितः इष्यमाणः इत्याद्यर्थः। अत्र कर्मणि क्तः। कर्त्तरि तु न इष्यते।

श्विलितो रक्षितः चान्त आक्रुष्टो जुष्ट इत्यपि।
रुष्टश्च रुषितश्चोभावभिव्याहृत इत्यपि।
हृष्टतुष्टौ तथा क्रान्तस्तथोभौ संयतोद्यतौ।
वर्त्तमानेऽपि कालेऽमी यथाप्राप्तेऽप्यनेहसि।

इति निष्ठाक्तदन्तप्रकरणम्।

## कर्मादिष्ट्रदन्तप्रकरणम् ।

५· ७· १·

**धः कर्मणि ष्ट्रः— ॥ ८०५ ॥**

कर्मणि वाच्ये धेटः धाञश्च ष्ट्रः स्यात् । धः इत् । षित्वात् स्त्रियाम् ईपि धात्री ।

५ः

**दोनीशसयुयुजस्तुतुदसिहपतदन्शनहिभ्यः**

७·

**करणे— ॥ ८०६ ॥**

- करणे वाच्ये एभ्यः ष्ट्रः स्यात् । दात्रम् । नेत्रम् । शस्त्रम् योत्रम् । योक्त्रम् । स्तोत्रम् । तोत्त्रम् । मेढ्रम् । पत्त्रम् । दंष्ट्रा, अत्र अजादित्वात् न ईप् । नद्ध्री ।

७· १·

**हलशूकरमुखे पोत्रम् ॥ ८०७ ॥**

हलस्य शूकरस्य च मुखे अर्थे पोत्रं निपात्यते ।

५ः १·

**अर्त्तिपूलूधूखनिचरिभ्य इत्रः ॥ ८०८ ॥**

एभ्यः करणे इत्रः स्यात् । अरित्रम् । पवित्रम् । लवित्रम् । धवित्रम् । खनित्रम् । चरित्रम् ।

६· १ः ७·

**लटः शतृँशाना—वप्रथमान्तार्थाभेदे ॥८०९॥**

अप्रथमान्तार्थेन अभेदान्वये सति लटः शतृँशानौ स्याताम् । तत्र परस्मैपदस्थाने शता आत्मनेपदस्थाने च शानः । ऋमौ इतौ । तेन शत्रादि । पचन्तं पश्य । पचता

दृश्यते। गच्छते ददाति। चलतः पतति। अर्जयतः धनम्। गच्छति जने चेष्टा।

६· ७· ·१·

## अत आने मुँक्* ॥ ८१० ॥

अदन्तस्य अङ्गस्य मुँक् स्यात् आने परे। पचमानं पश्य।

१ः ७· ·१·

## सदादयः प्रथमान्तार्थाभेदेऽपि— ॥ ८११ ॥

सन् ब्राह्मणः। विदन् विप्रः।

७· ·१·

## सम्बोधने च ॥ ८१२ ॥

सम्बोधनार्थकप्रथमान्तार्थाभेदे अपि शतृशानौ स्तः। हे पचन्, हे गच्छन्, हे पचमान।

७ः ६·

## लक्षणहेत्वोः क्रियायाः ॥ ८१३ ॥

क्रियायाः परिचायके हेतौ च अर्थे प्रथमान्तार्थाभेदे अपि तौ स्तः। शयाना यवना भुञ्जते। पठन् छात्रः याति। अर्जयन् वसति। ईश्वरं ध्यायन् मुच्यते। कृतः नस्य णत्वे प्रणीयमाणः इत्यादि।

५· ६· ·१·

## आस आनस्येत् ॥ ८१४ ॥

आसः परस्य आन इत्यस्य आदेः ईत् स्यात्। आसीनः।

५· ६· १· ·१·

## विदेः शतुर्वसुँर्वा ॥ ८१५ ॥

---

* अतः इति अङ्गस्य विशेषणं, तेन १४५ सू० प्रकृतेरिव विकरणस्य अपि अङ्गसंज्ञाविधानात् पचमानम् इत्यत्र शविकरणयुक्तपचः अङ्गत्वात्, तस्मात् अदन्तात् परस्य मुक्।

विदेः परस्य शतुः स्थाने वसुँः वा स्यात्। उः इत्। विद्वान्, विदन्।

७ः ५॰ ॰१॰ १॰

**ताच्छील्यवयोवचनशक्तिषु पूङ्यजश्च शानः ॥ ८१६ ॥**

एषु अर्थेषु धातुमात्रात्, पूङ्यजिभ्याञ्च अन्यार्थे अपि शानः स्यात्। शत्रपवादः। भोग्यं भुञ्जानः। कवचं बिभ्राणः। शत्रुं निघ्नानः। पवमानः। यजमानः।

अर्हन् पूज्ये द्विषन् शत्रौ सुन्वन् यज्ञक्रियावति।

६॰ १ः ७॰ ७॰ ॰१॰

**लृटः स्यतँस्यमानौ क्वचित् तुमर्थे च ॥ ८१७ ॥**

लृटः स्थाने स्यतँस्यमानौ स्तः, क्वचित् तुमर्थे च। ऋकारः इत्। करिष्यन् करिष्यमाणः। पक्ष्यन् याति पक्तुं याति इत्यर्थः।

६॰ १ः

**लिटः क्वँसुकानौ ॥ ८१८ ॥**

लिटः स्थाने क्वँसुकानौ स्याताम्। उकौ इतौ। लिट्-स्थानित्वेन अमुं विहाय सर्वं द्वित्वादि कार्य्यम्। बुभू-वान्। तुष्टुवान्।

६॰ ५ः ॰१॰ ५॰ ॰१॰

**वसोरेकाजाद्घसिभ्य इट् गमहनविदृदृशस्तु वा ॥ ८१९ ॥**

॰१॰

एभ्यः परस्य वसोः स्थाने इट् स्यात्, गमादेस्तु वा। वशा-दित्वतया इटः निषेधेः अनेन प्रतिप्रसवः। एकाचः आरिवान्,

पेचिवान्, पेतिवान्। आतः ददिवान्। घस-जक्षिवान्। गम-जग्मिवान् जगन्वान्। हन-जघ्निवान् जघन्वान्। विद-विविदिवान् विविद्वान्। दृश-ददृशिवान् ददृश्वान्।

१:· ७·

## गमिगाम्यादयो भविष्यति ॥ ८२० ॥

गमिप्रभृतयः भविष्यति स्युः। गमी गामी भावी।

१:· ७·

## भीमादयोऽपादाने ॥ ८२१ ॥

बिभेति अस्मात् भीमः। भीषयते अस्मात् भीषः प्रस्कन्दनः। रक्ष्यते यस्मात् रक्षः।

१: ७· ७· ७·

## तुमुँन्वुणौ क्रियार्थायां क्रियायां भावे

७·

## समानकर्त्तृकत्वे ॥ ८२२ ॥

भावे वाच्ये समानकर्त्तृकत्वे द्योत्ये क्रियार्थक्रियावृत्ति-धातोः तुमुँन्वुणौ स्याताम्। उनणाः इतः। अन्नं भोक्तुं पचति, भोजनार्थकः पाकः एककर्त्तृकश्च इत्यर्थः। एवं नृपं सेवितुं याति। वोः अकादेशे देवं दर्शकः याति। अन्य-कर्त्तृके तु न।

७:· ७:· ·१·

## इच्छार्थेषु समानकर्त्तृकेषु तुमुँन्— ॥ ८२३ ॥

इच्छार्थेषु एककर्त्तृकेषु उपपदेषु धातोः तुमुँन् स्यात्। अक्रियार्थः अयम् आरम्भः। इच्छति भोक्तुम् वाञ्छति भोक्तुम्।

७:·

## शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु ॥ ८२४ ॥

एषु उपपदेषु धातोः तुमुँन् स्यात्। शक्नोति भोक्तुम्। धृष्णोति जानाति ग्लायति घटते रभते लभते क्रमते सहते अर्हति अस्ति विद्यते वा भोक्तुम्।

७:· ७:· ·१·

## पर्य्याप्तिवचनेष्वलमर्थेषु च ॥ ८२५ ॥

पर्य्याप्तिः पूर्णता, तदर्थेषु सामर्थ्यवचनेषु च उपपदेषु धातोः तुमुँन् स्यात्। अक्रियार्थः अयम् आरम्भः। पर्य्याप्तः प्रवीणः कुशलः पटुः वा भोक्तुम्। अलं भोक्तुम्।

७:· ·१·

## कालसमयवेलासु च ॥ ८२६ ॥

एषु उपपदेषु धातोः तुमुँन् स्यात्। कालः भोक्तुं, समयः भोक्तुं, वेला भोक्तुम् *।

१:· ७· ७· ७·

## वञादयो भविष्यति क्रियार्थायां क्रियायाम् ॥ ८२७ ॥

वक्ष्यमाणाः घञादयः भविष्यति काले क्रियार्थक्रियावृत्तिधातोः स्युः। यागाय याति यष्टुं याति इत्यर्थः। यजनाय याति यष्टुं याति इत्यर्थः।

५· ·१· ७·

## पदरुजविशस्पृशो घञ्—कर्त्तरि— ॥८२८॥

एभ्यः कर्त्तरि वाच्ये घञ् स्यात्। घञौ इतौ। पद्यते

---

* कालादीनाम् उपपदत्वे अपि तुमनः अमन्तत्वाभावात् न समासः अमन्ताव्ययस्य एव उपपदसमासस्य वक्ष्यमाणत्वात्।

इति पादः । रुजति इति रोगः । वध्नाति इति वध्रः । स्पृशति इति स्पर्शः ।

५· ७· ७:· ·१·

सरतेः स्थिरे व्याधिमत्स्यबलेषु च ॥८२९॥

स्थिरे कर्त्तरि व्याध्यादिषु अर्थेषु च सरतेः घञ् स्यात् । सरति कालान्तरम् इति सारः । व्याधौ अतीसारः । विसारः मत्स्यः । सारः बलम् ।

७· ७· ·१· ७· १:·

भावे—ऽकर्त्तरि—च कारके—घञादयः ॥८३०॥

भावे कर्त्तृभिन्नकारके च वाच्ये घञादयः स्युः । पाकः । त्यागः । रज्यते अनेन इति रागः । प्रास्यते इति प्रासः । लभ्यते इति लाभः लभ्यम् इत्यर्थः । शमः क्रमे शमः । कामादेस्तु कामः, आचामः, वामः ।

५· ·१· ७· ५· ·१·

धातोर्घञ् उपसर्गे रुवश्च ॥ ८३१ ॥

धातुमात्रात्, उपसर्गे उपपदे रौतेश्च घञ् स्यात् । घञौ इतौ । रौतेः अपः अपवादः । ह्रासः । सन्तानः । दायः । सम्प्रदायः । संरावः, विरावः, आरावः ।

७· ५· ५· ·१· ७· ७:

अनुपसर्गे श्रिनीभुवो नियस्त्वाङि उत्प्रयोः

५: ·१·

श्रिभूभ्यां वा ॥ ८३२ ॥

उपसर्गोपपदाभावे एभ्यः, आङि नियश्च घञ् स्यात्, उदि तु श्रियः, प्रे च भुवः वा स्यात्, पक्षे यथाप्राप्तमजपौ । श्रायः । नायः । भावः । उपसर्गे तु विभवः, सम्भवः । विनयः, प्रणयः,

उपनयः। आङि तु आनायः। उदि तु श्रियः-उच्छ्रायः उच्छ्रयः। प्रे तु भुवः-प्रभावः प्रभवः।

७· ५: ५··१· ७·

प्रेस्तुस्रुभ्यां स्तॄणातेश्च छन्दोभेदगणनायाम् ॥८३३॥

प्रे उपसर्गे उपपदे आभ्यां, स्तॄणातेश्च छन्दोभेदगणनायां घञ् स्यात्। प्रस्तावः, प्रस्रावः। प्रस्तारः छन्दोभेदगणना। प्रे किम्, संस्तवः, संस्रवः, प्रस्तरः।

७: ५: ७·

उन्योः कॄगॄभ्यामसमूहे ॥ ८३४ ॥

उदि नौ च उपपदे आभ्यां घञ् स्यात्। उत्कारः, निकारः। परिभवः। उद्गारः, निगारः। अनयोः किम्, कारः गरः। समूहे तु उत्करः निकरः।

५· ·१·

एरच् ॥ ८३५ ॥

इवर्णान्तात् अच् स्यात् भावे अकर्त्तरि च कारके। चः इत्। घञः अपवादः। अत्ययः। अन्वयः। जयः। अयः। चयः। अयम् नपुंसकता लोकात्। अत्र अयं विशेषः।

इणो निपूर्वात् न्यायः स्यात् पर्य्यायस्तु परेर्मतः।
अन्यत्राचात्ययस्तस्मादन्वयप्रत्ययव्ययाः।
उपादिङोऽप्युपाध्यायो गुरौ वाच्ये घञा भवेत्।
ग्रन्थैकदेशेऽप्यध्यायस्तदन्यत्राज्विधिर्भवेत्।
आयो लाभे घञि भवेज्जाले आनाय इष्यते।

५: ·१·

ऋदुवर्णान्ताभ्यामप्— ॥ ८३६ ॥

ऋदन्तात् उवर्णान्तात् च भावे अकर्त्तरि च कारके अप्

आत् । पः इत् । घञः अपवादः । कृ—करः । गृ-गरः । ृ-मरः । यु-यवः । स्तु-स्तवः । रु-रवः । भू-भवः ।

५ः॰

ग्रहवृदृनिश्चिगमवशरणिभ्यः ॥ ८३७ ॥

एभ्यः अपि अप् स्यात् । ग्रह-ग्रहः । वृ-वरः । दृ-दरः । नि-गम-निगमः । वश-वशः । रण-रणः ।

५ः  ७॰

व्यधजपिभ्यामनुपसर्गे ॥ ८३८ ॥

उपसर्गोपपदाभावे आभ्याम् अप् स्यात् । व्यधः । जपः । उपसर्गे तु विव्याधः, उपजापः ।

१ः॰

गोचरप्रकरव्रजापणा ॥ ८३९ ॥

गोचरो विषये साध्यः सञ्चार्थे प्रकरो मतः ।
निपातनाद्व्रजो गोष्ठे हट्टे साध्यस्तथापणः ।
अन्यत्र सञ्चारः, प्रकारः ।

५॰  ॰१॰  ७॰ ॰१॰

हलो घञ् संज्ञायाञ्च ॥ ८४० ॥

हलन्तात् घञ् संज्ञायां स्यात् । रमन्ते अस्मिन् योगिनः इति रामः । अपमृज्यते अनेन इति अपामार्गः, उपसर्गस्य ।

अथ घञजपां विषयप्रदर्शनम् ।
वेः स्तृणाते शब्दभिन्नसञ्ज्ञेऽर्थे घञ् भवेत् ततः ।
विस्तारः शब्दसञ्ज्ञे तु विस्तरो विष्टरो द्रुमे ॥
निवासार्थे निकायश्चेर्निपूर्वाच्चस्य के सति ।

सङ्घार्थेऽपि तथा, देहे काय इत्यत्र घञ्विधिः ॥
अवग्राहोऽभिभवने निग्राहो बाधनार्थके ।
अवपूर्वात् वृष्टिबाधेऽवग्राहावग्रहौ ग्रहेः ॥
निवृणातेस्तु नीवारो धान्यभेदे घञिष्यते ।
उदः श्रिञो घञचौ स्त उच्छ्रायश्च तथोच्छ्रयः ॥
आङः प्लुवो घञपौ स्त आप्लावश्च तथाप्लवः ।
परिभावः परिभवः प्रग्राहः प्रग्रहस्तथा ॥
नियामो नियमो वा तूपयामोपयमौ तथा ।
निगादो निगदो ज्ञेयो निनादो निनदस्तथा ॥
निस्वानो निस्वनस्तद्वत् घञपा च विकल्पनात् ।
क्वणः क्वाणश्च वीणाजे रवे निक्वाणनिक्वणौ ॥
प्रक्वाणादिस्तथैवात्र परशब्दे क्वणादयः ।
संमदप्रमदौ हर्षे प्रमादोऽनवधानके ॥
उन्मादो रोगभेदे तु परत्रोन्मद इष्यते ।
मदो हर्षे तथा गर्वे मत्तत्वे माद इष्यते ॥
आहावस्तु निपाने स्यात् युद्धे चाऽऽहवमिष्यते ।
आङि ह्वेञो निपात्येते घञपा च क्रमात्तु तौ ॥
ताभ्यां घातो बधो हन्तेर्मूर्त्तौ तु घन इष्यते ।
अगारस्यैकदेशे च प्रघाणप्रघणौ मतौ ॥
उद्घनः काष्ठभेदेऽस्त्रेऽपघनो देहवाचकः ।
द्रुघणो मुद्गरार्थे च करणार्थे त्वयोघनः ॥
स्तम्भघ्नः स्यात् स्तम्भघनः परिघश्चास्त्रभेदके ।
उपघ्न आश्रयार्थे स्यात् सङ्घोद्घौ गणप्रशस्तयोः ॥
कान्ता घान्ता घञन्ताश्च हन्तेरेते निपातिताः ।
स्फारः स्फुरेर्घञि भवेत् स्फुलेः स्फालस्तथा भवेत् ।
स्यदः स्यन्देर्जवे वाच्ये एध इन्धेश्च दारुणि ॥

५· ·१· ७· ७· ·१· ७·
धातोर्ल्युड् भावेऽकर्त्तरि च—कारके ॥८४१॥

भावे अकर्त्तरि च कारके धातोः ल्युट् स्यात् । लटौ इतौ । योः अनादेशे भवनम्, करणम्, जननम् ।

१:· १:·
किरणलेखन्युपोषणादयो निपात्याः ॥८४२॥

• एते ल्युडन्ताः निपात्यन्ते । कीर्य्यते इति किरणः । लिख्यते अनया लेखनी । उपोष्यते उपोषणम् ।

५· ७· १· ५· ७· १· ·१·
ड्वितो भावे क्त्रिस्ततो निर्वृत्ते मश्च ॥८४३॥

गणपाठे डुकारितः धातोः भावे क्त्रिः स्यात्, तदन्तात् च निर्वृत्ते अर्थे मः स्यात् । कः इत् । डुपचा पक्त्रिमः पाकनिर्वृत्तः इत्यर्थः । एवं डुदा दत्रिमः दाननिर्वृत्तः । डुकृ कृत्रिमः ।

७· १· ७·
ट्वितोऽथुर्भावे— ॥ ८४४ ॥

भावे वाच्ये गणपाठे टुकारितः धातोः अथुः स्यात् । टुवेपवेपथुः । टुवम-वमथुः ।

५:· ·१· ·१·
यजयाचयतप्रच्छस्वपिभ्यो नङ् न सम्प्रसा-
१· ·१·
रणञ्च ॥ ८४५ ॥

एभ्यः भावे नङ् स्यात्, तस्मिन् च न सम्प्रसारणम् । ङः इत् । यज-यज्ञः याच्ञा यत्नः । ( ५४६ सू० ) कृस्य गत्वे प्रश्नः ङित्त्वे अपि न सम्प्रसारणम् । स्वप्नः ।

७· ७··१·५· १·

## उपसर्गेऽन्तरि च घोः—किः ॥ ८४६ ॥

भावे वाच्ये उपसर्गे अन्तरि च उपपदे घुसंज्ञकात् धातोः किः स्यात्। कः इत्। आधिः। व्याधिः। सन्धिः। उपाधिः। अन्तर्धिः।

७· ७·

## कर्मण्यधिकरणे ॥ ८४७ ॥

अधिकरणे वाच्ये कर्मणि उपपदे घोः किः स्यात्। जलानि धीयन्ते अस्मिन् जलधिः। सलिलधिः।

७· ७· ७··१· ७· १·

## स्त्रियां—भावेऽकर्त्तरि च कारके क्तिः—* ॥ ८४८ ॥

भावे अकर्त्तरि च कारके वाच्ये धातोः क्तिः स्यात्। तदन्तस्य स्त्रियाम्। कः इत्। कृतिः, स्मृतिः, मतिः, बुद्धिः। श्रूयते अनया इति श्रुतिः। स्तूयते अनया इति स्तुतिः। इज्यते अनया इति इष्टिः। पाणिनीये तु क्तिन् पठितः।

५ः· ६· ६· १·

## ऋल्वादिभ्यः क्तेस्तस्य नः ॥ ८४९ ॥

ऋदन्तात् ल्वादिभ्यश्च परस्य क्तेः तस्य नत्वं स्यात्। कॄ-कीर्णिः। लू-लूनिः। (सि० उ० १६५ पृ०) ल्वादि।

* क्तिन् इति पाणिनीयं, नित्प्रयोजनं लौकिके नास्ति इति इह परित्यक्तम्। एवं यदनीयरादिषु तकाररकारादयः अपि।

५: ०१०

ग्रहादिभ्यः इट् ॥ ८५० ॥

एभ्यः क्तेः इट् स्यात् । वश्यादेः इत्यादेः प्रतिप्रसवः । निगृहीतिः पठितिः भणितिः इत्यादि ।

५० ७०

स्थागापचो भावे— ॥ ८५१ ॥

• एभ्यः भावे क्तिः स्यात् । तदन्तश्च स्त्रियाम् । वक्ष्यमाणस्य असरूपस्य अपि अङः अपवादः । प्रस्थितिः । उपगीतिः । सङ्गीतिः । पक्तिः । आस्था व्यवस्था संस्था तु बाहुलकात् इति सिद्धान्तः ।

५: ०१० ७० ०१०

यजव्रजिभ्यां क्यप् संज्ञायान्तु समजनिषद-

५० ०१०

निपतमनविदसुञ्शीङ्भृञश्च ॥ ८५२ ॥

आभ्यां भावे, संज्ञायान्तु समजादिभ्यः, क्यप् स्यात् । तदन्तश्च स्त्रियाम् । कपौ इतौ । असरूपः अपि क्यप् क्तेः अपवादकः । इज्या व्रज्या । समज्या सभा निषद्या आपणः । निपत्या पिच्छिला भूमिः । मन्या ग्रीवा । विद्या । सुत्या अभिषवः । शय्या । भृत्या ।

५० १०१०

कृञः शश्च ॥ ८५३ ॥

कृञः शः, चात् क्यप्, क्तिश्च स्यात् भावे । तदन्तश्च स्त्रियाम् । शः इत् । क्रिया कृत्या कृतिः ।

१:०

इच्छापरिचर्य्यापरिसर्य्यामृगयाः ॥ ८५४ ॥

एते निपात्यन्ते ।

१· ५·

## अः प्रत्ययान्तात् ॥ ८५५ ॥

प्रत्ययान्तात् धातोः भावे स्त्रियाम् अः स्यात् । क्तेः अपवादः । चिकीर्षा । जिगमिषा । दरिद्रिषा । पुत्रकाम्या ।

५· ५· ७· ५·

## गुरुमतो हलो निष्ठायां सेटः ॥ ८५६ ॥

निष्ठायां सेट्कात् गुरुमतः हलन्तात् धातोः अः स्यात् स्त्रियां भावे । ईहा चेष्टा । सेटः किम्, दीप्तिः । गुरुमतः किम्, वित्तिः । हलः किं, नीतिः * ।

५· ५·· ·१· ·१·

## षितो भिदादिभ्यश्चाङ्— † ॥ ८५७ ॥

गणपाठे षकारेतः भिदादिभ्यश्च स्त्रियां भावे अङ् स्यात् । ङः इत् । भिदादयः ( सि० उ० स० ४५२ पृ० ) द्रष्टव्याः । क्तेः अपवादः । त्रपूष-त्रपा लज्जा । भिदा छिदा व्यथा त्वरा ।

---

* नीतिः इति प्रत्युदाहरणं कौमुदीद्वयदर्शनात् उक्तं, वस्तुतः नीधातोः निष्ठायाम् अनिट्कत्वात् अङः प्राप्तिः एव नास्ति, किन्तु दीधितिः इत्येव प्रत्युदाहरणम्, दीधीधातोः निष्ठायां सेट्कत्वेन ग्रहादित्वात् इटि दीधीवेव्योर्लोपः यिवर्णयोः इति वक्तव्यसूत्रेण ईकारलोपे तद्रूपसिद्धिः, तस्य च गुरुस्वरयुक्तत्वात् निष्ठायां सेट्कत्वाच्च अङः प्राप्तौ हल्पदेन व्युदासः ।

† षित्त्वेन एव त्वरत्यन्ता घटादयः गृहीताः, अतः न पृथगुक्ताः । अतएव पाणिनिना अथ त्वरत्यन्तास्त्रयोदश घटादयः षितश्चेत्युक्तम् । ते च (सि० उ० ८१ पृ०) द्रष्टव्याः । अत्र भिदा द्वैधीभावे एव, अन्यत्र कुड्यं भित्तिः । एवं छिदा छेदने, अन्यत्र विच्छित्तिः । व्यथा त्वरा इत्युदाहरणं षित्त्वेन प्रथमोपस्थितत्वात् पूर्वम् एव ज्ञेयम् ।

५:· ·१·

## चिन्तिपूजिकथिचर्चिभ्यश्च ॥ ८५८ ॥

एभ्यः अपि स्त्रियां भावे अङ् स्यात्। क्तेः वक्ष्यमाणस्य योश्च अपवादः। चिन्ता, पूजा, कथा, चर्चा।

५· ७· ७: ·१·

## आत उपसर्गेऽन्तरश्रदोश्च ॥ ८५९ ॥

* उपसर्गे, अन्तर्शब्दे, श्रद् शब्दे, च उपपदे आदन्तात् भावे स्त्रियाम् अङ् स्यात्। क्तेः अपवादः। प्रभा, प्रज्ञा, संज्ञा, उपदा। प्रमा, उपमा। अन्तर्द्धा, श्रद्धा।

५· ५:· ·१· १·

## णेरासवन्दिग्रन्थिभ्यश्च युः ॥ ८६० ॥

ण्यन्तात् आसवन्दिग्रन्थिभ्यश्च युः स्यात्। क्याद्यपवादः। योः अनादेशे वेदना ज्ञापना। आसना। वन्दना। ग्रन्थना।

१:· ·१· ७· ७· ·१· ·१·

## सम्पदादयश्च क्विपि क्तौ च वा ॥ ८६१ ॥

एते भावे स्त्रियां क्विपि क्तौ च वा निपात्यन्ते। सम्पत् सम्पत्तिः। विपत् विपत्तिः। आपत् आपत्तिः।

७· १:·

## रोगाख्यायां प्रच्छर्दिकादयः ॥ ८६२ ॥

एते अकान्ताः स्त्रियां निपात्यन्ते रोगसंज्ञायाम्। प्रच्छर्दिका। प्रवाहिका। विचर्चिका। स्त्रियाम् इति निवृत्तम्।

१:· ७·

## गच्छतिपच्यादयो धातुनिर्देशे ॥ ८६३ ॥

धातुनिर्देशे एते श्तिबन्ताः इकारान्ताश्च निपात्याः। गच्छतिः पचतिः पचिः गमिः इत्यादयः।

७:· ७: ·१·
ईषद्दुःसुषु—कृच्छ्राकृच्छ्रयोः—खल् ॥ ८६४ ॥

दुःखे सुखे च अर्थे गम्ये ईषद्दुःसुषु उपपदेषु धातोः खल् स्यात्। खली इतौ। भावकर्मणोः इत्युक्तेः भावे कर्मणि च खल्। ईषत्करः। दुष्करः। खित्त्वेन मुमि प्राप्ते।

६· ·१· ·१· ७·
अव्ययस्य न मुँम् खिति ॥ ८६५ ॥

खिति परे अव्ययस्य मुँम् न स्यात्। इति मुम्‌निषेधे सुकरः।

५· ६· ·१· ७: ·१· ·१·
उपसर्गात् लभेर्मुँम् खल्‌घञोर्न तु सुदु-
५:
र्भ्याम् ॥ ८६६ ॥

उपसर्गात् परस्य लभेः मुँम् स्यात्, खल्‌घञोः परयोः, न तु केवलाभ्यां सुदुर्भ्याम्। दुःप्रलम्भः सुप्रलम्भः। घञि तु उपालम्भः। उपसर्गात् किम्, ईषल्लभम् लाभः। सुदुर्भ्यान्तु दुर्लभं सुलभम्।

५· १·
आतो युः ॥ ८६७ ॥

ईषद्दुःसुषु उपपदेषु आदन्तात् युः स्यात् तयोः अर्थयोः। खलः अपवादः। ईषत्पानः, सुपानः।

५:· ·१·
शासियुधिदृशिधृषिभ्यो वा ॥ ८६८ ॥

एभ्यः युः वा स्यात्। पक्षे खल्। दुःशासनः दुःशासः।

दुर्योधनः दुर्योधः। सुयोधनः सुयोधः। सुदर्शनः सुदर्शः। दुर्धर्षणः दुर्धर्षः।

७: ७: ०१०

**अलंखल्वोः प्रतिषेधार्थयोः क्त्वा— ॥ ८६९ ॥**

निषेधार्थयोः एतयोः उपपदयोः धातोः क्त्वा स्यात्। कः इत्। अलंभुक्त्वा खलुगत्वा। भोजनगमने निषिद्धे इत्यर्थः।

७: ७० ७०

**समानकर्तृकयोः पूर्वकाले भावे ॥८७०॥**

समानकर्तृकयोः धात्वोः मध्ये पूर्वकालवृत्तिधातोः क्त्वा स्यात् भावे। भुक्त्वा व्रजति। स्नात्वा भुङ्क्ते। पक्त्वा भुङ्क्ते। भुक्त्वा शेते। द्विवचनम् अविवक्षितं, तेन स्नात्वा भुक्त्वा व्रजति। (३६२ सू०) पञ्चमवर्णलोपे देवं नत्वा स्तौति (७६३ सू०) इड्निषेधे सुखी भूत्वा स्थितः (३३३ सू०) कित्त्वाभावे शयित्वा (३२७ सू०) कित्त्वप्रतिप्रसवे क्लिशित्वा। उदित्वा। उषित्वा (३२८ सू०) कित्त्वे रुदित्वा। विदित्वा। मुषित्वा। गृहीत्वा। सुप्त्वा (३२६ सू०) वा कित्त्वे ग्रन्थित्वा ग्रथित्वा। गुम्फित्वा गुफित्वा। तृषित्वा तर्षित्वा (३३४ सू०) वा कित्त्वे द्योतित्वा द्युतित्वा।

५० ०१० ६० ०१०

**उदितो वा क्त्वा इट् ॥ ८७१ ॥**

गणपाठे उकारितः धातोः परस्य क्त्वाप्रत्ययस्य स्थाने इट् वा स्यात्। क्रमु-क्रमित्वा, पक्षे।

६० ६० १०

**अनुनासिकान्तस्य तासिसेट उपधादीर्घो-**

७० ७०

**ऽगुणे ति ॥ ८७२ ॥**

तासिसेट्कस्य अनुनासिकान्तस्य धातोः उपधायाः दीर्घः स्यात्, अगुणे तादौ परे। अनुनासिकलोपापवादः। उपधा-दीर्घं क्रान्त्वा। भ्रमु—भ्रमित्वा भ्रान्त्वा। एवं क्रान्तः क्रान्तिः भ्रान्तः भ्रान्तिः (७८५ सू०) वा इटि किच्चाभावे च पवित्वा पूत्वा।

६ः· १· ·१· ७·

**झलादिजान्तनशामुपधानलोपो वा क्त्वि ॥८७३॥**

क्त्वाप्रत्यये परे झलादेः जान्तस्य नशेश्च उपधाभूतस्य लोपः स्यात् वा। भन्ज-भक्त्वा भङ्क्त्वा। सन्ज-सक्त्वा सङ्क्त्वा। नश-नशित्वा। इडभावपक्षे (४८८ सू०) नुमि नंष्टा नष्टा नङ्ग्ध्वा नग्ध्वा। झलादेः किम्, अञ्जित्वा अङ्क्त्वा। (४०४ सू०) आत्वे खन-खात्वा खनित्वा (७८८ सू०) इत्वे दो—दित्वा स्थाः-स्थित्वा। (७८८ सू०) धाजः ह्रौ हित्वा दा-दद् दत्त्वा। (८०१ सू०) अद-जग्ध्वा।

५· १· ७

**जहातेर्हिः क्त्वि ॥ ८७४ ॥**

क्त्वाप्रत्यये परे जहातेः हि स्यात्। हित्वा।

७· ७· ६· ·१·

**अनञव्ययोपपदे समासे क्त्वो ल्यप् ॥ ८७५ ॥**

नञ्भिन्नाव्ययोपपदे क्त्वास्थाने ल्यप् स्यात्। लपौ इतौ। इति ल्यपि पित्त्वात् तुकि उपपदसमासे च प्रकृत्य * प्रस्तुत्य। अनञ् किम्, अकृत्वा। अव्ययेति किम्, परमकृत्वा। अधीत्य प्रेत्य इत्यादौ सन्धिकार्य्यदीर्घगुणयोः असिद्धत्वाश्रयणात् तुक्।

---

* प्रकृत्य इत्यादौ प्रादिसमासः, तेन असमत्वाभावे अपि न क्षतिः।

६:· १· ·१· ७·

## मान्तानिटामन्त्यलोपो वा ल्यपि ॥ ८७६ ॥

ल्यपि परे मान्तानिटां गम्यादीनाम् अन्त्यलोपः स्यात् वा। आगत्य आगम्य, प्रणत्य प्रणम्य। अनिटां किम्, प्रक्रम्य। (३६२ सू॰) अन्त्यलोपे प्रमत्य वितत्य विधाय प्रदाय। अत्र स्थानिवत्त्वाभावात् न हिददादेशौ। एवं प्रस्थाय इत्यादौ न इत्त्वम्। (४७५ सू॰) ल्यब्वर्जनात् न ईत्त्वं, प्रमाय प्रगाय।

६· ६· १· ६· ·१· ·१·

## लघुपूर्व्वस्य णेरयः प्रापेस्तु वा ॥ ८७७ ॥

ल्यपि परे लघुपूर्व्वस्य णेः अयः स्यात्, प्रापेस्तु वा। लोपापवादः। विगणय्य सङ्गमय्य। लघुपूर्व्वस्य किं, प्रधार्य्य। प्रापेस्तु प्रापय्य प्राप्य। मुखं व्यादाय स्वपिति, नेत्रे निमील्य शेते, इत्यादौ तुपूर्व्वांशकालकलायाः अभेदारोपात् ल्यप्प्रयोगः द्रष्टव्यः।

७· ·१· ·१·

## आभीक्ष्ण्ये णमुल् च ॥ ८७८ ॥

पौनःपुन्ये द्योत्ये समानकर्त्तृकयोः पूर्व्वकालवृत्तिधातोः णमुँल्, चात् क्त्वाल्यपौ यथाप्राप्तं स्याताम्। उणलाः इतः। इति णमुलि।

६· १· ७:

## सर्व्वस्य द्वित्वं व्याप्त्याभीक्ष्ण्ययोः ॥ ८७९ ॥

व्याप्त्याभीक्ष्ण्ययोः द्योत्ययोः प्रकृतिप्रत्ययसमुदायस्य द्वित्वं स्यात्। इति द्वित्वे स्मारंस्मारम् स्मृत्वास्मृत्वा। प्रपायंप्रपायम् प्रपाय। (५२७ सू॰) वा कृत्त्वे गामंगामम् गमंगमम्, पक्षे गत्वागत्वा।

७ः॰ १ः
अग्रेप्रथमपूर्वेषु क्त्वाणमुँलौ ॥ ८८० ॥

एषु उपपदेषु समानकर्त्तृकयोः पूर्वकालवृत्तिधातोः क्त्वाणमुँलौ स्याताम्। अनाभीक्ष्ण्यार्थम् आरम्भः। अग्रे भोजं अग्रेभुक्त्वा व्रजति। एवं प्रथमभोजं * पूर्वभोजं वा याति, पक्षे क्त्वा।

७ः॰ ७॰ ॰१॰ ५॰
अन्यथैवंकथमित्थंसु स्वादुमि च कृञो
॰१॰
णमुँल् ॥ ८८१ ॥

एषु उपपदेषु स्वादुमि च कृञः णमुँल् स्यात्। क्त्वाल्यपोः अपवादः। अन्यथाकारम्। एवंकारम्। कथङ्कारम्। इत्थंकारम्। स्वादोः मान्तत्वञ्च अनेन निपात्यते, स्वादुंकारम्।

७॰ ५ः ७॰
कर्मणि—दृशिविदिभ्यां साकल्ये ॥ ८८२ ॥

साकल्ये गम्ये कर्मणि उपपदे दृशिविदिभ्यां णमुँल् स्यात्। कन्यादर्शम् वरयति सर्वाः कन्याः इत्यर्थः। विप्रदर्शं भोजयति सर्वान् विप्रान् भोजयति इत्यर्थः।

७॰ ५॰
उदरे पूरेः ॥ ८८३ ॥

उदरे कर्मणि उपपदे पूरेः णमुँल् स्यात्। उदरपूरं भुङ्क्ते।

* प्रथमभोजम् इत्यत्र इव प्रथमभुक्त्वा इत्यत्र अपि उपपदसमासः, अव्ययाभ्यां तु इति वक्ष्यमाणसूत्रेण अमन्तेन तत्सदृशविधानप्रत्ययान्तेन च समासस्य वक्तव्यत्वात्।

७:   ६·
**शुष्कचूर्णरूक्षेषु पिषः ॥ ८८४ ॥**

एषु कर्मसु उपपदेषु पिषः णमुँल् स्यात्। पिषादिषु च पूर्वकालवृत्तिधातोः एव अनुप्रयोगः इति सिद्धान्तः। शुष्कपेषं चूर्णपेषं रूक्षपेषं वा पिनष्टि शुष्कादिकं पिनष्टि इत्यर्थः।

७·   ५·   ७· ·१·   ५·
**समूले हन्तेर्जीवे च ग्रहेः ॥ ८८५ ॥**

समूले कर्मणि उपपदे हन्तेः, जीवे च तथाभूते ग्रहेः णमुँल् स्यात्। समूलघातं हन्ति समूलं हन्ति इत्यर्थः। जीवग्राहं गृह्णाति।

७·   ५·
**करणे—हनः ॥ ८८६ ॥**

करणे उपपदे हन्तेः णमुँल् स्यात्। पादघातं हन्ति पादेन हन्ति इत्यर्थः।

७·   ५·   ७·   ५·   ७· ·१·   ५·
**उदकादौ पिषो हस्ते ग्रहः स्वे च पुषः ॥ ८८७ ॥**

उदकादौ करणे उपपदे पिषेः, हस्ते तथाभूते, ग्रहेः स्वे च पुषः णमुँल् स्यात्। उदकपेषं पिनष्टि उदकेन पिनष्टि इत्यर्थः। हस्तग्राहं गृह्णाति हस्तेन गृह्णाति इत्यर्थः। स्वपोषं पुष्णाति स्वेन पुष्णाति।

७·   ७·   ५:
**ऊर्ध्वे कर्त्तरि शुषिपूरिभ्याम् ॥ ८८८ ॥**

ऊर्ध्वे कर्त्तरि उपपदे शुषिपूरिभ्यां णमुँल् स्यात्। ऊर्ध्वशोषं शुष्यति वृक्षादिः ऊर्ध्वः एव तिष्ठन् शुष्यति। ऊर्ध्वपूरं

पूर्य्यते उद्ग्रमुखः एव घटादिः वर्षादिना पूर्य्यते इत्यर्थः। अनुप्रयोगः इति निवृत्तम्।

७: ५. ५. १.

## तृतीयासप्तम्योरुपपीडरुधकषो ग्रहेश्च ॥८८९॥

तृतीयान्ते सप्तम्यन्ते च उपपदे उपपूर्वपीड़ादिभ्यः ग्रहेश्च णमुँल् स्यात्। पार्श्वोपपीडं शेते पार्श्वाभ्यां पार्श्वेन वा उपपीड्य शेते इत्यर्थः। व्रजोपरोधं गाः स्थापयति। हस्तोपकर्षं गृह्णाति। केशग्राहं गृह्णाति केशेषु गृह्णाति इत्यर्थः। हस्तग्राहं गृह्णाति हस्तेन गृह्णाति इत्यर्थः।

७. ७.

## अपादाने त्वरायाम् ॥ ८९० ॥

अपादाने उपपदे त्वरायां गम्यायां धातोः णमुँल् स्यात्। शय्योत्थायं धावति शय्यातः शीघ्रम् उत्थाय।

७. ७. ७.

## स्वाङ्गे परिक्लिश्यमाने कर्मणि— ॥ ८९१ ॥

स्वाङ्गे कर्मणि उपपदे परिक्लिश्यमाने अर्थे गम्ये धातोः णमुँल् स्यात्। उरोविदारं प्रतिचस्करे नखैः।

५: ७:

## विशिपतिपदिस्कन्दिभ्यो व्याप्यासेवनयोः ॥८९२

कर्मणि उपपदे एभ्यः णमुँल् स्यात् व्याप्तौ क्रियायाः पौनःपुन्ये च अर्थे। पीठवेशम् आस्ते सर्वं पीठं व्याप्य आस्ते। लतापातं पुष्पं चिनोति। नद्यवस्कन्दं स्नाति।

७. ५.

## नाम्नि ग्रहेः ॥ ८९३ ॥

नामरूपे कर्मणि उपपदे ग्रहेः णमुँल् स्यात्। नामग्राहम् आह्वयति।

७· ५· १: ·१·

## अव्यये कृञो ल्यब्णमुलौ—वा * ॥ ८६४ ॥

अव्यये उपपदे कृञः ल्यप् णमुल् च स्यात्। उच्चैःकृत्य उच्चैःकारं वा अप्रियम् आचष्टे, पक्षे उच्चैः कृत्वा इति † वाक्यम् अपि।

७· ५·

## तूष्णीमि भुवः ॥ ८६५ ॥

अस्मिन् उपपदे भुवः ल्यब्णमुलौ वा स्याताम्। तूष्णींभावम् तूष्णींभूय तूष्णीं भूत्वा इत्यर्थः।

इति कर्मादिकृदन्तप्रकरणम्।

---

## स्त्रीप्रत्ययप्रकरणम्।

५· ५· ·१· ७· ·१·

## अजादेरतश्च स्त्रियामाप्—॥ ८६६ ॥

स्त्रियां वर्त्तमानात् अजादेः अकारान्ताच्च आप् स्यात्। पः इत्। स्त्रियाम् इति सर्वत्र अनुवर्त्त्यम्। अजा अश्वा मूषिका कोकिला चटका अमूला। एषु जातिनिमित्ते ईप् न। बाला वत्सा मन्दा। एषु वयोनिमित्ते ईप् न। शूद्रा जाती, महत्पूर्वा तु, महाशूद्री। पुंयोगे तु ईप् एव, शूद्री शूद्रभार्य्या। मध्यमा कनिष्ठा ज्येष्ठा, अत्र पुंयोगलक्षणे ईप्

---

* निपातोपसर्गभिन्ने स्वरादिगणपठिते अव्यये इति वक्तव्यं, तेन प्रादिषु उपसर्गेषु नञि च न।

† उच्चैः कृत्य इत्यत्र ल्यपः समस्तेन सह विधानात् समासः।

न। अजादिश्च आकृतिगणः, तेन दंष्ट्रादयः। अतः, शुभा दत्ता।

५· ५· ·१·

कतिपयाद्धलो वा— ॥ ८९७ ॥

कतिपयात् हलन्तात् आप् स्यात् वा। वाचा वाक्, दिशा दिक्।

५· ·१·

मनो डाप्— ॥ ८९८ ॥

मनन्तात् डाप् स्यात् वा। डपौ इतौ। डित्वात् टिलोपे सीमे सीमानौ, पामे पामानौ।

५· ५· ·१· ५· ·१· ·१· ·१ ·१·

अनो बहुव्रीहेश्चोपधालोपिनस्त्वीप् च वा ॥ ८९९ ॥

अनन्तात् बहुव्रीहेः डाप् वा स्यात् उपधालोपयोग्यात् ( मान्तवान्तसंयोगान्यपूर्वकात् ) अनस्तु ईप् च वा स्यात्, पक्षे डाप्तदभावौ। पः इत्। बहुयज्वे, बहुयज्वानौ सभे। उपधालोपिनस्तु भस्य अनः अल्लोपे * बहुराज्ञौ बहुराजे बहुराजानौ॥

५· ६· ६· ·१· ७· ६·

प्रत्ययस्थकात् पूर्वस्यात इदाप्यसुपकादेरनु-

६· ·१· ·१·

त्पुंस्कस्य तु वा ॥ ९०० ॥

आपि परे प्रत्ययस्थककारात् पूर्वस्य अतः स्थाने इत्

---

* उपधालोपिनः मान्तवान्तसंयोगान्यपूर्वस्य अनः तथा-भूतानन्तस्य इत्यर्थः।

स्यात्, न तु ध्रुवकादेः, अनुक्तपुंस्कस्य तु वा। नायिका, कारिका, पाचिका, सर्विका, शुभ्रिका। अनुक्तपुंस्कस्य तु गङ्गिका गङ्गका। अत्र गङ्गाका इत्यपि इच्छन्ति। ध्रुवकादयस्तु ध्रुवका, चटका, कन्यका, उपत्यका, अधित्यका, तारका नक्षत्रे, अष्टका श्राद्धे।

६ः ·१·

पुत्रिकादीनां वा ॥ ९०१ ॥

एषां प्रागुक्तं वा स्यात्। पुत्रिका पुत्रका, सूतिका सूतका, स्विका स्वका।

५ः ७· ·१·

टित्षिदुगिद्भ्यो मुख्यत्वे—ईप्— ॥९०२॥

टकारितः, षकारितः, उक्प्रत्याहारेतश्च मुख्यत्वे ईप् स्यात्। पः इत्। तत्र टितः ईपि।

६· ६· ६· ·१· १·

भस्येवर्णस्यावर्णस्य च लोपः ॥ ९०३ ॥

भसंज्ञकस्य इवर्णस्य अवर्णस्य च लोपः स्यात्। इति अवर्णलोपे निशाचरी किङ्करी (न इट्) नदी (धेट्) स्तनन्धयी करणी इयी त्रितयी चतुष्टयी ऊरुदघ्नी गजमात्री गजपतिद्वयसी तादृशी। षितः, रजकी नर्तकी ईश्वरी। उदितः, गतवती विदुषी श्रीमती धनवती यावती। ऋदितः, यान्ती।

५· ·१· ·१· ७·

स्यतुर्नुम् वा शीपोः ॥ ९०४ ॥

शामि ईपि च परे स्यन्तात् नुम् स्यात् वा। उमौ इतौ। इति नुमि करिष्यन्ती पक्षे करिष्यती। भव्याक्षेपो भविष्यन्त्याः

कार्य्यसिद्धेर्हि लक्षणम्। मुख्यत्वे किं, विदितप्रमाणा अधिगतज्ञाना इत्यादौ अमुख्ये न।

५ः ५॰ ५ः ५॰
अण्ढान्ताभ्यामनोऽमन्संख्याभ्यामृदन्ता-
॰१॰ ५॰
च्चास्वस्रादेः * ॥ ८०५ ॥

अण्प्रत्ययान्तात् ढप्रत्ययान्तात् मन्-संख्यावाचकवर्जात् अनन्तात् स्वस्रादिवर्जात् ऋदन्तात् च मुख्यत्वे ईप् स्यात्। अणन्तात्, प्रतिहारी † कुम्भकारी। वैष्णवी ऐन्द्री। ढान्तात्, आत्रेयी माहेयी सौरभेयी। अनः, राज्ञी शुनी मघोनी। मनन्तात् न, सीमा पामा। संख्यायाश्च न, पञ्च दश वा स्त्रियः। ऋदन्तात्, दात्री भोक्त्री कर्त्री। स्वस्रादेस्तु, स्वसा माता दुहिता ननन्दा याता इत्यादौ न।

५ः ५॰ ॰१॰
अञ्चुवाहन्ताभ्यां गौरादेश्च ‡ ॥ ८०६ ॥

अञ्चन्तात् वाह् इत्यन्तात् गौरादेश्च मुख्यत्वे ईप् स्यात्। गौरादिः ( सि॰ उ॰ २२१ पृ॰ ) द्रष्टव्यः। अञ्चन्तात्, प्राची

---

* पाणिनिना अगृहीतः अपि ब्रह्मशब्दः "आयाता ब्रह्मणः शक्तिः ब्रह्माणी साभिधीयते" इत्यादिभूरिप्रयोगदर्शनात् गृहीतः।

† प्रतिशब्दस्य प्रत्येकपरतया प्रत्येकस्य च कर्मत्वात् कर्मण्यण् इत्यनेन अणि प्रत्येकं हरति इति प्रतिहारी।

‡ अञ्चोः उदित्त्वेन एव ८०२ सूत्रेण ईपि प्राप्ते पुनर्ग्रहणं धातोः चेत् उगित्कार्य्यं, तर्हि अञ्चोः एव नान्यस्य इति ज्ञापयति, तेन स्रन्सु स्रत् ध्वन्सु ध्वत् इत्यादौ उदित्त्वे अपि न ईप।

उदीची। वाहन्तात्, भारौही। गौरादेः, गौरी। मत्स्यमनुष्यगवयादीनां जातिवाचकत्वे अपि योपधत्वेन ङीपः अप्राप्तौ अत्र गणे पाठः। तत्र मत्स्यशब्दात् ङीपि।

६· ७· ६: ७· ·१·

**मत्स्यस्येपि सूर्य्यागस्त्ययोश्छे च तिष्यपुष्ययोश्च नक्षत्राणि यलोपः ॥ ८०७ ॥**

६: ·१· ८· १·

ङीपि परे मत्स्यस्य, सूर्य्यागस्त्ययोः ङीपि छे च परे, नक्षत्रार्थके अणि परे च तिष्यपुष्ययोः यलोपः स्यात्। इति यलोपे मत्सी।

५· ५· ५· ·१· ५·

**अपात्राद्यन्ताद्‌ द्विगो—रत ङीप् पुरुषान्तात् तु वा ॥ ८०८ ॥**

·१· ·१·

स्त्रियां पात्राद्यन्तवर्जात् अदन्तात् द्विगोः ङीप् स्यात्, पुरुषान्तात् तु वा स्यात्। वक्ष्यमाणेन स्त्रीत्वे त्रिलोकी त्रिसूत्री सप्तशती द्वयाढकी। पात्रादेस्तु, द्विपात्रं त्रिभुवनम्। पुरुषान्तात् तु, द्विपुरुषी द्विपुरुषा।

५· ५· ·१· ·१·

**अनन्तादाबन्ताच्च वा ॥ ८०९ ॥**

अनन्तात् आबन्तात् च द्विगोः ङीप् वा स्यात्। वक्ष्यमाणेन डप्रत्यये डित्त्वात् टिलोपे वा स्त्रीत्वे पञ्चकर्मी पञ्चकर्मम्। पञ्चखट्वी पञ्चखट्वम्।

५· ५· ·१· ·१· ·१·

**ऊधोऽन्ताबहुव्रीहेरीबनङ् च ॥ ८१० ॥**

अधोऽन्तात् बहुव्रीहेः ईप् स्यात् स्त्रियां, तदन्तस्य अनङ् च। अनूढौ इती। इति ईपि अनङादेशे च मस्थानः अल्लोपे पीनोध्नी कुण्डोध्नी।

५· ५· ५··१·

संख्यादेर्दामान्ताद्वयोवाचिहायनान्ताच्च ॥९११॥

संख्यादेः दामान्तात् वयोवाचिहायनान्तात् च ईप् स्यात् स्त्रियाम्। इति ईपि अनः अल्लोपे द्विदाम्नी त्रिदाम्नी रज्जुः। एकहायनी द्विहायनी वत्सा।

७· ७· ५·

वयस्यचरमेऽतः ॥ ९१२ ॥

अचरमे वयसि वर्त्तमानं यत् प्रातिपदिकं तस्मात् अन्तात् स्त्रियाम् ईप् स्यात्। कुमारी किशोरी तरुणी। अतः किम्, शिशुः। अचरमे किं, वृद्धा।

अन्तर्वत्नी तु गर्भिण्यां पतिवत्नी सभर्त्तृका।
पत्नी पत्यु र्यज्ञफलसम्बन्धार्थे निपात्यते॥
बहुव्रीहावेकपत्नी वीरपत्नी च साध्यते।
सपत्नी चैकपतिका भद्रपत्नी तथेष्यते॥

५· ७· ५·

अतो भार्य्यायामपालकान्तात् ॥ ९१३ ॥

अदन्तात् भार्य्यायाम् अर्थे स्त्रियाम् ईप् स्यात्, न तु पालकान्तात्। गोपस्य भार्य्या गोपी। दासस्य भार्य्या दासी। सूर्य्यागस्त्ययोस्तु ईपि (८०७ सू०) यलोपे सूरी अगस्ती। पालकान्तात् तु, गोपालिका।

५· ·१··१·

पूतक्रतुवृषाकप्यग्निभ्य ऐच्च ॥ ९१४ ॥

एभ्यः भार्य्यार्थे ङीप् स्यात्, ऐत् च अन्तादेशः। पूतक्रतोः इन्द्रस्य भार्य्या पूतक्रतायी शची। हरविष्णू वृषाकपी तयोः भार्य्या वृषाकपायी गौरी श्रीश्च। अग्नेः भार्य्या अग्नायी स्वाहा।

५ः॰ ॰१॰
इन्द्रवरुणभवशर्वरुद्रमृडेभ्य आनुक्—
॰१॰ ५॰ १॰ ॰१॰
चाचार्य्यादणत्वञ्च ॥ ९१५ ॥

एभ्यः भार्य्यायाम् ङीप् स्यात्, आनुक् च अन्तादेशः आचार्य्यात् तु ङीबानुकौ अणत्वञ्च। उक्तौ इतौ। ब्रह्माणी इन्द्राणी वरुणानी भवानी आचार्य्यानी।

५ः ॰१॰
मातुलोपाध्यायाभ्यां वा ॥ ९१६ ॥

भार्य्यार्थे आभ्याम् ङीप् आनुक् च वा स्यात्। मातुलानी मातुली मातुला। उपाध्यायानी उपाध्यायी उपाध्याया।

५ः ॰१॰ ७॰
अर्य्यक्षत्रियाभ्यां वा स्वार्थे ॥ ९१७ ॥

आभ्यां स्वार्थे एव ङीप् वा स्यात्, तत्सहयोगे आनुक् च। अर्य्याणी अर्य्या स्वयं स्वामिनी इत्यर्थः। क्षत्रियाणी क्षत्रिया। स्वार्थे इत्युक्तेः भार्य्यायान्तु अर्य्यी क्षत्रियी इत्यादौ ङीप् एव, न तु आनुक्।

५॰ ५॰ ५॰ ५॰ ॰१॰ ॰१॰
स्वाङ्गादमुख्यादसंयोगोपधादत ईब्—वा ॥ ९१८ ॥

असंयोगोपधम् अमुख्यं यत् स्वाङ्गवाचकं तदन्तात् ङीप्

वा स्यात् स्त्रियाम्। सुकेशी सुकेशा। अतिकेशी अतिकेशा। असंयोगेति किम्, चन्द्रवक्त्रा। स्वाङ्गन्तु त्रिविधम्।

अद्रवं मूर्त्तिमत् स्वाङ्गं प्राणिस्थमविकारजम्।

अत्र अद्रवम् इत्युक्तेः सुस्वेदा, मूर्त्तिमत् इत्युक्तेः सुज्ञाना, प्राणिस्थम् इत्युक्तेः सुमुखा शाला, अविकारजम् इत्युक्तेश्च सुव्रणा इत्यादौ न ईप्।

अप्राणिस्थं तत्र दृष्टम्—

तत्र प्राणिनि यथा पूर्वोक्तं स्वाङ्गं दृष्टं तथा तत् अप्राणिस्थम् अपि स्वाङ्गं स्यात्। सुकेशी सुकेशा रथ्या।

—तेन तुल्ये तथा स्थितम्॥

प्राणितुल्ये वस्तुनि प्राणिनि यथा स्थितं स्वाङ्गं तथा एव यत् स्थितं तत् अपि स्वाङ्गम्। सुमुखी सुमुखा प्रतिमा।

·१· ५·

## न—क्रोड़ादिबह्वचः॥ ९१९॥

क्रोडादिभ्यः बह्वचकात् च परं प्रागुक्तं न स्यात्। सुक्रोडा सुवदना।

५· ·१·

## सहनञ्विद्यमानपूर्वाच्च॥ ९२०॥

एतत्पूर्वकात् अपि स्वाङ्गात् प्रागुक्तं न। सकेशा। अकेशा विद्यमानकेशा।

५· २· ·१·

## दिक्पूर्वपदाद् नित्यमीप्—॥ ९२१॥

दिग्वाचकपूर्वपदात् स्वाङ्गात् ईप् नित्यं स्यात्। प्राङ्-

५: ·१· ७·

## मुखाभ्यां न संज्ञायाम्॥ ९२२॥

आभ्यां संज्ञायाम् ङीप् नित्यं न स्यात्। शूर्पणखा, वक्ष्यमाणेन णत्वम्। गौरमुखा।

५:

नासिकोदरौष्ठजङ्घादन्तकर्णाङ्गशृङ्गपुच्छेभ्यो

·१·

वा ॥ ८२३ ॥

एतेभ्यः स्वाङ्गेभ्यः ङीप् न स्यात् वा। प्रागुक्तनिषेधापवादः। तुङ्गनासिकी तुङ्गनासिका। कृशोदरी कृशोदरा। कृशाङ्गी कृशाङ्गा।

५· ५· ५· ५·

जातेरतोऽस्त्रीविषयादयोपधात् ॥ ८२४ ॥

योपधभिन्नात् अस्त्रीविषयात् जातिवाचिनः अदन्तात् स्त्रियाम् ङीप् स्यात्। मृगजातिः स्त्री मृगी, हंसी। अतः किम्, धेनुः। योपधात् तु, क्षत्रिया वैश्या। अस्त्रीविषयात् किं, बलाका मक्षिका। जातिवाचिनस्तु।

समानैकाकृतियुता जातिमन्तस्तु कीर्त्तिताः।
विप्रक्षत्रादिवर्णा ये तेऽप्यत्र जातयो मताः।
पौत्राद्यपत्यवर्गश्च गोत्रं तज्जातिरीरिता।
जातिवाचिन आख्यातास्तद्विशिष्टस्य वाचकाः।
ब्राह्मणी। वृषली। गार्गी वात्सी *।

·१· ५· ५· ५·

वोतो गुणवाचिनोऽसंयोगोपधात् ॥ ८२५ ॥

* गार्गी वात्सी इत्यादौ गोत्रार्थे (१४५०·सू०) यञि तदन्तस्य प्रातिपदिकसंज्ञायां स्त्रियाम् ङीपि तत्परे च गार्ग्यवात्स्यशब्दयोः भलेन (१३७८ सू०) हलपरस्य यस्य लोपे तत्सिद्धिः।

असंयोगोपधभिन्नात् गुणवाचिनः उकारान्तात् ईप् वा स्यात् स्त्रियाम्। तन्वी तनुः। मृद्वी मृदुः। पट्वी पटुः। उतः किम्, श्वेता शुचिः। असंयोगेति किं, पाण्डुः। गुणवाचिनस्तु।

सिद्धरूपा वस्तुधर्मा जातिभिन्ना गुणा मताः।
गुणवाचिन आख्यातास्तद्विशिष्टस्य वाचकाः॥

५· ५··१·

## इकारादक्तेर्वा॥ ९२६॥

क्तिभिन्नेकारान्तात् ईप् वा स्यात् स्त्रियाम्। राजी राजिः। मणी: मणिः। क्तेस्तु, मतिः बुद्धिः।

हस्ती जानपदी ख्याता कुण्डी पात्रे निपात्यते।
अकृत्रिमायां भूमौ च स्थलीयं तु मता सताम्।
काली तद्वर्णयुक्तायां नीली स्यादोषधी मता।
कबरी केशविशेषे च हिमानी हिमसंहतौ॥
अरण्यानी महारण्ये यवनानी तु तल्लिपी।
अशिश्वी शिशुना हीना सखी सहचरी मता॥
असिक्नी स्यादवृद्धायां पलिक्नी तु जरायुता।
इत्यादयो निपात्यन्ते तरुण्यां युवतिस्तथा॥

·१· ५· ५· ५·

## ऊङुतो—मनुष्यजातेरयोपधात्॥ ९२७॥

अयोपधात् मनुष्यजातिवाचिनः उकारान्तात् स्त्रियाम् ऊङ् स्यात्। ङः इत्। कुरूः। योपधात् तु न, अध्वर्युः।

५··१· ५·

## अप्राणिजातेश्चारज्ज्वादेः॥ ९२८॥

रज्ज्वादिभिन्नात् अप्राणिजातिवाचिनः उदन्तात् ऊङ्

स्यात्। अलाबूः कर्कन्धूः। प्राणिजातेस्तु, आखुः। रज्ज्वादेस्तु, रज्जुः हनुः।

५० ०१०

**तन्वादेर्वा ॥ ८२९ ॥**

तनूः तनुः। चञ्चूः चञ्चुः। इति प्रक्रियाकौमुदी।

५० ५० ०१०

**वामोपमानपूर्वपदादूरूत्तरपदाच्च ॥ ८३० ॥**

वामादेः उपमानादेश्च ऊरुपदान्तात् ऊङ् स्यात्। वामोरूः। रम्भोरूः। करभोरूः।

इति स्त्रीप्रत्ययप्रकरणम्।

## कारकप्रकरणम्।

७० ७० ७० ०१०

**प्रातिपदिकार्थमात्रे उक्तार्थे सम्बोधने च**

०१०

**प्रथमा ॥ ८३१ ॥**

यस्य नाम्नः श्रवणे यस्य अर्थस्य (जातिगुणक्रियादेः) नियतोपस्थितिः स तन्नामार्थः तदर्थमात्रे, प्रत्ययादिना उक्तार्थाभिन्नार्थे, सम्बोधने च प्रथमा स्यात्। घटः, शुक्लः, चलः इत्यादौ घटत्वादिजाति-शुक्लादिगुण-चलनादिक्रिया-विशिष्टानां बोधात् तदर्थमात्रे प्रथमा। तदीयकर्माद्याधिक्ये तु द्वितीयादीनां प्रवृत्तिः। बालः शेते, जनेन ग्रामः गम्यते इत्यादौ शयनकर्तुः गमनकर्मणश्च तिङोक्तत्वात् तदभिन्नार्थे बालादौ प्रथमा। एवं जीव्यते अनेन इति जीवनं जलम्।

दीयते यस्मै दानीयः विप्रः। प्रभवति अस्मात् प्रभवः जनकः शय्यते अस्याम् इति शय्या खट्टा इत्यादौ ल्युडादिना करणाद्यर्थानाम् उक्तत्वात् तदर्थाभिन्नार्थे अपि प्रथमा। एवं आरूढ़ः वानरः यम् सः आरूढ़वानरः वृक्षः। कृतः कटः येन सः कृतकटः शिल्पी। दत्तं धनं यस्मै सः दत्तधनः विप्रः। पतितं पत्रं यस्मात् सः पतितपत्रः वृक्षः। बहवः भृत्याः यस्य सः बहुभृत्यः भूपतिः। अनेके लोकाः यत्र तत् अनेकलोकं नगरम् इत्यादौ कर्माद्यर्थकसमासेन उक्तार्थाभिन्नार्थे अपि प्रथमा। सम्बोधने हे नर हे साधो। उक्तार्थे प्रथमाविधानात् परिशेषात् अनुक्तार्थे एव कर्मादौ द्वितीयादिप्रवृत्तिः।

१॰ १॰ १॰

## क्रियोपयोगि क्रियान्वयि कारकम्— ॥८३२॥

क्रियान्वयि क्रियाप्रयोजकं (अपादानादिषट्कम्) कारकसंज्ञं स्यात्।

६॰ १॰ ॰१॰

## कर्त्तुरीप्सिततमं कर्म— ॥ ८३३ ॥

कर्त्रा क्रियाफलेन आप्तुम् इष्टतमं कारकं कर्मसंज्ञं स्यात्। तत्र च द्वितीया वक्ष्यते। ग्रामं गच्छति।

६ः॰ ६॰ ॰१॰ १॰

## अधिशीङ्स्थासामन्वध्याङ्वसश्चाधारः क्रिया-

६॰ १॰ ॰१॰

## या अभेदविशेषणञ्च * ॥ ८३४ ॥

---

* क्रियाविशेषणं पाणिनीयसूत्रेण अगृहीतम् अपि व्यपदेशिवद्भावपरिभाषया सिद्धतया इह गृहीतं, तेन गतिकारकपूर्वकतया स्तोकभ्री इत्यादौ यः इति बोध्यम्।

एषाम् आधारः क्रियायाः विशेषणञ्च 'कर्मसंज्ञं' स्यात्। ग्रामम् अधिशेते अधितिष्ठति अध्यास्ते। अनुवसति अधिवसति आवसति वा ग्रामम्। स्तोकं पचति मृदु गच्छति। अभेदेति किं, अतिशयेन गच्छति इत्यादौ भेदविशेषणे तृतीया एव।

·१· १··१· १·
## तथा युक्तञ्चानीप्सितम् ॥ ८३५ ॥

अनीप्सितम् अपि तथा एव ईप्सिततमम् इव क्रियाफलेन युक्तं सत् कर्मसंज्ञं स्यात्। अनीप्सितञ्च अनुद्दिष्टं द्विष्टञ्च। तत्र आद्यं, ग्रामं गच्छन् तृणं स्पृशति। द्वितीयम्, अन्नं भुञ्जानः विषं भुङ्क्ते।

१··१·
## अकथितञ्च ॥ ८३६ ॥

अपादानादिसंज्ञान्तरैः अकथितं कारकं कर्मसंज्ञं स्यात्। तत्र च धातुविशेषाः एव नियामकाः। यथा—

दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ।

दुहियाच्पच्दण्ड्... 

दुहियाच्व्याब्रूवर्थौ च पचतिश्चि, जि, दण्डयः।
रुधिः प्रच्छिर्मन्थतिश्च मुषिः शासिर्दुहादयः।
न्यादयो नयतिः प्रोक्ताः कर्षतिर्हरतिर्वहिः।
एतेषां यदकथितं कर्मयुक्तं तु कर्म तत्।

दुहादीनां द्वादशानां न्यादीनाञ्च चतुर्णां प्रधानकर्मोपयोगि अकथितं कारकं कर्मसंज्ञं स्यात् इत्यर्थः। गां पयः दोग्धि। नृपं धनं याचते अर्थयते वा। पुत्रं नीतिं ब्रूते वदति वा। अजम् ओदनं पचति। वृक्षं पुष्पाणि चिनोति। शत्रुं राज्यं जयति। दुष्टान् शतं दण्डयति राजा। बालं गृहं रुणद्धि। गुरुं धर्मं पृच्छति। दुग्धं नवनीतं मन्थति

साधून् धनं मुष्णाति चौरः। शिष्यं धर्मं शास्ति। ग्रामम् अजां नयति कर्षति हरति वहति वा। अत्र मुख्यकर्मणः दुग्धादेः उपयोगिनः यवादेः अपादानादिसंज्ञाविशेषैः अकथिततया अनेन गौणकर्मत्वम्। गणभेदेन पाठस्तु गौणमुख्यकर्मणोः तिङादिविधानार्थः।

३:· ७· १·

अकर्मकधातुभिर्योगे देशाध्वकालरूपाधारो

·१·

वा ॥ ६३७ ॥

अकर्मकैः धातुभिः योगे देशाध्वकालरूपाधारः कर्मसंज्ञः स्यात् वा। वङ्गान् स्वपिति। क्रोशम् आस्ते। मासं वसति। पक्षे सप्तमी।

गतिबुद्धिभोजनार्थकग्रहिदृशिशब्दकर्मकाक-

६:· ६:· १· ६:· ·१·

र्मकाणामण्यन्तानां कर्त्ता ण्यन्तानां कर्म * ॥ ६३८ ॥

अण्यन्तानां गत्यर्थादीनां कर्त्ता ण्यन्तानां तेषां कर्मसंज्ञः स्यात्। भृत्यं ग्रामं गमयति प्रापयति वा। शिष्यं शास्त्रं बोधयति ज्ञापयति वा। बालम् ओदनं भोजयति आशयति वा। विप्रं धनं ग्राहयति। पुत्रं चन्द्रं दर्शयति। शिष्यं वेदं पाठयति। घटं स्थापयति। एषां किम्, सूदेन अन्नं पाचयति। अत्र अनुज्ञाकर्त्तरि वक्ष्यमाणा तृतीया। अत्र दृशेः पृथग्ग्रहणात् ज्ञानविशेषार्थानां न, तेन स्मारयति शास्त्रं शिष्येण इत्येव।

---

* ग्रहिग्रहणम् अपाणिनीयम् अपि देवदेवम् अद्रिः सुतां ग्राहयितुं शशाक इत्यादिप्रयोगानुरोधात् कृतम्।

ह्रक्रोरात्मनेपदिदृश्यभिवाद्योश्च वा ॥६३९॥

ह्ररतेः करोतेः आत्मनेपदविषययोः दृश्यभिवाद्योश्च प्रागुक्तं वा स्यात्। हारयति धनं भृत्यं भृत्येन वा। कारयति कर्म दासं दासेन वा। दर्शयते नृपः सेवकं सेवकेन वा। पिता गुरुम् अभिवादयते पुत्रं पुत्रेण वा।

न खादादनीशब्दायायानामसारथिकर्त्तृ-कस्य वहेरहिंसार्थस्य भक्षेश्च ॥ ६४० ॥

खादादीनां असारथिकर्त्तृकस्य वहेः अहिंसार्थस्य भक्षेश्च प्रागुक्तं न स्यात्। इति कर्मसंज्ञाभावे अनुक्तकर्त्तरि तृतीया। खादयति आदयति वा अन्नं बालेन। भृत्येन ग्रामं नाययति आयययति वा। शब्दायते भृत्येन। वाहयति भारं भृत्येन। सारथिकर्त्तृकस्य तु वाहयति वाहान् सूतः। भक्षयति अन्नं विप्रेण। हिंसार्थस्य तु, भक्षयति वृषभं शस्यम्। शस्यभक्षणेन शस्यस्वामिनः हिंसा अत्र गम्यते।

कर्मणि द्वितीया— ॥ ६४१ ॥

उक्तसूत्रजातेन कर्मसंज्ञां प्राप्ते कारके अर्थे द्वितीया स्यात्। अनभिहिते इत्येव उक्तार्थे प्रथमाविधानात्। ग्रामं गच्छति। मृदु स्तोकं वा पचति।

कालाध्वनोर्व्याप्तौ समाप्तौ तु तृतीया ॥६४२॥

साकल्येन सम्बन्धः व्याप्तिः। कालाध्वनोः तस्यां गम्यायां

द्वितीया स्यात्, फलप्राप्तौ तु तृतीया। मासम् अधीते। एवं नित्यम् आस्ते पूर्वं शेते इत्यादि। द्रव्यगुणादेः अपि व्याप्तौ इयम् इष्यते, तेन मासं पिष्टकं मासं मृदु, मासं शीतः इत्यादि। क्रोशम् आस्ते क्रोशं कुटिला क्रोशं नदी इत्यादि। फलप्राप्तौ तु, वर्षेण अधीतं व्याकरणम्। क्रोशेन अधीतः ग्रन्थाध्यायः।

३।४।७।

## अन्वादिभिर्योगे ॥ ९४३ ॥

एभिः योगे द्वितीया स्यात्। अनु प्रति परि अभि उप एते अन्वादयः। तेषाञ्च अर्थविशेषे एव द्वितीया। तदर्थाश्च यथा—

इत्थंभावे लक्षणे च व्याप्तौ चाभिरिहेष्यते।
तेष्वर्थेषु च भागे च ज्ञेयावत्र परिप्रती।
एष्वर्थेषु सभागेषु सहार्थहीनयोरनुः।
उपो हीने वर्त्तमानो द्वितीयायाः प्रयोजकः।

नृपम् अनु, प्रति, परि, अभि वा वर्त्तते सेवकः इत्थंभूतः वर्त्तते इत्यर्थः। यत्नम् अनु, परि, प्रति, अभि, वा विद्या यत्नरूपकारणलक्षिता विद्या इत्यर्थः। वृक्षंवृक्षम् अनु, परि, प्रति, अभि, वा सिञ्चति सर्वान् वृक्षान् सिञ्चति इत्यर्थः। अत्र द्वित्वेन एव व्याप्तिः बोध्यते, अन्वादयस्तु तद्द्योतकाः इति न तेषाम् अप्रयोगप्रसङ्गः। पुत्रम् अनु, परि, प्रति वा पितृद्रव्यम् पुत्रस्य भागे इत्यर्थः। नदीमनु युता सेना नद्या सह सम्बद्धा इत्यर्थः। नृपम् अनु, उप वा जनाः नृपात् हीनाः इत्यर्थः।

७।१।

## समयादियोगे च ॥ ९४४ ॥

समयादिशब्दयोगे च द्वितीया स्यात्। समया निकषा हा धिक् अभितः परितः उभयतः सर्वतः अन्तरा अन्तरेण यावत् उपर्य्युपरि अध्यधि अधोऽधः इति समयादि। नृपं समया निकषा वा सेना तस्य समीपे इत्यर्थः। अधार्मिकं हा तस्य शोचनीयता इत्यर्थः। पापिनं धिक् तस्य निन्दा इत्यर्थः। नृपम् अभितः, परितः, उभयतः, सर्वतः वा सेवकाः समन्तात् वर्त्तन्ते इत्यर्थः। विन्ध्यं हिमाद्रिञ्च अन्तरा गङ्गा तयोः मध्ये इत्यर्थः। यत्नम् अन्तरेण न विद्या यत्नाभावासाध्या इत्यर्थः। मासं यावत् अधीते मासं व्याप्य इत्यर्थः। नदीं यावत् वनम् नदीपर्य्यन्तम् इत्यर्थः। लोकान् उपर्य्युपरि अध्यधि अधोऽधः वा वायुः वर्त्तते सर्वत्र वर्त्तते इत्यर्थः।

७· ·१· ·१·

## ऋतेयोगे पञ्चमी—च— ॥ ९४५ ॥

ऋते इति शब्दयोगे पञ्चमी, चात् द्वितीया स्यात्। यत्नात् यत्नं वा ऋते न विद्या।

३:· ·१· ·१·

## पृथग्विनानानाभिस्तृतीया च ॥ ९४६ ॥

एभिः योगे तृतीया, चात् पञ्चमी द्वितीये स्याताम्। विद्यया, विद्यायाः, विद्यां, वा पृथक्, विना, नाना, वा न सुखं विद्यामात्रसाध्यं सुखम् इति तात्पर्य्यार्थः।

इति द्वितीया।

१· १· १· ·१·

## स्वतन्त्रः कर्त्ता तत्प्रयोजकश्च ॥ ९४७ ॥

क्रियायां स्वतन्त्रः (इतरव्यापारानधीनव्यापारवान्) तत्प्रयोजकश्च कर्त्तृसंज्ञः स्यात्। सूदः पचति इत्यादौ पाक-

क्रियायां सूदस्य व्यापारः न अपरव्यापाराधीनः इति तस्य कर्त्तृत्वम्। राजा सूदेन पाचयति इत्यादौ राजादेः सूदव्यापारप्रयोजकतया एव कर्त्तृत्वं न तु पाके स्वातन्त्र्यम् अस्ति इति पृथक्संज्ञा कृता।

१· १·

**साधकतमं करणम् ॥ ६४८ ॥**

कर्त्तुः क्रियासिद्धौ प्रकृष्टोपकारकं करणसंज्ञं स्यात्।

क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्।

विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम्॥

इति हर्य्युक्तेः विवक्षया तस्य कर्त्तृत्वादि अपि स्यात् तेन स्थाली स्थाल्यां वा पचति इत्यादि स्यात्। करणञ्च व्यापारविशिष्टं क्रियानियतञ्च, हेतुश्च द्रव्यादिसाधारणः निर्व्यापारश्च इति तयोः भेदः।

६· १· ·१· ·१·

**दिवः करणं कर्म वा ॥ ६४९ ॥**

दिवधातोः करणं कर्मसंज्ञं वा स्यात्। अक्षैः, अक्षान् वा दीव्यति।

७: ·१·

**कर्त्तृकरणयोस्तृतीया— ॥ ६५० ॥**

अनभिहितयोः एव अनयोः तृतीया स्यात्। शिशुना सुप्यते। सूदेन ओदनः पच्यते।

७· ७· ७· ७· ·१·

**सहयुक्तेऽप्रधाने तदर्थे गम्येऽपि ॥ ६५१ ॥**

सहशब्दयोगे अप्रधाने (सहार्थाप्रधानीभूतक्रियाया

अन्विते ) सहशब्दप्रयोगे तदर्थे च गम्ये अपि तृतीया स्यात्। सहशब्देन समभिव्याहृतक्रियासमानकालिकक्रिया बोध्यते। तस्याश्च आद्यक्रियायाम् अन्वितम् अप्रधानम् उच्यते। पुत्रेण सह पुत्रेण वा आगतः पिता। व्यञ्जनेन सह व्यञ्जनेन वा अन्नं भुङ्क्ते।

७· ७· ·१·

## इत्थंभूतलक्षणे वारणार्थयोगे च * ॥६५२॥

इत्थंभूतस्य ( कञ्चित् प्रकारं प्राप्तस्य ) लक्षणे ( ज्ञापके चिह्ने ) द्योत्ये वारणार्थकशब्दयोगे च तृतीया स्यात्। जटाभिः तापसः जटारूपज्ञापकचिह्नज्ञाप्यतापसत्ववान् इत्यर्थः। श्रमेण अलं श्रमसाध्यं नास्ति इत्यर्थः। आयासेन कृतं आयाससाध्यं न अस्ति।

६· ५·

## अङ्गिनो विकारकारकाङ्गात् ॥ ६५३ ॥

अङ्गिनः विकारकारकाङ्गवाचकात् तृतीया स्यात्। चक्षुषा काणः। श्रोत्रेण बधिरः। पादेन खञ्जः।

५:· २·

## प्रकृत्यादिभ्यो यथाप्रयोगम् ॥ ६५४ ॥

प्रकृत्यादिभ्यः तृतीया स्यात्, तेषाञ्च यथा शिष्टैः प्रयोगः कृतः तथैव ग्रहणम्। प्रकृत्या चारुः। नाम्ना दशरथः। गोत्रेण गार्ग्यः। समेन एति। विषमेण एति। अतिशयेन याति।

७· ·१· ·१·

## हेतौ पञ्चमी च ॥ ६५५ ॥

* इत्थंभूतलक्षणे विशेषणे इत्यर्थः, जटाभिः तापसः जटावान् तापसः इत्यर्थः।

हेतौ अर्थे पञ्चमी,चात् तृतीया स्यात्। धनेन धनात् वा सुखम्। पापेन पापात् वा दुःखम्। दुष्कर्मणा दुष्कर्मणः वा तप्यते।

इति तृतीया।

३· २· ८· १· १·
## दानकर्मणा यमभिप्रैति स सम्प्रदानम् ॥९५६॥

दानकर्मणः उद्देश्यभूतं कारकं सम्प्रदानसंज्ञं स्यात्। सम्प्रदाने च चतुर्थी वक्ष्यते। दरिद्राय धनं ददाति। शिष्याय विद्यां ददाति।

६: १· ६: ·१·
## रुच्यर्थानां प्रीयमाणः श्लाघह्नुस्थाशपाञ्च
१·
## ज्ञीप्स्यमानः ॥९५७॥

अन्यकर्तृकः अभिलाषः रुचिः। तदर्थकानां धातूनां प्रयोगे प्रीयमाणः (प्रीत्याश्रयः) श्लाघादीनाञ्च प्रयोगे ज्ञापयितुम् इष्यमाणः सम्प्रदानसंज्ञः स्यात्। बालाय रोचते मोदकः मोदकः बालरुचिविषयः इत्यर्थः। कान्ताय श्लाघते नारी कान्तम् उद्दिश्य आत्मगुणान् आविष्करोति इत्यर्थः। एवं ह्नुते तिष्ठते शपते वा कान्तम् अनुलक्षीकृत्य स्वाभिप्रायप्रकाशनार्थं निह्नवादिकं करोति इत्यर्थः।

६: २· ·१· १·
## क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः ॥९५८॥

क्रोधः अमर्षः। द्रोहः अपकारः। ईर्ष्या अक्षमा। असूया गुणेषु दोषारोपः। एतदर्थकानां प्रयोगे यं प्रति कोपः सः

सम्प्रदानसंज्ञः स्यात्। क्रोधादयश्च सर्वे अपि कोपप्रभवाः इत्युक्तं यं प्रति कोपः इति।

अस्मै क्रुध्यति द्रुह्यति ईर्ष्यति असूयति वा।

६· १·

## धारेरुत्तमर्णः ॥ ६५६ ॥

धारयतेः प्रयोगे उत्तमर्णः (यस्मै ऋणम् अवश्यं देयम्) सः सम्प्रदानसंज्ञः स्यात्। नृपाय करं धारयति।

५: ६· १·

## प्रत्याङ्भ्यां श्रुवः प्रार्थयिता ॥ ६६० ॥

आभ्यां परस्य श्रुवः प्रयोगे प्रार्थयिता सम्प्रदानसंज्ञः स्यात्। प्रतिश्रुवः आश्रुवश्च अभ्यर्थनाप्रयोज्याङ्गीकारः अर्थः। विप्राय धनं प्रतिशृणोति आशृणोति वा। तदभ्यर्थितः तस्मै दातुम् अङ्गीकरोति इत्यर्थः।

६· ·१· १· ·१·

## स्पृहेः कर्म सम्प्रदानं—वा ॥ ६६१ ॥

स्पृहयतेः प्रयोगे कर्म सम्प्रदानं वा स्यात्। पुष्पाय पुष्पं वा स्पृहयति।

५· ६: ·१· ·१·

## उपसर्गात् क्रुधद्रुहोः कर्म वा ॥ ६६२ ॥

उपसर्गात् परयोः अनयोः प्रयोगे सम्प्रदानं कर्म वा स्यात्। भृत्याय भृत्यं वा अभिक्रुध्यति अभिद्रुह्यति वा।

७· ·१·

## सम्प्रदाने चतुर्थी ॥ ६६३ ॥

अनुक्तार्थे सम्प्रदाने चतुर्थी स्यात्। विप्राय गां ददाति इत्यादि।

६· ·१· १· ७· ·१·

तुमन्तस्य वा लोपस्तत्कर्मणि च ॥ ८६४ ॥

तुमन्तस्य वा लोपः स्यात्, तल्लोपे च तस्य कर्मणि चतुर्थी स्यात्। काष्ठम् आहर्त्तुं याति काष्ठाय याति। फलेभ्यः याति फलानि आहर्त्तुं वा। मशकाय धूमं ददाति मशकं निवर्त्तयितुम् इति वा। तस्मै अग्नंस प्रणिपत्य नन्दी इत्यस्य तं ज्ञापयितुम् इत्यर्थः। एवं ब्राह्मणेभ्यः नमस्कृत्य इत्यादौ अपि तान् अनुकूलयितुम् इत्याद्यर्थः, तेन उपपदविभक्तेः कारकविभक्तिर्गरीयसी इत्युक्तेः न द्वितीयाप्रसङ्गः। नमःशब्द-योगे चतुर्थी तु ब्राह्मणाय नमः इत्यादौ क्रियारहिते चरितार्था।

७· ६· ७· ·१· ·१·
७·

चेष्टायां गत्यर्थस्य कर्मणि चतुर्थी चानध्वनि ॥ ८६५ ॥

अध्वभिन्ने चेष्टार्थकगत्यर्थस्य कर्मणि चतुर्थी, चात् द्वितीया स्यात्। ग्रामाय ग्रामं वा याति। चेष्टायां किम्, मनसा काशीं याति। अध्वनि तु, पन्थानं याति इत्येव।

७· ·१· ७· ७·

मन्यकर्मणि चानादरेऽकाकशुकसृगाले ॥८६६॥

काकादिवर्ज्जं यद्विषयकत्वेन मन्यतेः अनादरपरता तस्मिन् (विधेये) मन्यतेः कर्मणि चतुर्थी, चात् द्वितीया स्यात्। त्वां तृणाय तृणं वा मन्ये। काकादौ तु, त्वां काकं मन्ये इत्यादि एव।

७· ·१·

तादर्थ्ये चतुर्थी ॥ ८६७ ॥

निमित्तार्थे चतुर्थी स्यात्। यागाय याति यागनिमित्तं याति इत्यर्थः। सुखाय धनं सुखनिमित्तं धनम्। धनाय विद्या धननिमित्तं विद्या इत्यर्थः।

१ः २ः ·१· ७·

## नम आदिभिर्हितादिभिश्च योगे ॥९६८॥

नमःप्रभृतिशब्दयोगे चतुर्थी स्यात्। नमः स्वस्ति स्वधा स्वाहा वषट् वौषट् हुं फट् (पूर्णतार्थक) अलम्, नमः आदि। हित सुख बलि निपुण हितादि। विप्राय नमः देवाय नमः धात्रे स्वस्ति एव स्वाहादि। विप्राय हितः सुखः बलिः निपुणः वा।

७· ·१· १·

## प्रभ्वादियोगे षष्ठी च ॥ ९६९ ॥

एभिः योगे षष्ठी, चात् चतुर्थी स्यात्। विद्यायै विद्यायाः वा प्रभवति यत्नः। प्रभुर्बुभूषुर्भुवनत्रयस्य यः इति।

इति चतुर्थी।

१· ७· १·

## ध्रुवमपायेऽपादानम्॥ ९७० ॥

अपाये (विभागजनकक्रियायाम्) यत् ध्रुवम् (उदासीनं विभागजनकक्रियायाः अनाश्रयः) तत् अपादानसंज्ञं स्यात्। अपादाने पञ्चमी वक्ष्यते। वृक्षात् पत्रं पतति। धावतः अश्वात् पतति।

५· ·१· १ः

## यतश्च जुगुप्साविरामप्रमादार्थाः॥ ९७१ ॥

यदपेक्षया जुगुप्सादयः, तत् अपि अपादानसंज्ञं स्यात्। पापात् जुगुप्सते विरमति वा। स्वकार्यात् प्रमाद्यति।

६ः १

## वारणार्थानामोप्सितः ॥ ९७२ ॥

प्रवृत्तिविघातः वारणम्। तदर्थकानां प्रयोगे ईप्सितः उक्तसंज्ञः स्यात्। धान्येभ्यः गां वारयति। ईप्सितः किं, धान्येभ्यः गां वारयति क्षेत्रे।

७ ३ २ ८

## व्यवधाने येनादर्शनमिच्छति ॥ ९७३ ॥

व्यवधाने सति यत्कर्त्तृकात्मदर्शनाभावम् इच्छति तत् उक्तसंज्ञं स्यात्। चौरात् निलीयते अन्तर्धत्ते वा। इच्छति इत्युक्तेः दैवाद्दर्शने अपि स्यात् एव।

१ ७

## आख्यातोपदेशादिग्रहणे ॥ ९७४ ॥

उपदेशादिग्रहणे उपदेशादिकथयिता उक्तसंज्ञः स्यात्। आचार्य्यात् वेदं शृणोति। गुरोः शास्त्रम् अधीते। उपदेशेति किं, नटस्य गीतिं शृणोति।

६ १ ६ १ १

## जायमानस्य प्रकृतिर्भवतश्चाद्यप्रकाशस्थानम् ॥ ९७५ ॥

जायमानस्य प्रकृतिः (उपादानकारणम्) भवतश्च आद्यप्रकाशस्थानम् उक्तसंज्ञं स्यात्। मृदः घटः जायते उत्पद्यते वा। सुवर्णात् कुण्डलं जायते उत्पद्यते वा। हिमवतः गङ्गा प्रभवति, तत्र एव पूर्वं प्रकाशते।

६ १ १ ६ १ १ १

## ल्यबन्तस्य वा लोपस्तस्य कर्माधिकरणञ्च ॥ ९७६ ॥

ल्यबन्तक्रियावाचकशब्दस्य लोपः वा स्यात् तत्क्रियायाः कर्म अधिकरणञ्च तत्संज्ञं स्यात्। प्रासादात् ईक्षते प्रासादम् आरुह्य इत्यर्थः। श्वशुरात् जिह्रेति श्वशुरं वीक्ष्य इत्यर्थः। आसनात् ईक्षते आसने उपविश्य इत्यर्थः। गम्यमानापि क्रिया विभक्तेः प्रयोजिका इत्युक्तेः कुतः भवान्, नद्याः इत्यादौ गम्यमानागमनक्रियापेक्षया अपादानत्वम्।

७० ·१·

## अपादाने पञ्चमी ॥ ६७७ ॥

अनुक्तार्थे अपादानसंज्ञके कारके पञ्चमी स्यात्। ग्रामात् आयाति।

२ः·

## अन्यारादितरर्त्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते ॥ ६७८ ॥

एभिः योगे पञ्चमी स्यात्। घटात्, अन्यः इतरः परः भिन्नः वा पटः। नञादियोगे तु न इष्यते। किन्तु घटः पटः न इत्यादौ प्रथमा एव। श्रावणात् आरभ्य प्रभृति वा मेघः वर्षति। ग्रामात् आरात् वनम्। दिशि दृष्टः शब्दः दिक्शब्दः, तेन प्रयोगकाले देशकालवृत्तित्वे अपि तद्योगे पञ्चमी स्यात् एव। ग्रामात् पूर्वं परं वा सरः। चैत्रात् पूर्वः फाल्गुनः, परः वैशाखः। दिक्शब्दत्वेन एव अञ्चूत्तरस्य प्राप्तौ पृथग्ग्रहणं अतसर्थान्ततया प्राप्तायाः षष्ठ्याः बाधनार्थम्। चैत्रात् प्राक् फाल्गुनः। ग्रामात् उदक् सरः। आच्-ग्रामात्*

---

* प्राचि काले इत्यर्थे (१५८५ सू०) अस्तातौ कृते तस्य च लुकि प्राक् इति सिद्धम्। एवञ्च एतस्य अतसर्थान्ततया (६८४ सू०) षष्ठीप्राप्तौ अञ्चूत्तरग्रहणेन तद्व्युदासः।

दक्षिणा सरः। आहि—ग्रामात् उत्तराहि वनम्। ग्रामात् बहिः वनम्।

६· ६· ·१· ७· ७·

निर्द्धार्य्यमाणस्य तदवधेस्स्यात्यन्तभेदेऽवधौ ॥९७९॥

जातिगुणसंज्ञाभिः एकतरस्य पृथक्करणं निर्द्धारणम्। (निर्द्धार्य्यमाणस्य पृथक्क्रियमाणस्य) तदवधेश्च यत्र सर्वांशे भेदः प्रतीयते तत्र अवधौ पञ्चमी स्यात्, न तु वक्ष्यमाणे षष्ठीसप्तम्यौ। माथुराः पाटलिपुत्रेभ्यः आढ्यतराः। अत्र माथुरपाटलिपुत्रयोः भेदः एव न तु नरक्षत्रिययोः इव अंशे अभिन्नता अपि।

७· ३ः ७ः ३·

वर्ज्जनेऽपपरिभ्यां व्याप्तिमर्य्यादयोराङा ॥९८०॥

क्रमात् एतदर्थेषु वर्त्तमानैः एभिः योगे पञ्चमी स्यात्। अपात् अप, परि, वा विवेकः तं वर्जयित्वा इत्यर्थः। आ नद्याः ग्रामः नदीपर्य्यन्तः इत्यर्थः। आ सकलात् ब्रह्म सर्वं व्याप्य स्थितम् इत्यर्थः।

५ः· ५ः· ७· ·१·

स्तोकाल्पकृच्छ्रेभ्योऽद्रव्यवाचिभ्यः करणे वा ॥९८१॥

अद्रव्यवाचिभ्यः स्तोकादिभ्यः करणे पञ्चमी वा स्यात्। स्तोकात् स्तोकेन वा मुक्तः। एवम् अल्पात् अल्पेन, कृच्छ्रात् कृच्छ्रेण। द्रव्यपरत्वे तु स्तोकेन विषेण हतः इत्यादौ तृतीया एव।

५ः
दूरान्तिकार्थेभ्यो द्वितीयातृतीयापञ्चमीस-
१ः
प्तम्यः ॥ ६८२ ॥

अद्रव्यवाचिभ्यः दूरान्तिकार्थेभ्यः द्वितीयादयः स्युः। ग्रामस्य दूरं दूरेण दूरात् दूरे वा आस्ते। एवम् अन्तिकम् अन्तिकेन अन्तिकात् अन्तिके वा।

इति पञ्चमी।

अथ षष्ठी।

७·  ७·  ·१·
कारकप्रातिपदिकार्थभिन्ने सम्बन्धे षष्ठी ॥ ६८३ ॥

कारकार्थप्रातिपदिकार्थभिन्ने सम्बन्धमात्रे षष्ठी स्यात्। राज्ञः धनम्। घटस्य रूपम्। पृथिव्याः गन्धः।

७·
अतसर्थयोगे ॥ ६८४ ॥

अतसर्थकप्रत्ययान्तयोगे षष्ठी स्यात्। दिक्शब्दतया प्राप्तायाः पञ्चम्याः अपवादः। ग्रामस्य दक्षिणतः, पुरः, पुरस्तात्, उपरिष्टात् वा गगनम्।

३·  ·१· ·१·
एनपा द्वितीया च ॥ ६८५ ॥

एनबन्तयोगे द्वितीया, चात् षष्ठी स्यात्। दक्षिणेन पुष्पवाटिकाम् पुष्पवाटिकायाः वा। तत्रागारं धनपतिगृहानुत्तरेणास्मदीयम्।

६ः ७ ३
स्मरणार्थदयेशां कर्मणि सम्बन्धत्वेन विव-
७
क्षिते— ॥ ९८६ ॥

सम्बन्धत्वेन विवक्षिते एषां कर्मणि षष्ठी स्यात्। अस्याश्च षष्ठ्याः न समासः इत्यग्रे वक्ष्यते *। मातुः स्मरति मातुः स्मरणम्। सम्बन्धत्वेन अविवक्षायान्तु मातरं स्मरति। तद्विषये एव हरिस्मृतिः सर्वविपद्विनाशिनी इति क्वचिद्योगे षष्ठ्याः समासः। पुत्रस्य पुत्रं वा दयते ईष्टे वा। पुत्रस्य दया पुत्रस्य ईशा वा।

६ ७
कृञः प्रतियत्ने ॥ ९८७ ॥

प्रतियत्ने (सतः गुणान्तराधानरूपे) अर्थे, वर्त्तमानस्य कृञः कर्मणि तथाभूते षष्ठी स्यात्। सुवर्णस्य विवक्षया सुवर्णं वा उपस्कुरुते। सुवर्णस्य उपस्कारः।

७ ६
आशिषि नाथतेः ॥ ९८८ ॥

आशीर्वादे अर्थे नाथतेः कर्मणि तथाभूते षष्ठी स्यात्। धनस्य धनं वा नाथते। धनस्य नाथनम्।

६ः ७
जासिनिप्रहणनाटपिषां हिंसायाम् ॥ ९८९ ॥

हिंसार्थानाम् एषां कर्मणि तथाभूते षष्ठी स्यात्। चौरस्य चौरं वा उज्जासयिता। निप्रौ संहतौ विपर्य्यस्तौ व्यस्तौ वा। चौरस्य चौरं वा निप्रहन्ति प्रणिहन्ति निहन्ति प्रहन्ति वा।

---

* वक्ष्यते इत्यस्य १०४७ सूत्रेण इति शेषः।

एवम् उच्चाटयति, पिनष्टि छिनत्ति इत्यर्थः। एवं चौरस्य उज्जासनं निहननम् इत्यादि।

६· ७·
## दिवोऽस्तुतौ ॥ ६६० ॥

अस्तुतौ दिवः कर्मणि तथाभूते षष्ठी स्यात्। शतस्य शतं वा दीव्यति। स्तुतौ तु, विप्रं दीव्यति स्तौति इत्यर्थः।

७· ७· ७·
## कृत्वोऽर्थप्रयोगे कालेऽधिकरणे ॥ ६६१ ॥

कृत्वोऽर्थकप्रत्ययान्तयोगे कालरूपाधिकरणे तथाभूते षष्ठी स्यात्। द्विरह्नः भुङ्क्ते पञ्चकृत्वोदिवसस्य पचति। सम्बन्धाविवक्षायान्तु, द्विरहनि भुङ्क्ते।

७: ७· ७· ·१· ·१·
## कर्त्तृकर्मणोः कृति गौणकर्मणि तु वा ॥६६२॥

कृदन्तशब्दयोगे कर्त्तरि कर्मणि च अनुक्ते एव षष्ठी स्यात्, गौणकर्मणि तु वा स्यात्। सूदस्य पाकः। अन्नस्य पाचकः। बालस्य ग्रामस्य, ग्रामं वा नेता। दुग्धस्य गोः, गां वा दोग्धा।

७· ·१· ७·
## उभयप्राप्तौ कर्मण्येव स्त्रीविहितकृति तु
७· ·१· ७· ·१· ७:
## कर्त्तरि वा अकारस्वरूपस्त्रीप्रत्यये तूभयोः ॥६६३॥

कर्त्तृकर्मणोः उभयोः षष्ठीप्राप्तिसम्भावनायां कर्मणि एव षष्ठी, न तु कर्त्तरि, स्त्रीविहितप्रत्ययान्तयोगे तु कर्त्तरि वा स्यात्, अकाररूपस्त्रीप्रत्यये तु उभयोः एव। गोपेन गवां दोहः। सूदेन अन्नस्य पाकः। कुलालस्य, कुलालेन वा

घटस्य कृतिः। अकारस्वरूपस्त्रीप्रत्यये तु, छात्रस्य शास्त्रस्य पिपठिषा। राज्ञः ग्रामस्य जिगमिषा।

६ः· ६· ·१· ७· ७· ·१·

## कृत्यानां भावक्तस्य च योगे कर्त्तरि वा॥८८४॥

कृत्यान्तानां भावक्तान्तस्य योगे कर्त्तरि षष्ठी वा स्यात्। छात्रेण छात्रस्य वा पाठ्यः वेदः। बालस्य बालेन वा पानीयं पयः। सतां सद्भिः वा स्नातम्। भावक्तस्य योगे शेषत्वेन विवक्षया षष्ठी, कर्तृत्वेन तु तृतीयैवेति व्यवस्थितो विकल्पः इति प्रक्रियाकौमुदी।

७· ७· ७·

## वर्त्तमानाधिकरणवाचिनि क्ते कर्त्तरि ॥८८५॥

वर्त्तमानार्थकस्य अधिकरणार्थकस्य च क्तस्य योगे कर्त्तरि षष्ठी स्यात्। राज्ञां मतः पूजितः वा विप्रः। गुरोः आसितम् उषितं वा पीठम्।

·१· ६ः· ६·

## न तिङादेशोदव्यय*निष्ठाखलर्थानामुकस्य

·१· ६·

## चाकामुकस्य ॥ ८८६ ॥

तिङादेशाः शत्रादयः। तिङादेशादिकानां कामुक-वर्जितस्य उकस्य च योगे षष्ठी न स्यात्। तत्र तिङादेशा-नाम्-मुरं द्विषन्, घटम् कुर्वन् कुर्वाणः चकृवान् चक्राणः करिष्यन् करिष्यमाणः वा। उतः—ओदनं बुभुक्षुः, अन्नं पिपक्षुः, बालम् अलङ्करिष्णुः। अव्ययस्य-घटं कर्त्तुं कृत्वा

---

* अव्ययपदं कृदन्ताव्ययपरं कर्तृकर्मणोः कृति इति उप-क्रान्तायाः एव निषेधार्थकत्वात्, तेन तस्य उपरि इत्यादौ षष्ठी स्यात् एव।

प्रकृत्य कारं कारं कारं वा। निष्ठायाः-कुलालेन घटः कृतः, घटं कृतवान् कुलालः। खलर्थस्य-पटुना सुकरः विद्याभ्यासः, कृपणेन दुष्पानं निम्बम्। उकस्य—शत्रुं घातुकः। कामुकशब्दयोगे स्यात् एव। विद्यायाः कामुकः।

३· ·१· ·१· ३: ·१· ·१· ·१·

## तुल्यार्थैस्तृतीया च तुलोपमाभ्यां तु षष्ठेव ॥ ९९७ ॥

तुल्यार्थशब्दयोगे तृतीया, चात् षष्ठी। तुलोपमाभ्यां योगे तु षष्ठी एव स्यात्। तुल्यः समः वा सिंहेन सिंहस्य वा राजा। विद्यायाः तुला उपमा न अस्ति।

·१· ·१· ७· ३:·

## चतुर्थी चाशिष्यायुष्यभद्रसुखकुशलार्थहितैः ॥ ९९८ ॥

आशीर्वादे अर्थे आयुष्याद्यर्थकशब्दयोगे हितशब्दयोगे च चतुर्थी, चात् षष्ठी स्यात्। पुत्रस्य पुत्राय वा आयुष्यम्, चिरजीवनम् भद्रम् कुशलम् मङ्गलम् सुखम् शर्म हितम् वा भूयात्।

३: ·१· ·१·

## दूरान्तिकार्थैः पञ्चमी च ॥ ९९९ ॥

दूरान्तिकार्थशब्दयोगे पञ्चमी, चात् षष्ठी स्यात्। ग्रामात् ग्रामस्य वा दूरम् अन्तिकं निकटं समीपं वा।

७· ७· ·१· ५· ·१· ·१· ·१·

## हेतुयोगे हेतौ षष्ठी सर्वनाम्नस्तु तृतीया च ॥ १००० ॥

हेतुशब्दप्रयोगे हेतौ द्योत्ये षष्ठी स्यात्, सर्वनाम्नस्तु

तृतीया, चात् षष्ठी स्यात्। धनस्य हेतोः वसति। सर्वनाम्नस्तु, केन हेतुना कस्य हेतोः वा वसति।

७॰ ॰२॰ १ः॰

निमित्तार्थकयोगे प्रायः सर्वाः ॥ १००१ ॥

निमित्तार्थकशब्दयोगे प्रायः सर्वाः विभक्तयः स्युः। किं निमित्तं, केन निमित्तेन, कस्मै निमित्ताय, कस्मात् निमित्तात्, कस्य निमित्तस्य, कस्मिन् निमित्ते वा वसति। एवं किं कारणं किं प्रयोजनम् इत्यादि। प्रायः इत्युक्तेः असर्वनाम्नः प्रथमाद्वितीये न स्तः। ज्ञानेन निमित्तेन इत्यादि।

इति षष्ठी।

अथ सप्तमी।

३॰ १॰ १॰

कर्त्तृकर्मद्वारा क्रियाधारोऽधिकरणम् ॥१००२॥

कर्त्तृद्वारा कर्मद्वारा च क्रियाश्रयः कारकम् अधिकरणसंज्ञः स्यात्। आधारश्च, सामीप्यात्श्लेषविषयैर्व्याप्त्या चायं चतुर्विधः इत्युक्तेः चतुर्विधः।

७॰ ॰१॰

अधिकरणे सप्तमी— ॥ १००३ ॥

अनुक्तार्थके अधिकरणे सप्तमी स्यात्। गङ्गायां घोषः गङ्गासमीपे इत्यर्थः। गृहे आस्ते गृहैकदेशे आस्ते। इदञ्च कर्त्तृद्वारा क्रियोपकारकम्। स्थाल्याम् ओदनं पचति स्थाल्येकदेशे पचति। इदन्तु कर्मद्वारा क्रियोपकारकम्। विद्यायाम् इच्छा तद्विषये इच्छा इत्यर्थः। तिलेषु तैलम् अस्ति तिलान् व्याप्य अस्ति इत्यर्थः।

५॰ ७॰

फलात् कर्मसम्बन्धे ॥ १००४ ॥

फलवाचकात् कर्मणा सह सम्बन्धे (संयोगे अवयवावयवसम्बन्धे वा) सप्तमी स्यात्।

चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम्।
केशेषु चमरीं हन्ति मांसेषु हरिणो हतः ॥

सम्बन्धविशेषे किं, वेतनेन धान्यं लुनाति इत्यादौ न।

६· ३· १· ५· ·१·

**यस्य क्रियया क्रियान्तरपरिच्छेदस्ततश्च ॥१००५॥**

यस्य कारकस्य (कर्त्तुः कर्मणः) वा) क्रियया (व्यापारेण फलेन वा ) क्रियान्तरस्य परिच्छेदः तद्वाचकात् चात् विशेषणवाचकात् अपि सप्तमी स्यात्। पठत्सु छात्रेषु गोषु दुह्यमानासु वा आगतः। अत्र पठनदोहनयोः आगमनकालपरिच्छेदकता।

७· ७· ·१· ·१·

**अनादरे तत्कर्मणि षष्ठी—च ॥ १००६ ॥**

अनादरे गम्ये अनादरस्य कर्मणि षष्ठी, चात् सप्तमी स्यात्। रुदतः बालस्य, रुदति वा बाले, वहिर्गता माता रुदन्तं पुत्रम् अनादृत्य इत्यर्थः।

३ः·

**स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूकुशलायुक्तैः ॥ १००७ ॥**

एभिः योगे षष्ठीसप्तम्यौ स्याताम्। गवाम् गोषु वा स्वामी ईश्वरः अधिपतिः चैत्रः इत्यादि।

३ः· ५· ५·

**जातिगुणक्रियासंज्ञाभिर्धृतः समुदायादेक-**

६· १· ७·

देशस्य पृथक्करणं तत्र ॥ १००८ ॥

जात्यादिभिः यतः समुदायात् एकदेशस्य पृथक्करणं तस्मिन् अर्थे षष्ठीसप्तम्यौ स्तः। नृणाम् नृषु वा विप्रः गरिष्ठः, अत्र जात्या, गवाम् गोषु वा कृष्णा बहुक्षीरा, अत्र गुणेन, गच्छताम् गच्छत्सु वा धावन् शीघ्रः, अत्र क्रियया। छात्राणाम् छात्रेषु वा मैत्रः पटुतरः, अत्र संज्ञाद्वारा। समुदायात् एकदेशस्य विप्रादेः गरिष्ठत्वादिना पृथक्करणम्।

३· ·१· ·१·

साधुना चतुर्थी च ॥ १००९ ॥

साधुशब्दयोगे चतुर्थी, चात् सप्तमी स्यात्। यज्ञाय यज्ञे वा साधुः।

३ः ३· ·१· ·१·

उत्सुकप्रसिताभ्यां निपुणार्थकेन च तृतीया

·१·

—च ॥ १०१० ॥

आभ्यां निपुणार्थकेन च योगे तृतीया, चात् सप्तमी स्यात्। प्रियेण प्रिये वा उत्सुका, प्रसिता (आसक्ता) वा कान्ता। कर्मणि कर्मणा वा निपुणः दक्षः पटुः वा।

५ ·१·

कालार्थे नक्षत्रवाचिनश्च ॥ १०११ ॥

कालार्थे नक्षत्रवाचिशब्दात् अपि ते स्तः। मूलेनावाहये-द्देवीं श्रवणेन विसर्जयेत्। पक्षे मूले श्रवणे वा तत्तन्नक्षत्र-युक्तकाले इत्यर्थः।

७· ५ः ·१· ·१·

कारकमध्ये कालाध्वभ्यां पञ्चमी—च ॥१०१२॥

कारकयोः मध्ये व्यावर्त्तककालाध्ववाचकाभ्यां पञ्चमी, वात् सप्तमी स्यात्। अद्य भुक्त्वा द्यहे द्यहात् वा भुङ्क्ते। अत्र कर्त्तृद्वयमध्यवर्त्ती कालः। इहस्थः क्रोशात् क्रोशे, वा ग्रामं पश्यति। अत्र कर्त्तृकर्मणोः मध्यवर्त्ती पन्थाः।

३·
अधिकशब्देन ॥ १०१३ ॥

एतद्योगे पञ्चमीसप्तम्यौ स्याताम्। धनात् धने वा अधिका विद्या।

३· ३· ३· ·१· १·
अधिकार्थोपेन स्वाम्यर्थेनाधिना च सप्तमी ॥ १०१४ ॥

अधिकार्थकेन उपशब्देन स्वाम्यर्थेन अधिशब्देन च योगे सप्तमी स्यात्। विद्या प्रते गुणेषु उप अधिका इत्यर्थः। अधि नृपे भूमिः नृपस्वामिका इत्यर्थः। अधि भुवि वा नृपः। नृपः भूमिस्वामी इत्यर्थः।

प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक्।
कारकत्वं भवेत्तत्र प्रधानापेक्षया स्थितिः॥

इत्युक्तेः प्रधानक्रियापेक्षया एव कारकव्यवस्था। तेन स्थित्वा पथ्येन गच्छति। प्रविश्य गृहात् निःसरति इत्यादिः एव प्रयोगः।

इति सप्तमी।

इति कारकप्रकरणम्।

## समासप्रकरणम् ।

१· १· १· ·१·
### पदविधिरेकार्थः सङ्गतार्थश्च ॥ १०१५ ॥

पदनिमित्तकः विधीयमानः समासतद्धितादिः एकार्थः ( समुदायेन एकार्थस्य बोधकः ) सङ्गतार्थश्च ( परस्परम् अन्वितार्थकः ) स्यात् । तत्र समासः द्विपदनिमित्तकः बहुपदनिमित्तको वा, तद्धितस्तु एकपदनिमित्तकः इति विशेषः । तथाच परस्परं सङ्गतार्थकैकार्थीभावापन्नार्थबोधकं पदद्वयं तादृशपदत्रयं वा समासः इति फलितम् । समासश्च चतुर्विधः अव्ययीभावतत्पुरुषबहुव्रीहिद्वन्द्वभेदात् । द्विगुकर्मधारयौ तु तत्पुरुषस्य एव अवान्तरभेदौ । ते च तत्तत्प्रकरणे वक्ष्यन्ते । समासतया ( ६५२ सू० ) प्रातिपदिकसञ्ज्ञायाम् ( ५७२ सू० ) यदवयवस्य सुपः लुकि पुनः समुदायात् सुप् । तत्र च पूर्वभागस्य इव अन्तभागस्य अपि सुबन्तत्वेन पदत्वप्रसङ्गे ।

६· १· ·१· १· ७· ७· ·१·
### समासस्यान्तो न पदं याजादौ तद्धिते च

१: ·१· ७· ·१·
### तान्तसान्तौ तु अस्त्यर्थे च ॥ १०१६ ॥

समासस्य अन्तः, याजादौ तद्धिते परे पूर्वस्य न पदसंज्ञः स्यात्, तान्तसान्तौ तु अस्त्यर्थप्रत्ययमात्रे परे । इति पदत्वनिषेधः । तेन अधिवाचीत्यत्र न कुत्वम् ।

३· ३· १· ८·
### सङ्गतार्थेन सुबन्तेन सङ्गतार्थः समस्यते ॥१०१७॥

सङ्गतार्थेन सुबन्तेन सह सङ्गतार्थकः शब्दः समस्यते । पूर्वं भूतः भूतपूर्वः । अत्र पूर्वशब्दस्य परनिपातः निपातनात् । एवं दृष्टपूर्वः, श्रुतपूर्वः ।

१· ७· १· ·१·
**अमुख्यं समासविधौ प्रथमानिर्दिष्टञ्चोपस-**
१· ७· ६· १·
**र्जनं तच्च प्रथमानिर्दिष्टस्य प्राक्प्रयोगः ॥१०१८॥**

इतरस्य विशेषणं, समासविधायकशास्त्रे प्रथमानिर्दिष्टं च उपसर्जनसंज्ञं स्यात्। तयोः मध्ये प्रथमान्तपदस्य पूर्वप्रयोगः। यथा अव्ययं विभक्त्यर्थेत्यादौ अव्ययादिपदं प्रथमान्ततया निर्दिष्टं तस्य एव समासावस्थायां प्राक्प्रयोगः। एवम् अन्यत्र अपि।

---

## अव्ययीभावप्रकरणम् ।

१· ७· ·१· १· १·
**अव्ययं विभक्त्यर्थादिषु बहुलम् सोऽव्ययीभावः ॥ १०१९ ॥**

विभक्त्यर्थादिषु वर्त्तमानम् अव्ययं सङ्गतार्थेन सुबन्तेन सह बहुलं समस्यते सः अव्ययीभावः। सः च अग्रेः अपि अनुवर्त्त्यः। बहुलग्रहणात् क्वचित् नित्यं क्वचित् वा स्यात् क्वचिच्च न इति ज्ञाप्यते। तत्र नित्यसमासे समाससमानार्थकम् एव वाक्यं, न तु नित्यसमासान्तःपातिसकलपदयुक्तं, किन्तु तत्समानार्थकपदान्तरयुक्तम् एव। यथा—अधिदेहम् इत्यादौ देहे इत्येव वाक्यम्, उपग्रामम् इत्यादौ च ग्रामस्य समीपे इत्येव वाक्यम् इत्यादि। तत्र विभक्त्यर्थादयः नित्यविकल्पनिषेधविषयाश्च। यथा—

विभक्त्यर्थेषु सामीप्ये मध्यार्थे चानतिक्रमे।
अभावे च तथा नाशे साकल्यार्थेऽप्यनुक्रमे।

सदृशार्थे यथाशब्दं विना सादृश्यके तथा।
योग्यतायां सहार्थे च समर्थेन सुपाऽव्ययम्।
पश्चाच्छब्दं विना पश्चादर्थे नित्यं समस्यते।
व्याप्तौ प्रत्यादयो वा तु समस्यन्ते सुपा सह।
सीमायाञ्चाङभिव्याप्तौ सुपा वा च समस्यते।
अभिप्रती चाभिमुख्ये पर्य्यपौ वा च वर्जने।
बहिःप्रागादयस्तद्वत् समस्यन्ते विभाषया।

तत्र विभक्त्यर्थेषु देहे इति सप्तम्यर्थस्य द्योतकः अधिशब्दः, तस्य च प्रथमान्तनिर्दिष्टतया पूर्व्वनिपाते अधिदेहे इति स्थिते तत्समुदायस्य प्रातिपदिकसंज्ञया तदंशसुपः लोपे पुनः सुपः प्रसङ्गे अव्ययीभावसमासस्य अव्ययतया विभक्तिलोपप्रसङ्गे च।

५· ५· ·१· ६· ·१· ·१··१·
अव्ययीभावादतो न सुपो लुक् अम् त्वपञ्च
६· ६: ·१·
म्यास्तृतीयासप्तम्योर्वा ॥ १०२० ॥

अदन्तात् अव्ययीभावात् सुपः न लुक् स्यात्, किन्तु तत्-स्थाने अम् स्यात्, न तु पञ्चम्याः, तृतीयासप्तम्योस्तु अम् वा स्यात्। पक्षे तयोः अलोपे यथायथं प्रयोगः। इति सुपः अलोपे अमि च अधिदेहम्।

१· ·१·
अव्ययीभावो नपुंसकवत् ॥ १०२१ ॥

अव्ययीभावसमाससाध्यं नपुंसकवत् कार्य्यं लभते। तेन अंकः ह्रस्वादि। गङ्गायाम् इत्यर्थे अधिगङ्गम्, गौर्य्याम् इत्यर्थे अधिगौरि, बध्वाम् इत्यर्थे अधिवधु, इत्यादौ ह्रस्वे अम्, सुब्-लोपः वा। प्रथमार्थे तु न अव्ययीभावः, तत्र विभक्तेः विशे-षार्थाभावात् प्रथमया प्रातिपदिकार्थमात्रस्य एव द्योतनात्।

सामीप्ये, ग्रामस्य समीपम् उपग्रामम्। उपग्रामेण, उपग्रामं, वा युक्तः। उपग्रामात् आगतः। उपग्रामम्, उपग्रामे वा स्थितः। मध्यार्थे, दिशयोः मध्ये अपदिशम्, क्लीवतया ह्रस्व-अम्भावः। मध्येशब्दस्य तु विभाषा अग्रे वक्ष्यते। अनतिक्रमे, शक्तिम् अनतिक्रम्य यथाशक्ति यथामति यथासाध्यम् इत्यादि। अभावे, पापस्य अभावः इति वाक्ये अभावार्थकनञा समासे पूर्वनिपाते।

७· ६· ·१· ७· ७· ·१· ·१·

## अनखादौ नञोऽश् हलि अचि त्वन् * ॥१०२२॥

नखादिभिन्नविषये हलादौ परे नञः स्थाने अश् स्यात्, अजादौ तु अन् स्यात्। शः इत्। शित्त्वात् बहुवर्णत्वाच्च सर्वादेशः। नख, नाक, नपुंसक, नकुल, नमुचि, नक्षत्र, नासत्य, नग † इति नखादि। नखादिः आकृतिगणः। इति अशादेशे अपापम्। अनि आमयाभावः अनामयम्। भाव-कृदन्तैस्तु नञः अव्ययीभावः न दृश्यते, किन्तु तत्र नञ्तत्-पुरुषः एव। यथा-अभावः अनुच्छेदः असन्देहः अनुपालम्भः इत्यादि। नाशे, हिमस्य नाशः निर्हिमम्, निर्मक्षिकम्। अत्र निरः नाशार्थकता। सहार्थे साकल्ये च, तृणेन सहितम् इति वाक्ये तृणम् अपि अपरित्यज्य इति वाक्ये वा साकल्य-द्योतकसहशब्दस्य समासः, तस्य च पूर्वनिपाते।

---

* अनः अनित्वं न प्रयोजनाभावात्। वृत्तौ शित्त्वादिति अश्विधिपरं बहुवर्णत्वात् इति अन्विधिपरम्।

† नगः इति अप्राणिविषयः, प्राणिविषये तु अगः शूद्रः इत्येव। अप्राणिविषये अपि शैलवृक्षयोः अपि वा अश्भावः, तेन शैलवृक्षौ नगावगौ इति अमरोक्तिः।

६ । ७ ७ ।१ ।१ ८

सहस्य सोऽव्ययीभावे बहुव्रीहौ तु वाऽकाले ॥ १०२३ ॥

कालार्थकशब्दभिन्ने परे अव्ययीभावे सहशब्दस्य स्थाने सः स्यात्, बहुव्रीहौ तु वा। इति सादेशे सलक्षम् सकलं लक्षणम् अस्ति इत्यर्थः। कालार्थके तु, सहपूर्वाह्णम् इत्येव। तत्र च सहार्थे अव्ययीभावः। एवं सधनम् धनसहितम् इत्यर्थः। अनुक्रमे, ज्येष्ठस्य अनुक्रमः अनुज्येष्ठम् यथावृद्धम्। सादृश्ये, बुद्धेः सादृश्यं सबुद्धि। सादृश्यार्थकयथाशब्दस्य तु न, यथा हरिः तथा हरः। योग्यतायाम्, रूपस्य योग्यम् अनुरूपम्, कुलस्य योग्यं यथाकुलम् इति। पश्चादर्थे, वृक्षस्य पश्चात् अनुवृक्षम्, अनुज्येष्ठम्, अनुपूर्वम्। पश्चाच्छब्दस्य तु न, तत्र देहस्य पश्चात् इति वाक्यम् एव। व्याप्तौ, वृक्षं वृक्षम् प्रति, अनु, अभि, परि वा इति वाक्ये प्रतिवृक्षम्, अनुवृक्षं, अभिवृक्षं, परिवृक्षम् इति समासः वा। अत्र समासेन एव द्वित्वस्य बोधनात् उक्तार्थानामप्रयोगः इत्युक्तेः न व्याप्तौ द्वित्वम्। सीमायाम्, आ ग्रामात् आग्रामं वा वनम्। अभिव्याप्तौ, आ बाल्यात् आबाल्यं वा विद्यायां यत्नः कार्य्यः बाल्यम् अभिव्याप्य इत्यर्थः। आभिमुख्ये, अग्निम् अभि प्रति वा अभ्यग्नि प्रत्यग्नि वा शलभाः पतन्ति। वर्जने, परि धीरात् परिधीरं वा अपधीरात् अपधीरं वा मोहः धीरं वर्जयित्वा मोहः इत्यर्थः। बहिर्वनात् बहिर्वनं वा ग्रामः। प्राग्वनात् प्राग्वनं वा ग्रामः इत्यादि।

१ः ३ ।१

पारेमध्येशब्दौ षष्ठ्या वा ॥ १०२४ ॥

एतौ षष्ठ्यन्तेन वा समस्येते। तयोश्च एदन्तत्वं निपात्यते। पाक्षिकवचनमात्रषष्ठीसमासापवादः। समुद्रस्य मध्यम् मध्येसमुद्रं पक्षे षष्ठीसमासे समुद्रमध्यम्, पक्षे वाक्यम् अपि समुद्रस्य मध्यम्। एवं पारेसमुद्रं समुद्रपारं समुद्रस्य पारम्।

७· ५ः· १·

अव्ययीभावे—शरत्प्रभृतिभ्योऽः— ॥१०२५॥

शरदादिभ्यः अः स्यात् अव्ययीभावे। शरत्, मनस्, मनस्, चतुर्, उपानह्, दिव्, हिमवत्, अनुडुह्, दिश्, दृश्। इति शरदादि। उपशरदम्, उपदिशम्, अनुदृशम् इत्यादि।

६· ·१··१·

जराया जरस् च ॥ १०२६ ॥

जराशब्दात् अः स्यात्, तत्सन्नियोगे च जरास्थाने जरस् इत्यादेशः स्यात् अव्ययीभावे। उपजरसम्।

५ः· ५·

प्रतिपरःसमनुभ्योऽक्ष्णः ॥ १०२७ ॥

एभ्यः अक्षिशब्दात् अः स्यात् अव्ययीभावे। परशब्द-समानार्थकः परःशब्दः अपि अस्ति परःशताद्यास्ते येषाम् इत्यादिप्रयोगात्। इति अप्रत्यये (८०३ सू०) इवर्ण-लोपे प्रत्यक्षम्, परोक्षम्, समक्षम्, अन्वक्षम्।

५· ५··१··१·

अनः क्लीबात्तु वा ॥ १०२८ ॥

अनन्तात् अः स्यात् अव्ययीभावे, क्लीवलिङ्गानन्तात् तु वा। इति अप्रत्यये।

६· ६· ६· १· ७·

नान्तस्य भस्य टेर्लोपः समासान्ते * ॥१०२९॥

समासान्तप्रत्यये परे भसंज्ञस्य नान्तस्य टेः लोपः स्यात्। अनः अल्लोपापवादः। इति टिलोपे आत्मनि अध्यात्मम्, राजनि अधिराजम्। क्लीवानन्तात् तु, चर्मणः समीपे उपचर्मम् उपचर्म वा।

५· ५· ·१·

झयन्ताद्गिरिनदीपौर्णमासीभ्यो वा ॥१०३०॥

झयन्तात् गिर्य्यादिभ्यश्च अः स्यात् वा अव्ययीभावे। उपसमिधम् उपसमित् वा। उपदृषदम् उपदृषत् वा। अनुगिरम् अनुगिरि वा। उपनदम् उपनदि वा।

इति अव्ययीभावः।

---

तत्पुरुषप्रकरणम्।

·१· ३ः· ·१·

द्वितीया—श्रितातीतगतप्राप्तापन्नादिभिर्वा

८· १· १·

—समस्यते स तत्पुरुषः॥ १०३१ ॥

श्रितादिभिः सह द्वितीयान्तं पदं वा समस्यते सः तत्पुरुषसंज्ञः स्यात्। तत्पुरुषः इति पदम् आप्रकरणसमाप्ति सर्वत्र अनुवर्त्त्यम्। कष्टं श्रितः कष्टश्रितः। कालम् अतीतः कालातीतः। ग्रामं गतः ग्रामगतः। सुखं प्राप्तः सुखप्राप्तः। मर-

* टिलोपकरणं स्पष्टार्थं, नकारलोपे अपि उपधाभूताकारवर्णयोः लोपसम्भवात् अवर्णवर्णोपधभिन्नस्य नान्तस्य अप्रसिद्धत्वात्। अतएव तद्धिते नलोपमात्रं विधास्यते।

णम् आपन्नः मरणापन्नः। आदिना गमिगम्यादयः गृह्यन्ते। ग्रामं गमी ग्रामगमी ग्रामं गामी ग्रामगामी। अन्नं बुभुक्षुः अन्नबुभुक्षुः इत्यादि। अत्र द्वितीयेति पदं विभज्यते, तेन द्वितीयान्तं समर्थेन क्वचित् असमर्थेन च समस्यते। तेन वृक्षम् आरूढः वृक्षारूढः इत्यादौ समर्थेन, अत्यन्तं वल्लभः, नितान्तं दीर्घः इत्यादेश्च अपेक्षितया भवति इत्यादिक्रियया सह सापेक्षतया वल्लभादिना असमर्थेन अपि अश्राद्धभोजी इत्यादौ भोजनान्वयि नञेव समासः, श्रितादिग्रहणं प्रपञ्चार्थम्।

१· ७· २·

**खट्वा क्षेपे क्तेन—॥ १०३२॥**

क्षेपगम्ये द्वितीयान्तं खट्वापदं क्तान्तेन सह समस्यते, सः तत्पुरुषः इति सर्वत्र वाक्यशेषः। खट्वाम् आरूढः खट्वारूढः मूर्खः।

·१· १·

**सामि—क्रियाविशेषणम्॥ १०३३॥**

क्रियाविशेषणं द्वितीयान्तं सामि ( अर्द्धवाचि ) क्तान्तेन सह वा समस्यते। सामिकृतम् अर्द्धं यथा स्यात् तथा कृतम् इत्यर्थः। पूर्वं गाधिसुतेन सामिघटिता मुक्तार्द्धमन्दाकिनी इति नैषधः।

१:·

**कालाः—॥ १०३४॥**

द्वितीयान्ताः कालवाचकाः शब्दाः क्तान्तेन सह वा समस्यन्ते। अनत्यन्तसम्बन्धार्थम् आरम्भः। मासं प्रमितः प्रतिपच्चन्द्रः मासं परिच्छेत्तुम् आरब्धवान्।

७· ३·

**अत्यन्तसम्बन्धे—समर्थेन॥ १०३५॥**

अत्यन्तसम्बन्धे या द्वितीया तदन्तं समर्थेन वा समस्यते। क्षणं सुखं क्षणसुखं, मुहूर्त्तं दुःखं मुहूर्त्तदुःखम्।

७ः ·१· ३· २·

कर्त्तृकरणयो—स्तृतीया—क्तता बहुलम् ॥ १०३६ ॥

कर्त्तरि करणे च या तृतीया तदन्तं पदं क्तदन्तेन सह बहुलं समस्यते। राज्ञा पालितः राजपालितः। अस्त्रैः विदारितः अस्त्रविदारितः। अनयोः किं, विद्यया स्थितः इत्यादौ हेतुतृतीया न। बहुलग्रहणात् दात्रेण लूनवान्, अश्वेन गतवान् इत्यादौ न। क्तता इत्युक्तेः तद्धितेन न, काष्ठैः पचतिकल्पम्।

७· ३ः·

अर्थवादवचने कृत्यैः ॥ १०३७ ॥

अर्थवादस्य ( निन्दायाः स्तुतेः वा आधिक्यस्य ) वचने कर्त्तरि करणे च या तृतीया तदन्तं कृत्यान्तैः सह समस्यते। वातच्छेद्यं तृणं सुखच्छेद्यम् इत्यर्थः। अत्र निन्दार्थवादः। काकपेया नदी। अत्र पूर्णजलत्वेन स्तुत्यर्थवादः।

३· १· ३· १· ·१·

अन्नेन व्यञ्जनं भक्ष्येण मिश्रीकरणाच्च ॥१०३८॥

अन्नेन सह व्यञ्जनं ( संस्कारद्रव्यम् ) तृतीयान्तं भक्ष्यं कठिनं विच्छिन्नावयवं यत् द्रव्यं तेन सह मिश्रीकरणवाचि तृतीयान्तश्च वा समस्यते। दध्ना ओदनः दध्योदनः। इह अन्तर्भूतोपसेचनद्वारा सापेक्षता। गुड़ेन धानाः गुड़धानाः। इह मिश्रीकरणद्वारा सापेक्षता।

·३· ३·

**स्वयं क्तेन ॥ १०३९ ॥**

स्वयम् इति तृतीयान्तम् अव्ययम्। तच्च क्तान्तेन सह वा समस्यते। स्वयंकृतम् स्वयंभुक्तम्। समासे सति स्वयंकृतिः इति समुदायात् तद्धिते आद्यचः वृद्धिः।

३ः·

**पूर्वसदृशसमानोनार्थकलहनिपुणमिश्रार्थैः ॥ १०४० ॥**

तृतीयान्तं पूर्वादिभिः वा समस्यते। अप्राप्तौ वचनम्। मासपूर्वः मातृसदृशः पितृसमः। ऊनार्थे माषोनं माषविकलं कार्षापणम्। वाक्कलहः। आचारनिपुणः। गुड़मिश्रः। धान्येन अर्थः धान्यार्थः।

·१· ३ः·

**चतुर्थी बलिहितार्थसुखरक्षितैः ॥ १०४१ ॥**

चतुर्थ्यन्तं बलिहितादिभिः वा समस्यते। भूतबलिः। गोहितः। विप्रसुखम्। गोरक्षितम्।

·७· ३· ·१·

**तादर्थ्ये प्रकृतिवाचिनैव ॥ १०४२ ॥**

तादर्थ्ये या चतुर्थी तदन्तं तदर्थप्रकृतिवाचिपदेन एव वा समस्यते। यूपाय दारु यूपदारु। प्रकृतिवाचिना इत्युक्तेः रन्धनाय स्थाली इत्यादौ न।

·१· ३ः·

**पञ्चमी—भीत्यादिभिः ॥ १०४३ ॥**

पञ्चम्यन्तं भीत्यादिभिः वा समस्यते। चौरात् भीतिः चौरभीतिः, ग्रामनिर्गतः, धर्मप्रमादः, अधर्मविरतः इत्यादि।

३ः

## अपेतापोढ़मुक्तपतितैः ॥ १०४४ ॥

एभिः सह पञ्चम्यन्तं वा समस्यते। दुःखात् अपेतः दुःखापेतः। कल्पनापोढ़ः। रोगमुक्तः।

·१· ३ः· ·१·

## षष्ठी याजकादिभिश्च ॥ १०४५ ॥

षष्ठ्यन्तं समर्थेन याजकादिभिश्च सह वा समस्यते। तृज-काभ्यां कर्त्तरि इति निषेधे याजकादिग्रहणम्। राज्ञः पुरुषः राजपुरुषः। याजक, पूजक, परिचारक, परिवेषक, अध्यापक, उत्पादक, उद्वर्त्तक, होतृ, भर्त्तृ एते याजकादयः। शूद्रयाजकः देवपूजकः ग्रामभर्त्ता।

·१· ७·

## न निर्द्धारणे— ॥ १०४६ ॥

निर्द्धारणार्थे या षष्ठी तदन्तं न समस्यते। नृणां द्विजः श्रेष्ठः।

२· ·१· ·१·

## प्रतिपदं विहिता च ॥ १०४७ ॥

प्रतिपदं सर्वस्मिन् पदे स्मरणार्थदयेशाम् इत्यादिसूत्रसमूहेन या षष्ठी विहिता सा न समस्यते। पुत्रस्य दया। मातुः स्मरणम्। सुवर्णस्य उपस्कारः इत्यादि।

३ः· ·१·

## पूरणगुणवर्त्तमानार्थकाव्ययैश्च ॥ १०४८ ॥

पूरणाद्यर्थे वर्त्तमानार्थकशत्रादिभिः तदव्ययेन च सह षष्ठी न समस्यते। तत्र पूरणे, सतां तृतीयः। गुणे, दन्तस्य शुक्लः। ये शब्दाः गुणवाचकाः एव गुणिनि वर्त्तन्ते, ते एव

शब्दाः यदि गुणपराः, तदा तैः सह न समासः इति सिद्धान्तः। तेन अर्थलाघवं बुद्धिमान्द्यम् इत्यादि स्यात् एव। वर्त्तमानार्थकेन, द्विजस्य कुर्वन् कुर्वाणः वा किङ्करः इत्यर्थः। कृदव्ययेन, द्विजस्य कृत्वा कर्त्तुं वा *।

३ः ·१·

## वर्त्तमानाधारार्थकक्तैश्च ॥ १०४९ ॥

षष्ठ्यन्तं वर्त्तमानाद्यर्थकक्तान्तेन सह न समस्यते। राज्ञः मतः पूजितः वा। इदम् एषाम् आसितं गतं भुक्तं वा।

७· ७·

## उभयप्राप्तौ कर्मणि ॥ १०५० ॥

उभयप्राप्तिविषये कर्मणि एत्र या षष्ठी सा समर्थेन सह न समस्यते। आचार्य्येण शब्दानाम् अनुशासनम् †।

३ः ७·

## तृजकाभ्यां कर्त्तरि ॥ १०५१ ॥

कर्त्रर्थतृजकान्ताभ्यां सह षष्ठी न समस्यते। काव्यानां रचयिता। शिशोः भर्त्ता, पत्यर्थकभर्त्तृशब्दस्य तु याजकादित्वात् समासः। कर्मषष्ठ्या समासनिषेधार्थम् इदम्। सम्बन्धषष्ठ्या तु समासः इष्यते एव। तेन त्रिभुवनविधातुश्च कलहः इत्यादि सिद्धम्।

* द्विजस्य इति षष्ठी सम्बन्धविवक्षया, कृद्योगलक्षणा तु न, शतृप्रयोगे तन्निषेधात्।

† अथ शब्दानुशासनम् इति भाष्यप्रयोगस्तु आचार्य्यपदानुपादानात्, सति तु आचार्य्यरूपकर्त्रादिशब्दप्रयोगे असमासः एव।

१:· ३· ३·

पूर्वापरावरोत्तरा अवयविनैकद्रव्येण * ॥१०५२॥

पूर्वादयः एकदेशाः अवयविना सह समस्यन्ते, अवयवी चेत् एकत्वविशिष्टः। षष्ठीसमासापवादः। पूर्वादीनां पूर्वनिपातार्थम् इदम्। अवयवावयविसम्बन्धे षष्ठी। पूर्वं कायस्य पूर्वकायः। अपरकायः। एकद्रव्येण इति किं, पूर्वः छात्राणाम् इत्यादौ बहुत्वे न।

१· ·१· १· ३·

सर्वोऽप्येकदेशः कालवाचिना ॥ १०५३ ॥

सर्वः अपि एकदेशवाचकशब्दः कालरूपैकदेशिवाचिना सह वा समस्यते। मध्यरात्रः। उपारताः पश्चिमरात्रगोचरात् इति। अत्र वक्ष्यमाणेन अप्रत्ययः।

१· १·

अर्द्धं नपुंसकम् ॥ १०५४ ॥

नपुंसकलिङ्गः (तुल्यार्द्धवाची) यः अर्द्धशब्दः † सः एकदेशिना सह वा समस्यते। अर्द्धं पिप्पल्याः इति अर्द्धपिप्पली। अर्द्धनदी। गौणत्वे अपि।

१· ७· १· ७· ·१· १·

षष्ठ्यन्तमेकदेशिसमासे गौणमन्ते न क्रमम् ॥ १०५५ ॥

* अनुहृत्तं षष्ठीपदं विपरिणामेण तृतीयान्तं प्रकल्प्य अवयविना इति अन्वयितव्यम्। तथा च षष्ठ्यन्तेन अवयविना सह अवयवाः पूर्वादयः समस्यन्ते इति अर्थलाभः।

† तुल्यार्द्धेत्युक्तेः असमानवाचिनः अर्द्धशब्दस्य षष्ठीसमासः एव, तेन ग्रामार्द्धं स्तिमितजवेन गत्वा इति रघुः।

एकदेशिसमासे षष्ठ्यन्तपदं गौणम् अन्ते स्थितं न ह्रस्वं * स्यात् । इति षष्ठ्यन्तप्रकृतिकतया वक्ष्यमाणेन ह्रस्वनिषेधः ।

·१· ३· ३ः ·१·

## सप्तमी समर्थेन शौण्डादिभिश्च ॥ १०५६ ॥

सप्तम्यन्तं समर्थेन शौण्डादिभिश्च सह वा समस्यते । शौण्ड, धूर्त्त, कितव, प्रवीण, पण्डित, निपुण, पटु, कुशल, चपल । इति शौण्डादि । पुरुषेषु उत्तमः पुरुषोत्तमः । अक्षशौण्डः । अक्षधूर्त्तः । शौण्डादिग्रहणं प्रपञ्चार्थम् । पक्षे वाक्यम् ।

१ः २·

## कुगतिप्रादयो नित्यम् ॥ १०५७ ॥

कुशब्दः गतिसंज्ञकाः प्रादयश्च समर्थेन सह नित्यं समस्यन्ते । कुत्सितः पुरुषः कुपुरुषः । गतिसंज्ञकास्तु ऊर्य्यादयः, च्व्यन्ताः, डाजन्ताः, अनुकरणम् (पटत् भनत् प्रभृति) हस्ते, पाणौ, सत्, अलम्, पुरस्, अस्तस्, तिरस्, साक्षात्प्रभृतयः इत्यादयः । एते च प्रायः कृञि परे एव । तत्र अपि तिरस्-साक्षात्प्रभृतयः कृञि वा गतिसंज्ञाः । तत्र ऊर्य्यादिषु, एतेषां गतिसंज्ञया समासे अव्ययपूर्वकत्वात् क्त्वास्थाने ल्यपि ऊरीकृत्य उररीकृत्य सजुःकृत्य वषट्कृत्य स्वधाकृत्य स्वाहाकृत्य प्रादुष्कृत्य आविष्कृत्य । च्व्यन्ते, शुक्लीकृत्य । प्रायः इत्युक्ते यथासम्भवं भवती अपि शुक्लीभूय । डाजन्ते, पटपटाकृत्य अनुकरणे, भनत्कृत्य । हस्तेकृत्य । पाणौकृत्य । सत्कृत्य । अलङ्कृत्य । पुरस्कृत्य । अस्तंकृत्य । तिरस्कृत्य तिरस्कृत्वा वा । साक्षात्

---

* गौणत्वम् इतरांशे विशेषणत्वं भवति च निष्कौशाम्बि इत्यादौ कौशम्ब्याः निष्क्रमणांशे विशेषणत्वम् इति ।

कृत्य साचात्कृत्वा वा। नमस्कृत्य नमस्कृत्वा वा। उप-
सर्गाणां गतित्वे अपि अक्रियायोगार्थं प्रादीनां पृथग्ग्रहणम्।
तेन प्रकृत्य प्रहृत्य इत्यादिवत् प्रकृष्टं बलं प्रबलम् सुष्ठु
पुरुषः, सुपुरुषः इत्यादि सिद्धम्। प्रादिसमासे तु अयं विशेषः।

१ः ७ ३

## अत्यादयः क्रान्ताद्यर्थे द्वितीयया ॥ १०५८ ॥

क्रान्ताद्यर्थे वर्त्तमानाः अत्यादयः शब्दाः द्वितीयान्तेन
सह नित्यं समस्यन्ते। अतिक्रान्तः नृपम् अतिनृपः। अति-
क्रान्तः गाम् इति वाक्ये वक्ष्यमाणेन अप्रत्यये।

६ः १ ७ ७ १

## गोस्त्रीप्रत्ययान्तयोर्ह्रस्वोऽन्ते गौणत्वे न

१ ५

## त्वीयसः ॥ १०५९ ॥

गौणत्वे सति अन्तस्थितस्य गोशब्दस्य स्त्रीप्रत्ययान्तस्य
( आबीबूङन्तस्य ) च ह्रस्वः स्यात्, न तु ईयसः परस्त्रीप्रत्य-
यान्तस्य। इति ह्रस्वे।

६ ६ १ ७ ७ १

## ओर्भस्य गुणस्तद्धिते समासान्ते च ॥ १०६० ॥

भसंज्ञकस्य उवर्णस्य गुणः स्यात्, तद्धिते समासान्ते च
परे। इति गुणे अतिगवः। आपः—अतिमर्य्यादः। ईपः—
अतिनदिः। ऊङः—अतिवामोरुः इत्यादि। स्त्रीप्रत्यया-
न्तत्वाभावात् अतिलक्ष्मीः, अतिश्रीः, अतिभ्रूः, अतिचमूः
इत्यादौ न ह्रस्वः। ईयसस्तु अतिश्रेयसी इत्येव। अत्र पुंसि
अपि ईवन्तत्वात् सुलोपः। एवम् उद्गतः वेलाम् उद्वेलः।
अभिगतः मुखम् अभिमुखः। प्रतिगतः अक्षि प्रत्यक्षः। समगतः
अक्षि समक्षः।

१: ७· ३·
## निरादयो निष्क्रान्ताद्यर्थे पञ्चम्या ॥१०६१॥

निष्क्रान्ताद्यर्थे वर्त्तमानाः निरादयः पञ्चम्यन्तेन सह प्राग्वत्। निष्क्रान्तः ग्रामात् निर्ग्रामः। निर्गतः द्वन्द्वात् निर्द्वन्द्वः। निर्गतः नद्याः निर्नदिः।

१· ३· २· ३: ·१·
## उपपदमतिङ्समर्थेन नित्यमव्ययाभ्यां त्वम-

३: ·१·
## न्ततत्सहितविहिताभ्यामेव * ॥ १०६२ ॥

तिङ्भिन्नम् उपपदम् ( प्रत्ययादिविधायकसूत्रे सप्तम्यन्तपदोपस्थाप्यम् ) समर्थेन सह नित्यं समस्यते, सः तत्पुरुषः, अव्ययेन तु अमन्तेन तत्सहविहितेन एव ल्यप्क्त्वादिना। पुनर्नित्यग्रहणात् नित्याधिकारः निवृत्तः। यथा कर्मण्यण् इत्यादौ कर्मणि इति सप्तम्यन्तपदोपस्थाप्यं कुम्भ इत्यादिपदं तस्य अण्प्रत्ययान्तेन सह अग्रे समासः पश्चात् प्रातिपदिकसंज्ञया ततः सुप् गतिकारकोपपदानां कृद्भिः समासः प्राक् सुबुत्पत्तेः इत्युक्तेः। अन्यथा व्याजिघ्रति या सा इति वाक्ये अदन्तत्वात् प्रथमम् टाप् एव स्यात्, ततश्च अदन्तत्वाभावात् जातिलक्षणः ङीप् न।

·१· ३·
## नञ् समर्थेन † ॥ १०६३ ॥

* कुगतीत्यादिसूत्रात् नित्यानुवृत्तौ अपि पुनर्नित्यग्रहणम् उत्तरत्र अननुवृत्त्यर्थम्।

† नित्याधिकारनिवृत्तौ विभाषाधिकारे अनपवादकतया पुनः प्रवृत्ते न नित्यसमासस्तेन न घट इत्यादि वाक्यमपि।

नञ्पदं समर्थेन सह समस्यते, सः तत्पुरुषः। न विप्रः अविप्रः। अयञ्च नञ् सर्वत्र भेदबोधकः। भावव्रदन्तयोगि तु अभावबोधकः। तेन अघटः इत्यादौ घटभेदस्य, अनुपालम्भः इत्यादौ उपालम्भाभावस्य च बोधः। निषेधार्थकनकारेण सुप् सुपा इति समासे नैकधेत्यादौ न अन्भावः इति प्रक्रियाकौमुदीकारमल्लिनाथादयः।

१· १· १·
**समानाधिकरणस्तत्पुरुषः कर्मधारयः**

१· ·१· १· ७·
**संख्यापूर्वस्तु द्विगुरसंज्ञायाम् ॥ १०६४ ॥**

अभेदेन अन्वितार्थकः शब्दः समानाधिकरणः। तादृशपदयुक्तः तत्पुरुषः कर्मधारयसंज्ञः स्यात्, तादृशः चेत् संख्यापूर्वः तदा द्विगुसंज्ञः स्यात्, न तु संज्ञायाम्। नीलम् उत्पलम् नीलोत्पलम्। तत्पुरुषः किम्, अन्यपदार्थे बहुव्रीहौ नीलाम्बरः इत्यादौ मा भूत्। द्वयोः पात्रयोः समाहारः, समाहृते द्वे पात्रे वा, त्रयाणां लोकानां नाथः, तिसृणां मातृणाम् अपत्यम् इत्यादौ समाहारोत्तरपदतद्धितार्थद्विगूनाम् अपि * समानाधिकरणपदयुक्तत्वे अपि संख्यापूर्वकत्वेन विशेषेण द्विगुत्वम्। संज्ञायां तु संख्यापूर्वकस्य अपि सप्तर्षयः पञ्चाम्राः इत्यादेः न द्विगुत्वम्, किन्तु कर्मधारयत्वम्। तत्र पूर्वनिपातादिनियमः यथाप्रयोगम्।

१· ३· ३·
**विशेषणं विशेष्येण बहुलम् ॥ १०६५ ॥**

---

* इत्यादौ इत्येवं विग्रहवाक्ये निष्पन्नानां क्रमेण द्विपात्रं त्रिलोकनाथः त्रैमातुरः इत्यादीनां समाहारादीनाम् इत्यर्थः।

सति अपि अभेदे विशेषणपदम् एव विशेष्येण सह समस्यते, सः कर्मधारयः। एवञ्च तस्य प्रथमान्ततया निर्देशात् पूर्वनिपातः। नीलोत्पलं शुभ्रवस्त्रम् पाचकचैत्रः इत्यादि। एवं विशेषणयोः अपि एकस्य विशेष्यताविवक्षया समासः। तत्र सुन्दरपाचकः पाचकसुन्दरः इत्यादौ विवक्षया एव भेदः। एवं नीललोहितः इत्यादि। तत्र अयं नियमः बहुलग्रहणात् क्वचित् नित्यं समस्यते। यथा—कृष्णसर्पः। क्वचित् न। यथा—पाण्डरः शङ्खः, रामः जामदग्न्यः इत्यादि।

१. २.
## पूर्वकालिकं उत्तरकालिकेन ॥ १०६६ ॥

पूर्वकालिकपदार्थबोधकशब्दः उत्तरकालवृत्तिपदार्थबोधकेन सह वा समस्यते। तत्र पूर्वकालिकस्य प्रथमान्ततया निर्देशात् पूर्वनिपातः। पूर्वं स्नातः पश्चात् अनुलिप्तः स्नातानुलिप्तः। पक्वभुक्तम्।

१. २.
## ईषद् गुणवचनेन ॥ १०६७ ॥

ईषत्पिङ्गलः। ईषच्छुभ्रः। ईषदुष्णः।

१. २.
## एकसर्वजरत्पुराणनवकेवलाः समर्थेन ॥ १०६८ ॥

एकादयः समर्थेन सुबन्तेन विशेष्यतया विवक्षितेन सह वा समस्यन्ते। तत्र च एकादीनाम् एव प्राक् प्रयोगः। एकनाथः। एकसुन्दरः। सर्वज्ञेतः। जरन्नैयायिकः। पुराणमीमांसकः। नवपाठकः। केवलतार्किकः इत्यादि।

१. २.
## उपमानानि सामान्यधर्मवाचकैः ॥ १०६९ ॥

उपमानार्थकाः शब्दाः उपमानोपमेययोः सामान्यधर्म-वाचकशब्दैः सह वा समस्यन्ते, सः कर्मधारयः। पूर्वनिपातार्थं सूत्रम्। घनः इव श्यामः घनश्यामः। समुद्रः इव गम्भीरः समुद्रगम्भीरः। इह घनादिशब्दाः एव तत्तत्सदृशे लाक्षणिकाः इत्येव सूचयितुं विग्रहवाक्ये इवशब्दप्रयोगः। अतएव समासकाले न तस्य प्रयोगः।

१· २ः· ७·

उपमितं व्याघ्रादिभिः सामान्याप्रयोगे ॥१०७०॥

उपमेयवाचकः शब्दः व्याघ्रादिभिः उपमानैः सह वा समस्यते उपमानोपमेययोः सामान्यधर्मस्य अप्रयोगे। पुरुषः व्याघ्रः इव पुरुषव्याघ्रः। ना सोमः इव नृसोमः। व्याघ्रादिः आकृतिगणः। अत्र व्याघ्रादिशब्दः एव व्याघ्रादिसदृशे लाक्षणिकः, तेन तस्य पुरुषादेः विशेषणत्वे अपि एतत्सूत्रात् परनिपातः। सामान्याप्रयोगे किं, पुरुषः व्याघ्रः इव शूरः इत्यादौ न।

१ः· २·

सन्महत्परमाः समर्थेन ॥ १०७१ ॥

सदादयः समर्थेन वा समस्यन्ते। सद्वैद्यः। महापुरुषः। वक्ष्यमाणेन महतः तकारस्य आकारः। परमकारुणिकः।

१· २ः· ३ः·

प्रशस्यमानं वृन्दारकनागकुञ्जरैः पूज्यार्थैः ॥ १०७२ ॥

पूज्यार्थैः वृन्दारकनागकुञ्जरशब्दैः सह प्रशस्यमानं समस्यते। सामान्यप्रयोगार्थं सूत्रम्। गोवृन्दारकः। राजनागः *। नरकुञ्जरः।

---

* राजा नागः इव प्रशस्यः इत्याद्यर्थः समासलभ्यः।

१ः

पूर्वापरप्रथमचरमजघन्यसमानमध्यमवीराः ॥ १०७३ ॥

पूर्वादयः समर्थेन सह वा समस्यन्ते । पूर्वनिपातार्थम् इदम् । पूर्ववैयाकरणः । अपराध्यापकः * ।

६· ७· १·

अपरस्यार्द्धे पश्चादेशः ॥ १०७४ ॥

अपरशब्दस्य अर्द्ध शब्दे परे पश्चादेशः स्यात् । पश्चार्द्धम् ।

१ः

मयूरव्यंसकादयः ॥ १०७५ ॥

एते निपात्यन्ते । मयूरः एव व्यंसकः (धूर्त्तः) मयूरव्यंसकः । कुमारब्रह्मचारी । परनिपातार्थम् इदम् । अन्यः राजा राजान्तरम् । उदक् च अवाक् च उच्चावचम् । अकिञ्चनः । अकुतोभयः । चित् एव चिन्मात्रम् । इत्यादयः (सि० २६६ पृ० ) द्रष्टव्याः ।

६ः १·

शाकप्रियादीनामुत्तरपदलोपः ॥ १०७६ ॥

शाकप्रियः पार्थिवः शाकपार्थिवः । देवपूजकः ब्राह्मणः देवब्राह्मणः इत्यादि । आकृतिगणः ।

१ः ७· ३ः

श्रेण्यादयश्च्व्यर्थे कृतादिभिः ॥ १०७७ ॥

च्विप्रत्ययार्थे (अभूततद्भावार्थे) श्रेण्यादयः कृतादिभिः सह

---

* विशेषणयोः मध्ये एकस्य विशेष्यताविवक्षया अपि समासस्य इष्टतया विवक्षया उभयस्य अपि विशेष्यत्वप्राप्तौ पूर्वादेः एव विशेषणत्वविवक्षा इति नियमार्थं सूत्रम् ।

वा समस्यन्ते। श्रेण्यादयश्च (सि० पू० ३६० पृ०) द्रष्टव्याः। श्रेणिकृतः। राशिकृतः। पुञ्जकृतः। पक्षे श्रेणीकृतः इत्यादि।

३· ३· १·

## क्तेन नञ्विशिष्टेनानञ्क्तान्तः ॥ १०७८ ॥

अनञ्क्तान्तः नञ्विशिष्टेन क्तान्तेन सह वा समस्यते। कृतञ्च अकृतञ्च कृताकृतम्। ज्ञाताज्ञातम्।

७· ७· ७· ·१· १·

## समाहारे उत्तरपदे तद्धितार्थे च द्विगुः ॥१०७९॥

संख्यापूर्वः समानाधिकरणपदयुक्तः तत्पुरुषः द्विगुः इत्युक्तम्। तस्य त्रिधा भेदः—समाहारे अर्थे, तद्धितार्थे विषये, उत्तरपदे च परे।

७· १· १· ·१· १·

## समाहारे द्विगुद्वन्द्वश्चैकवचनः ॥ १०८० ॥

समाहारार्थे द्विगुः द्वन्द्वश्च एकवचनः स्यात्। तत्र पात्राद्यन्तभिन्नादन्तानां स्त्रीत्वम्, अनन्तानाम् आबन्तानान्तु वा, तदन्येषां च क्लीवत्वम् अग्रे वक्ष्यते। तत्र समाहारे, त्रयाणां भुवनानां समाहारः समाहृतानि वा त्रीणि भुवनानि त्रिभुवनम्। त्रयाणां लोकानां समाहारः त्रिलोकी (९०८ सू०) ईप्। उत्तरपदे, पञ्च गावः धनं यस्य सः पञ्चगवधनः इत्यादौ धनः इति उत्तरपदे परे पञ्चगवेत्यस्य द्विगुत्वं, तेन वक्ष्यमाणेन ततः समासान्तः टप्रत्ययः। तद्धितार्थे, द्वयोः मात्रोः अपत्यं द्वैमातुरः, षाण्मातुरः।

# अथ तत्पुरुषीयसमासान्तप्रकरणम्।

५: ५· ५· १·

## संख्याव्ययाभ्यामङ्गुलेस्तत्पुरुषादः—॥१०८१॥

संख्यादेः अव्ययादेश्च अङ्गुल्यन्तात् तत्पुरुषात् अः स्यात्। इति अप्रत्यये इवर्णलोपे समाहृताः पञ्च पङ्गुलयः इति पञ्चाङ्गुलम्। द्वे अङ्गुली प्रमाणम् अस्य इति वाक्ये प्रमाणार्थकमात्रादितद्धितप्रत्यये।

५· ६· ६· १·

## द्विगोः प्रमाणार्थकस्य तद्धितस्य लोपः॥१०८२॥

द्विगुसमासात् परस्य प्रमाणार्थकतद्धितप्रत्ययस्य लोपः स्यात्। इति तल्लोपे अप्रत्यये इवर्णलोपे द्व्यङ्गुलम्। अव्ययादेः, निर्गतम् अङ्गुलीभ्यः निरङ्गुलम्। एवं प्रकृष्टाः अङ्गुलयः प्राङ्गुलाः।

५:· ·१· ५·

## सर्वैकदेशसंख्यातपुण्येभ्यश्च रात्रेः॥१०८३॥

सर्वादिभ्यः, चात् संख्याव्ययाभ्यां, परस्मात् रात्र्यन्तात्तत्पुरुषात् अः स्यात्। सर्वरात्रः। अपररात्रः। संख्यातरात्रः। पुण्यरात्रः। संख्याव्ययादेस्तु द्विरात्रम् अतिरात्रः। रात्राह्नाहान्ताः पुंसि संख्यापूर्वकरात्रान्तं तु नपुंसकम् इत्यग्रे वक्ष्यते।

५:· १·

## राजाहःसखिभ्यष्टः॥१०८४॥

राजाद्यन्तेभ्यः तत्पुरुषेभ्यः टः स्यात्। टः इत्। टित्त्वात् स्त्रियाम् ङीप्, अतिराजी। परमराजः। समाहृताः पञ्च राजानः पञ्चराजी। शरणागतसखः। परमसखः। अति-

सख्युः। पञ्चसखम्। अहन्नन्तात् अप्रत्यये (१०२८ सू०) टिलोपे उत्तमाहः, परमाहः।

६· ६· १· ७· ७· १·

भस्याह्नोऽह्नस्तद्धिते टे तु सर्वैकदेशसंख्या-

६· ७· ७· ५·

तसंख्याव्ययादेरसमाहारेऽखेऽनेकात् ॥१०८५॥

भसंज्ञकस्य अहन्शब्दस्य स्थाने अह्नः इत्यादेशः स्यात् तद्धिते परे, टे परे तु सर्वैकदेशादेः, न तु समाहारे, न च खविषये, न अपि एकशब्दात्। इति अह्नादेशे पूर्वाह्णः अपराह्णः वक्ष्यमाणेन णत्वम्। संख्यताह्नः। एभ्यः किं, पुण्याहः। संख्यादेः, द्वयोः अह्नोः भव इत्यादौ।

६· १· ६: ६· ६·

द्विगोर्लुगनपत्यार्थखयोरजादेस्तद्धितस्य ॥१०८६॥

द्विगुसमासात् परस्य अजादेः तद्धितस्य अपत्यार्थखाभ्यां भिन्नस्य लुक् स्यात्। इति तद्धितस्य ठस्थानिकस्य इकस्य लुकि टे तत्परे अह्नादेशे च द्व्यह्नः। खविषये तु अह्नादेशाभावे टिलोपे द्वाभ्याम् अहोभ्यां साध्यः द्व्यहीनः क्रतुः। एकशब्दात् एकाहः। अव्ययादेः, अत्यह्नः। समाहारे तु, द्व्यहः। पञ्चाहः। टे किम्, स्वहः पूजनार्थतया सोः परस्मात् समासान्तनिषेधः अग्रे वक्ष्यते। परागतम् अहः यस्मात् इति बहुव्रीहौ च समासान्ताभावात् न, तत्र पराहा।

५· ७·

गोरतद्धितलुकि— ॥ १०८७ ॥

गोशब्दान्तात् तत्पुरुषात् टः स्यात् न तु तद्धितलुकि। परमगवः, स्त्रियां परमगवी। अतिगवः। सप्ताङ्गुली, द्वौ

गावौ द्विगवम्। द्वौ गावौ धनम् अस्य द्विगवधनः। तद्धित-लुकि तु, द्वाभ्यां गोभ्यां क्रीतः इत्यर्थे तद्धितस्य अणः लुकि कृते च द्विगुः।

५: ५· ·१·

## द्वित्रिभ्यामञ्जलेर्वा ॥ १०८८ ॥

आभ्यां परस्मात् अञ्जलेः टः स्यात् वा, न तु तद्धितलुकि। समाहृतौ, द्वौ अञ्जली द्व्यञ्जलं द्व्यञ्जलि वा। तद्धितलुकि तु, द्वाभ्याम् अञ्जलिभ्यां क्रीतः द्व्यञ्जलिः।

५· ५· ·१·

## नावोऽर्द्धात् द्विगोश्च ॥ १०८९ ॥

अर्द्धशब्दात् परस्मात् नौशब्दात् तदन्तात् द्विगोश्च टः स्यात्। अर्द्धं नावः अर्द्धनावम्। द्वयोः नावोः समाहारः द्विनावम्। द्विगोः इत्युक्तेः तद्धितलुकि अपि, द्वाभ्यां नौभ्यां क्रीतः द्विनावः।

५:· ५· १·

## जातवृद्धमहद्भ्य उक्ष्णोऽः ॥ १०९० ॥

एभ्यः उक्ष्णः अः स्यात्। जातोक्षः। वृद्धोक्षः। महोक्षः।

५: ५· ·१·

## कुमहद्भ्यां ब्रह्मणो वा ॥ १०९१ ॥

आभ्यां ब्रह्मन्तात् तत्पुरुषात् षः स्यात् वा। कुत्सितः ब्रह्मा कुब्रह्मः कुब्रह्मा। महान् ब्रह्मा।

·१· ६· ७· ७· ·१·

## आद्—महतः समानाधिकरणे जातीये च

७:· ·१· ६· ·१· १· ·१·

**घासकरविशिष्टेषु तु महत्या अपि पुंवद्भावश्च ॥ १०९२ ॥**

समानाधिकरणे ( अभिन्नैकार्थके ) शब्दे जातीये प्रत्यये च परे महतः अन्तस्य त् इत्यस्य स्थाने आकारः स्यात्, घासकरविशिष्टेषु तु परेषु महत्याः, अपिकारात् महतः, तस्य आकारः, महत्याः पुंवद्भावश्च स्यात्। महाब्रह्मः महाजातीयः। महत्याः घासः करः वा महाघासः महाकरः। महत्या विशिष्टः महाविशिष्टः।

६: ७· ७: ७·

**द्व्यष्टनोः संख्यायामनशीतिशताद्योरबहुव्रीहौ ॥ १०९३ ॥**

संख्यावाचकशब्दे परे द्व्यष्टनोः अन्तस्य स्थाने आकारः स्यात्, न तु अशीतिशताद्योः परयोः, न च बहुव्रीहौ। द्विरावृत्ताः दश, द्व्यधिका वा दश, द्वादश शाकपार्थिवादित्वात् आवृत्ताधिकशब्दलोपः। एवम् अष्टादश। अशीत्यादौ तु, द्व्यशीतिः द्विशतं द्विसहस्रम्। द्वौ वा त्रयः वा इति वा अर्थे द्वित्रा इति बहुव्रीहौ तु न। अबहुव्रीहौ इत्युक्तेः, द्वौ च दश च इति द्वन्द्वे अपि स्यात्, द्वादश।

६· १·

**त्रेस्त्रयः ॥ १०९४ ॥**

पूर्वोक्तविषये त्रिशब्दस्य स्थाने त्रयः इत्यादेशः स्यात्। त्रयोदश। त्रयोविंशतिः।

७:· ७:· १·

**चत्वारिंशदादिषु नवत्यन्तेषु वा ॥ १०९५ ॥**

एषु परेषु पूर्वसूत्रद्वयोक्तं वा स्यात्। द्वाचत्वारिंशत् द्विचत्वारिंशत्। त्रयःपञ्चाशत् त्रिपञ्चाशत्। अष्टाषष्टिः अष्टषष्टिः। अशीत्यादौ तु प्रागुक्तनिषेधात् न।

·१· १· ६:

परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः ॥ १०६६ ॥

द्वन्द्वे तत्पुरुषे च समुदायस्य परस्य (समासोत्तरपदस्य) इव लिङ्गं स्यात्। हरिणचमर्य्यौ इमे। चमरीहरिणौ इमौ।

७· ·१·

द्विगुगतिसमासे न ॥ १०६७ ॥

द्विगौ गतिसमासे (निरादयः क्रान्ताद्यर्थे पञ्चम्या इत्यादौ) च प्रागुक्तं न स्यात्। पञ्चसु कपालेषु संस्कृतः इति वाक्ये तत्र संस्कृतः इत्यर्थे तद्धिते अणि प्रत्यये (१०८६ सू०) तल्लुकि च कपालस्य क्लीवतया तल्लिङ्गताप्राप्तौ अपि विशेष्यानुयायि-लिङ्गता एव इष्यते। पञ्चकपालः पुरोडाशः। एवं समाहारे अपि, पञ्चपात्रम्। गतिसमासे, निर्नदम् निर्नदिः।

१:· ७· १· १· ·१· १·

रात्राह्नाहाः पुंसि संख्यापूर्वं रात्रं तु क्लीवम् ॥ १०६८ ॥

कृतसमासान्ताः रात्राह्नाहान्ताः पुंलिङ्गाः स्युः, संख्या-पूर्वस्तु रात्रान्तः क्लीवं स्यात्। परवल्लिङ्गतापवादः। पूर्व-रात्रः। सर्वरात्रः। पूर्वाह्णः। उत्तमाहः। संख्यादेस्तु, समा-हृताः पञ्च रात्रयः पञ्चरात्रम्। गणरात्रम् बहुरात्रम् इत्यादि।

७· १· १· ·१· १·

समाहारे द्विगुर्द्वन्द्वश्च क्लीवम्—अपाचाद्य-

१· ·१· १··१ ·१· ७· १··१·

## द्वन्त: स्त्री अनाबन्तस्तु वा क्लीवत्वे ङश्च ॥१०६६॥

समाहारार्थक: द्विगुः द्वन्द्वश्च क्लीवलिङ्गः स्यात्। पञ्चपात्रम्। पाणिपादम्। पात्रादिभिन्नादन्तद्विगोस्तु स्त्रीत्वं, तेन (६०८ सू०) ईपि त्रिलोकी सप्तशती इत्यादि। अनन्तद्विगो: (६०६ सू०) वा ङीपि पञ्चकर्मी पञ्चकर्मम्। आबन्तद्विगो: वा ङीपि पञ्चखट्वी पञ्चखट्वम्। उभयत्र क्लीवत्वे ङप्रत्ययः।

६· ·१· ७·

## बहूनां छाया तत्पुरुषे ॥ ११०० ॥

बहुधर्मिकाणां छायान्त: तत्पुरुष: नपुंसकलिङ्गः स्यात्। वृक्षाणां छाया वृक्षच्छायम्। एकवचने तु वृक्षस्य छाया इत्यादौ परवल्लिङ्गत्वम्।

·१ ·१·

## सभा राजपर्य्यायामनुष्यपूर्वा ॥ ११०१ ॥

राजपर्य्यायपूर्वा अमनुष्यपूर्वा (मनुष्यभिन्नमनुष्यसदृशराक्षसपिशाचादिपूर्वा) च या सभा तदन्त: तत्पुरुष: क्लीवलिङ्गः स्यात्। नृपसभम्। ईश्वरसभम्। राक्षससभम्। पिशाचसभम्। राजविशेषवाचिपूर्वसभान्तस्तु न, चन्द्रगुप्तसभा, युधिष्ठिरसभा।

१:·

## सेनासुराशालासङ्घातार्थसभाः ॥ ११०२ ॥

एतदन्त: तत्पुरुष: प्राग्वत्। क्षत्रसेनम्। यवसुरम्। गोशालम्। स्त्रीसभम् स्त्रीसमूहः इत्यर्थः।

इति तत्पुरुषसमासान्तप्रकरणम्।

## बहुव्रीहिप्रकरणम्।

१· १· ७· १·
**अनेकं सुबन्तमन्यपदार्थे बहुव्रीहिः ॥ ११०३ ॥**

अनेकं सुबन्तं प्रथमान्तं क्वचित् अप्रथमान्तञ्च अन्यस्य (समस्यमानपदभिन्नस्य) पदस्य अर्थे वर्त्तमानं वा समस्यते, सः बहुव्रीहिः। इदञ्च प्रायिकं बहुव्रीहिप्रकरणे विधीयमानः बहुव्रीहिः इत्येव लक्षणम्, तेन द्वित्राः पञ्चषाः इत्यादेः वार्थे बहुव्रीहेः संग्रहः। तत्र प्रथमान्तं यथा, प्राप्तः नरः यं सः प्राप्तनरः ग्रामः। ऊढः रथः येन सः ऊढरथः वाहः। दत्तं धनं यस्मै सः दत्तधनः विप्रः। उद्धृतम् अन्नं यस्मात् तत् उद्धृतान्नं पात्रम्। पीतम् अम्बरं यस्य सः पीताम्बरः हरिः। बहवः नराः यस्मिन् सः बहुनरः ग्रामः। अप्रथमान्तं यथा-दण्डः पाणौ यस्य सः दण्डपाणिः द्वाःस्थः। पङ्कात् जन्म यस्य तत् पङ्कजन्म पद्मम्। अनेकम् इत्युक्तेः रमणीयं नीलं वपुः यस्य सः रमणीयनीलवपुः इत्यादौ त्रिपदस्य अपि बहुव्रीहित्वम्। अयम् अव्ययपूर्वपदः अपि इष्यते। उच्चैः शिरोः अस्य सः उच्चैःशिराः। एवम् अधोमुखः, उपरिदृष्टिः।

५:· १· २· ·१··१· ६·
**प्रादिभ्यः क्तान्तः सापेक्षेण—वा च तस्य**
१·
**लोपः ॥ ११०४ ॥**

प्राद्युत्तरवर्त्ती क्तान्तशब्दः सापेक्षेण सह वा समस्यते, सः बहुव्रीहिः। तत्र च तस्य क्तान्तस्य वा लोपः स्यात्। प्रकृष्टं बलं यस्य सः प्रबलः प्रकृष्टबलः वा। निर्गतं धनं यस्मात् सः निर्धनः निर्गतधनः वा। अतिक्रान्ता मर्य्यादा येन सः अतिमर्य्यादः अतिक्रान्तमर्य्यादः वा।

५· १· ·१· ·१· ६· १·

नञोऽस्त्यर्थको वा च तस्य लोपः ॥ ११०५ ॥

नञः परः अस्त्यर्थकः शब्दः सापेक्षेण सह वा समस्यते, सः बहुव्रीहिः। तत्र च अस्त्यर्थकस्य वा लोपः। नास्ति धनं यस्य सः अधनः नास्तिधनः वा। अस्ति इति अव्ययम्। अविद्यमानः पुत्रः यस्य सः अपुत्रः अविद्यमानपुत्रः वा।

१· १· ·१·

सप्तम्युपमानपूर्वक उपमाद्योतकपदलोपश्च ॥ ११०६ ॥

सप्तम्यन्तपूर्वकः उपमानपूर्वकश्च शब्दः सापेक्षेण सह वा समस्यते, सः बहुव्रीहिः। तत्र च उपमानद्योतकपदस्य लोपः स्यात्। कोषे धनं यस्य सः कोषधनः। व्याघ्रस्य मुखम् इव मुखं यस्य सः व्याघ्रमुखः।

३· १· ७· ७·

संख्यया संख्या वार्थे संख्येये ॥ ११०७ ॥

संख्येयार्थया संख्यया सह संख्यावाचके वार्थे वा समस्यते, सः बहुव्रीहिः। द्वौ वा त्रयः वा द्वित्राः। पञ्च वा षड् वा पञ्चषाः।

१:· ७·

दिङ्नामानि मध्ये ॥ ११०८ ॥

मध्यरूपे अन्यपदार्थे दिङ्नामानि समस्यन्ते, सः बहुव्रीहिः। पूर्वस्याः दक्षिणस्याश्च दिशः मध्या पूर्वदक्षिणा। अत्र।

६· १· ७· ७· ·१·

सर्वनाम्नः पुंवद्भावः समासे प्रत्यये च ॥ ११०९ ॥

समासविषये प्रत्यये च परे सर्वनामशब्दस्य पुंवद्रूपं स्यात् । इत्यनेन पूर्वाशब्दस्य पुंवद्भावे कृत्सता ।

३· ·१· ७·

### तृतीयान्तेन सहेति तुल्ययोगे ॥ १११० ॥

तुल्ययोगे वर्त्तमानं सहेति अव्ययं तृतीयान्तेन सह वा समस्यते, सः बहुव्रीहिः । सह पुत्रेण सहस्य वा सादेशे सपुत्रः सहपुत्रः वा । सह धनेन सधनः, पक्षे सहधनः ।

१ः· १ः·

### केशाकेश्यादयो निपात्याः ॥ ११११ ॥

केशेषु केशेषु गृहीत्वा युध्यते इत्यर्थे केशाकेशि इत्यादयः । एवं दण्डैश्च दण्डैश्च प्रहृत्य युध्यते इत्यर्थे दण्डादण्डि इत्यादयश्च निपात्यन्ते । ते च अव्ययानि ।

इति बहुव्रीहिप्रकरणम् ।

---

## अथ बहुव्रीहिसमासान्तप्रकरणम् ।

७· ७· ५· ५·

### बहुव्रीहौ—संख्येयेऽबहोः संख्याया अव्ययात् तु तत्पुरुषेऽपि डः ॥ १११२ ॥

५· ·१· ७· ·१· १·

बहुवर्जात् संख्येये वर्त्तमानात् संख्यावाचकात् डः स्यात् बहुव्रीहौ, अव्ययात् परस्मात् तु तत्पुरुषे अपि । डः इत् । उपदशाः आसन्नदशाः । अतिदशः ।

७· ६· ६· १·

### डिति विंशतेस्तेर्लोपः ॥ १११३ ॥

डिति परे विंशतेः तेः लोपः स्यात्। इति तिलोपे निर्गः विंशतः निर्विंशः।

५: ५: १·

**अक्षिसक्थिभ्यां स्वाङ्गाभ्यां षः— ॥१११४॥**

आभ्यां स्वाङ्गपराभ्यां षः स्यात् बहुव्रीहौ। षः इत्। दीर्घे अक्षिणी यस्य दीर्घाक्षः। दीर्घसक्थः। स्त्रियान्तु षित्त्वात् ईपि पद्माक्षी। अस्वाङ्गात् तु, दीर्घसक्थि शकटम्। दीर्घाक्षा वेणुयष्टिः, वक्ष्यमाणेन अः।

५: ५·

**द्वित्रिभ्यां मूर्द्ध्नः ॥ १११५ ॥**

आभ्यां परस्मात् मूर्द्धशब्दात् षः स्यात् बहुव्रीहौ। द्विमूर्द्धः, त्रिमूर्द्धः। स्त्रियान्तु द्विमूर्द्धी, त्रिमूर्द्धी।

१: १:

**ऊर्द्ध्वज्ञुप्रभृतयो निपात्याः * ॥ १११६ ॥**

ऊर्द्ध्वज्ञुः ( ऊर्द्ध्वजानुः ) इत्यादयः निपात्याः।

५: ५· ·१· १·

**नञ्दुःसुभ्यः सक्थ्नो वा अः ॥ १११७ ॥**

नञादिपूर्वकात् सक्थिशब्दात् अः स्यात् वा। अस्वाङ्गार्थम् इदम्। असक्थं असक्थि वा शकटम्। एवं दुःसक्थम् दुःसक्थि वा।

५· ·१· २· ५: ·१· ५·

**प्रजाया अस् नित्यं मन्दाल्पाभ्याञ्च मेधायाः ॥ १११८ ॥**

नञादिपूर्वात् प्रजाशब्दात् मन्दाल्पाभ्यां चात् नञादिभ्यः

---

* विश्रु प्रश्रु संश्रु खुरणस खुरणस् खरणस खरणस् पूर्णकाकुत् अजातकाकुत् इत्यादयः।

मेधायाः नित्यम् असः स्यात्। अप्रजाः, सुप्रजाः। अमेधाः, सुमेधाः, मन्दमेधाः, अल्पमेधाः।

५· ·१·
धर्मादन् ॥ १११९ ॥

धर्मात् अन् स्यात् बहुव्रीहौ। बहुधर्मा, प्राप्तधर्मा, अधर्मा, सुधर्मा।

५· ·१·
धनुषोऽनँङ् * ॥ ११२० ॥

धनुःशब्दात् अनँङ् स्यात् बहुव्रीहौ। अङौ इतौ। पुष्पधन्वा, शतधन्वा।

५· ·१·
जायाया निँङ्— ॥ ११२१ ॥

जायायाः अन्तस्य निङ् स्यात् बहुव्रीहौ। ङः इत्। रमा जाया यस्य इति वाक्ये निङन्तादेशे।

१· ६: ७·
लोपो व्योर्वलि ॥ ११२२ ॥

वलादौ प्रत्यये परे धातोः अधातोश्च यवयोः लोपः स्यात्। इति यलोपे रमाजानिः हरिः। एवं पार्वती जाया यस्य सः पार्वतीजानिः शिवः।

५:· ५· ·१· ५·
उत्पूतिसुसुरभिभ्यो गन्धादिदागन्तुकादेक-
५· ·१· ·१·
वचनान्तात् तु वा ॥ ११२३ ॥

---

* धन्वन्शब्देन एव समासे रूपसिद्धौ पुष्पधनुः इत्यादिप्रयोगवारणार्थं सूत्रम्।

उदादिभ्यः परस्मात् गन्धशब्दात् इत् स्यात् बहुव्रीहौ, आगन्तुकात् एकवचनान्तात् तु वा। उद्गन्धिः, पूतिगन्धिः, सुगन्धिः। सुष्ठु गन्धः यत्र सुगन्धि सुगन्धः वा आपणः। शोभनाः गन्धाः यत्र इति वाक्ये तु न, सुगन्धः।

५॰ ॰१॰

## उपमानाद् वा ॥ ११२४ ॥

उपमानवाचकात् परस्मात् गन्धशब्दात् इत् स्यात् वा। पद्मस्य गन्धः इव गन्धः यस्य पद्मगन्धिः, पद्मगन्धः।

५॰ ॰१॰ ७॰

## नाभेरः संज्ञायाम् ॥ ११२५ ॥

संज्ञायां नाभेः अः स्यात् बहुव्रीहौ। पद्मनाभः।

५ः॰ ६॰ १॰

## अहस्त्यादिभ्यः पादस्य लोपः ॥ ११२६ ॥

हस्त्यादिभिन्नात् परस्य पादस्य अन्त्याकारस्य लोपः स्यात् बहुव्रीहौ। सुपात्, द्विपात्, व्याघ्रपात्। हस्त्यादिभ्यस्तु हस्तिपादः कुम्भपादः इत्यादि। ते च (सि॰ पू॰ ४२२ पृ॰) द्रष्टव्याः। अत्र अन्त्यलोपः एव समासान्तः *।

१ः॰ १ः॰

## कुम्भपद्यादयो निपात्याः ॥ ११२७ ॥

कुम्भपदी, शतपदी, द्विपदी, त्रिपदी, चतुष्पदी इत्यादयः। ते च (सि॰ पू॰ ४२३ पृ॰) द्रष्टव्याः।

७॰ ६॰ ॰१॰

## वयसि दन्तस्य—दतृ— ॥ ११२८ ॥

---

* अन्त्यलोपः एव समासान्तः, तेन ततः शेषाद्वा इति न वा कप्।

समुदायेन वयसि गम्ये दन्तस्य दतृ स्यात् बहुव्रीहौ । ऋकारः इत् । द्विदन् वत्सः । चतुर्दन् उक्षा । सुदती युवतिः इत्यर्थः । वयसि किं, सुदन्तः करी नटः वा ।

५: ·१·

## श्यावकोरकाभ्यां वा ॥ ११२९ ॥

आभ्यां परस्य दन्तस्य दतृ स्यात् वा बहुव्रीहौ । श्यावदन् श्यावदन्तः । कोरकदन् कोरकदन्तः ।

५:· ·१·

## अग्रान्तशुद्धशुभ्रवराहश्वमूषिकादिभ्यो वा ॥ ११३० ॥

एभ्यः दन्तस्य दतृ स्यात् वा बहुव्रीहौ । शुद्धदन् ।

६· १· ७·

## काकुदस्य लोपोऽवस्थायाम् ॥ ११३१ ॥

समुदायेन अवस्थायां द्योत्यायां काकुदस्य अन्त्याकारस्य लोपः स्यात् । पूर्णकाकुत् । अजातकाकुत् । पर्वतभेदे त्रिककुत् तु निपातनात् सिद्धः ।

१: ७:

## सुहृद्दुर्हृदौ मित्रामित्रयोः ॥ ११३२ ॥

एतयोः अर्थयोः क्रमेण एतौ निपात्यौ । सुहृत् मित्रम् । दुर्हृत् अमित्रः । अन्यत्र तु, सुहृदयः, दुर्हृदयः इत्येव ।

५:· ·१·

## उरःप्रभृतिभ्यः कप् ॥ ११३३ ॥

एभ्यः कप् स्यात् बहुव्रीहौ । पः इत् । उरस् सर्पिस् उपानह् पुमान् अनड्वान् पयः नौः लक्ष्मीः दधि मधु शालि एते उरःप्रभृतयः । एषु पुमान् इत्यादयः एकवचनान्ताः

पठिताः, तेन बहुवचनान्तात् तु शेषाद्वा इति वैकल्पिकः एव कप्। व्यूढोरस्कः। पीतसर्पिष्कः। प्राप्ता लक्ष्मीः येन इति वाक्ये।

७· ६· १· ·१· ७· ६· ·१· ·१· ७·

केऽणो ह्रस्वो न कपि आपस्तु वा कपि ॥ ११३४ ॥

कप्प्रत्ययभिन्ने के परे अणः ह्रस्वः स्यात्, आबन्तस्य तु कपि वा ह्रस्वः। इति अह्रस्वे प्राप्तलक्ष्मीकः।

५· ७·

इनः स्त्रियाम् ॥ ११३५ ॥

इनन्तात् कप् स्यात् स्त्रियां बहुव्रीहौ। बहुदण्डिका पुरी।

५· ·१·

नद्यृतश्च ॥ ११३६ ॥

नदीसंज्ञकात् ऋदन्तात् च कप् स्यात् बहुव्रीहौ। मधुरवाणीकः। प्रौढ़वधूकः। पूजितमातृकः।

५· ·१·

शेषाद्वा ॥ ११३७ ॥

अनुक्तसमासान्तात् शब्दमात्रात् कप् वा स्यात् बहुव्रीहौ। महायशस्कः महायशाः। प्राप्ततेजस्कः प्राप्ततेजाः। त्यक्तमायाकः वा ह्रस्वे त्यक्तमायकः, पक्षे त्यक्तमायः। अनुक्तेत्यादि किं, सुपात् पूर्णकाकुत् इत्यादौ उक्तसमासान्तात् न स्यात्।

·१· ५·

नेयसः ॥ ११३८ ॥

ईयसन्तात् प्रातिपदिकात् न कप् स्यात् बहुव्रीहौ। बहवः श्रेयांसः यस्य सः बहुश्रेयान्। प्रातिपदिकग्रहणे लिङ्गविधि-

इस्य अपि ग्रहणम् इति बह्व्यः प्रेयस्यः यस्य सः बहुप्रेयसी पुरुषः। इह ईवन्तत्वात् सुलोपः।

५· ७·

**भ्रातुः पूजायाम् ॥ ११३९ ॥**

भ्रातृशब्दात् कप् न स्यात् पूजायाम्। सुष्ठु भ्राता यस्य सुष्ठुभ्राता। अन्यत्र मूर्खभ्रातृकः।

१: १: ५:·

**सप्तमीविशेषणे पूर्वे इन्द्वादिभ्यः प्रहरणार्थे-**

५:· ·१· ·१· ·१·

**भ्यश्च सप्तमी परा ॥ ११४० ॥**

सप्तम्यन्तं विशेषणपदञ्च पूर्वं प्रयोज्यं बहुव्रीहौ। कण्ठे कालः अस्य कण्ठेकालः। अतएव ज्ञापकात् व्यधिकरण-बहुव्रीहिः। चित्रवस्त्रः नीलाम्बरः। इन्दुप्रभृतिभ्यः सप्तम्यन्तं तु परं प्रयोज्यम्। इन्दुः मौलौ यस्य सः इन्दुमौलिः चन्द्र-शेखरः शिवः। पद्मनाभः इत्यादि। प्रहरणार्थेभ्यश्च सप्तम्यन्तं परं प्रयोज्यम्। दण्डपाणिः, चक्रपाणिः।

·१· ·७·

**निष्ठा प्राक्— ॥ ११४१ ॥**

निष्ठान्तं प्राक् प्रयोज्यं बहुव्रीहौ। कृतकृत्यः, धृतखड्गः इत्यादि।

·१· ७:·

**वाहिताग्न्यादिषु ॥ ११४२ ॥**

आहिताग्न्यादिषु वा पूर्वनिपातः। अग्न्याहितः। आहिताग्निः। पुत्रजातः जातपुत्रः इत्यादि।

१: ७ १ १ १ १ ७
सर्वनामसंख्ये प्राक् मिथस्तु संख्यैव तत्रा-
१ १
प्यल्पीयसी ॥ ११४३ ॥

सर्वनामशब्दः संख्यावाचकश्च बहुव्रीहौ प्राक् प्रयोज्यः, तयोश्च मिथः समासे संख्या एव पूर्वा तत्रापि अल्पीयसी एव प्रथमा। सर्वश्वेतः, विश्वशुक्लः। द्विशुक्लः, द्विरक्तः। मिथस्तु द्वयन्यः, पञ्चेतरः। द्वित्राः, पञ्चषाः।

इति बहुव्रीहिसमासान्तप्रकरणम्।

---

## द्वन्द्वसमासप्रकरणम्।

७ ७ १ १ ३
इतरेतरयोगे समाहारे चानेकं सापेक्षं
८ १ १
समस्यते स द्वन्द्वः ॥ ११४४ ॥

परस्परापेक्षया एकक्रियासम्बन्धः इतरेतरयोगः। संहतिः समाहारः। तयोः अर्थयोः अनेकं सुबन्तं सापेक्षेण सह वा समस्यते, सः द्वन्द्वः। तत्र इतरेतरयोगे गुरुविप्रौ नमति। ब्राह्मणक्षत्रवैश्यशूद्राः वर्णाः भवन्ति। अत्र प्रत्येकस्य प्राधान्यात् बहुवचनम्। समाहारे तु समाहारस्य एकतया (१०८० सू०) एकवद्भावे क्लीवत्वात् धवखदिरपलाशं छिनत्ति इत्यादौ एकत्वम्। तयोस्तु सर्वत्र अविशेषेण प्राप्तौ नियम्यते।

६: ६: १
प्राणिवाद्यसेनाङ्गानां बहूनां समाहारः—
॥ ११४५ ॥

प्राण्यङ्गानां वाद्याङ्गानां सेनाङ्गानाञ्च बहुवचनान्तानां समाहार: एव, न इतरेतरयोगः। हस्तौ च पादौ च हस्तपादम्। श्रुती च नेत्रे च श्रुतिनेत्रम्। पणवाश्च गोमुखाश्च पणवगोमुखम्। हस्तिनश्च अश्वाश्च रथाश्च पादाताश्च हस्त्यश्वरथपादातम् *।

६·

## अप्राणिद्रव्यजातेः॥ ११४६॥

अप्राणिद्रव्यजातीनां समाहार: स्यात्। धानापायसम्। अप्राणीति किं, वैश्यशूद्रौ। द्रव्येति किम्, रूपरसौ, गन्धस्पर्शौ।

६:

## भिन्नलिङ्गनदीदेशयोः॥ ११४७॥

अनयो: समाहार: स्यात्। गङ्गाशोणम्। कुरुक्षेत्रम्। भिन्नेति किं, गङ्गायमुने, मद्रकेकयौ इत्यादौ एकलिङ्गे न।

१· ६·

## आनकुलं क्षुद्रजन्तुवाचिनः॥ ११४८॥

नकुलपर्य्यन्तक्षुद्रजन्तुवाचिनाम् उक्त: स्यात्। दंशमशकम्। यूकालिक्षम्।

६· ६· ·१· ७·

## नित्यविरोधिजातेर्गुणवचनस्य चाद्रव्ये॥११४९॥

परस्परं नित्यविरोधिजातिवाचिन: गुणवाचिनश्च अद्रव्ये प्रागुक्त: स्यात्। अहिनकुलम्। काकोलूकम्। शीतोष्णम्। द्रव्ये तु, शीतोष्णा:।

* हस्तिनः अभ्यर्हितत्वात् अजाद्यदन्तात् अपि अश्वशब्दात् प्राङ्निपातः।

१:· २·
गवाश्वादीनि यथाप्रयोगम् ॥ ११५० ॥

गवाश्वादीनि शिष्टप्रयोगानुसारेण निपात्यानि। गवाश्वम्। दासीदासम्। अजाविकम्। तानि च (सि० पू० ४३७ पृ०) द्रष्टव्यानि।

६:· ·१·
वृक्षमृगतृणधान्यव्यञ्जनपशुशकुनीनां वा ॥ ११५१ ॥

एषां समाहारः वा स्यात्। तत्र वृक्षादिषु विशेषाणाम् एव ग्रहणम्। तत्र अपि वृक्षविशेषैः एव वृक्षविशेषाणां मृगविशेषाणां मृगविशेषैः एव समाहारः। नित्यप्राप्तौ विकल्पार्थं वचनम्, अन्यथा समाहारः एव स्यात्, सः नियमः मा भूत्। चूताशोकम् चूताशोकाः। रुरुपृषतम् रुरुपृषताः। व्रीहियवम् व्रीहियवाः। घृतपायसम् घृतपायसाः। गोमहिषम् गोमहिषाः। हंसकाकम् हंसकाकाः।

फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्य-
६:· ७· ·१·
तृणानां बहुत्वे एव ॥ ११५२ ॥

एषां बहुप्रकृतिकानाम् एव समाहारः स्यात्, न अन्यप्रकृतिकानाम्। बहुत्वे बदरामलकम्, अन्यत्र बदरामलकौ। हस्त्यश्वारोहम्, अन्यत्र हस्त्यश्वारोहौ।

७· १· ·१·
द्वन्द्वे घिः प्राक्— ॥ ११५३ ॥

द्वन्द्वे घिसंज्ञकः प्राक् प्रयोज्यः। हरिहरौ। अनेकेष

तु पूर्वस्य नियमः शेषेषु अनियमः। हरिगुरुहराः। हरिहरगुरवः।

१·

अजाद्यदन्तम् ॥ ११५४ ॥

अजादि यत् अदन्तं तत् पूर्वं स्यात्। ईशकृष्णौ। बहुषु अनियमः। अश्वरथेभाः, अश्वेभरथाः। घ्यन्ताजाद्यदन्तयोस्तु मिथःसमासे विप्रतिषेधे परं कार्य्यम् इत्युक्त्या घ्यन्तम् एव परम्। इन्द्राग्नी, इन्द्रवायू।

१·

अल्पाच्तरम् ॥ ११५५ ॥

अल्पाच्तरं पूर्वं स्यात्। हरकेशवौ। बहुषु अनियमः। शङ्खदुन्दुभिवीणाः। वीणाशङ्खदुन्दुभयः।

६:· ६:· ३·

ऋतुनक्षत्राणां समाक्षराणामानुपूर्व्येण ॥ ११५६ ॥

तुल्यस्वरवर्णानाम् एषाम् आनुपूर्व्येण प्राक् निपातः। शिशिरवसन्तौ। भरणीरोहिण्यौ। समाक्षराणां किं, ग्रीष्मवसन्तौ।

१·

लघ्वक्षरम् ॥ ११५७ ॥

लघ्वक्षरयुक्तं प्राक् प्रयोज्यम्। कुशकाशम्।

१ ·१

अभ्यर्हितञ्च ॥ ११५८ ॥

पूजितञ्च प्राक् प्रयोज्यम्। तुल्याक्षराणाम् एव अयं नियमः। मातापितरौ।

६:· ३·

वर्णानामानुपूर्व्येण ॥ ११५९ ॥

सर्वापवादः। ब्राह्मणक्षत्रवैश्यशूद्राः।

·१·  ·१·

संख्या अल्पीयसी ॥ ११६० ॥

संख्यावाचकद्वन्द्वे अल्पीयस्याः संख्यायाः प्राक् निपातः। द्वौ च दश च द्वादश। एवं त्रयोदश।

इति द्वन्द्वसमासप्रकरणम्।

---

अथ द्वन्द्वसमासान्तप्रकरणम्।

५·  ५·१·  ७·

द्वन्द्वाच्चुदषहान्तादः समाहारे ॥ ११६१ ॥

समाहारार्थकद्वन्द्वात् चवर्गाद्यन्तात् अः स्यात्। वाक्त्वचम्। त्वक्स्रजम्। शमीदृशदम्। वाक्त्विषम्। छत्रोपानहम्। समाहारे किं, वाक्त्वचौ *।

६ः· ६ः· ·१· ७· ७·

विद्याजन्मसम्बन्धिनामृतामाङ् ऋति पुत्त्रे च द्वन्द्वे ॥ ११६२ ॥

·१· ७·

एकविद्यासम्बन्धे एकजन्मसम्बन्धे च ऋदन्तानाम् आङ् स्यात् ऋदन्तशब्दे पुत्त्रे च परे द्वन्द्वे। होताध्येतारौ। यातानन्दारौ। पितापुत्त्रौ। पुत्त्रशब्दे तु जन्मसम्बन्धानाम् एव आङ्, तेन होतृपुत्त्रौ इत्यादौ न।

६· १· ·१· ७·

मातुर्मातरो वा पितरि ॥ ११६३ ॥

---

* परिगणितव्यतिरिक्तविषयत्वात् तत्र उभयविधद्वन्द्वः इति सूचयितुं वाक्त्वचौ इत्युक्तम्।

पितरि शब्दे परे मातुः मातरः आदेशः स्यात् वा द्वन्द्वे। पक्षे आङ्। मातरपितरौ मातापितरौ।

७· ७· ७·

## देवताद्वन्द्वे उत्तरपदे वायुशब्दाप्रयोगे ॥११६४॥

उत्तरपदे परे देवताद्वन्द्वे पूर्वस्य आङ् स्यात्, न तु पूर्वोत्तरयोः वायुशब्दप्रयोगे। सूर्य्याचन्द्रमसौ। मित्रावरुणौ। वायुशब्दप्रयोगे तु, वाय्वग्नी, अग्निवायू।

·१· ६· ७ः

## ईदग्नेः सोमवरुणयोः ॥ ११६५ ॥

सोमशब्दे वरुणशब्दे च परे अग्निशब्दस्य ईदन्तादेशः स्यात्। आङः अपवादः। अग्नीवरुणौ। अग्नीषोमौ, वक्ष्यमाणेन षत्वम्।

६· १ः ·१· ७·

## जायाया दम्जमौ वा पत्यौ ॥ ११६६ ॥

पतिशब्दे परे जायाशब्दस्य स्थाने दम्जमौ आदेशौ वा स्तः। दम्पती, जम्पती, जायापती।

१ः

## स्त्रीपुंसादीनि ॥ ११६७ ॥

एतानि निपात्यानि। स्त्रीपुंसौ। धेन्वनुडुहौ। ऋक्सामे। वाङ्मनसे। अक्षिभ्रुवौ। दारगवम्। नक्तन्दिवम्। अहर्दिवम्। अहोरात्रम्।

इति द्वन्द्वसमासान्तप्रकरणम्।

## सर्वसमासविषयसमासान्तप्रकरणम् ।

पुः १

### ऋक्पूरप्पथिभ्योऽः ॥ ११६८ ॥

एभ्यः समासान्तः अः स्यात् । अर्द्धम् ऋचः अर्द्धर्चम् । समाहृताः पञ्च ऋचः पञ्चर्चम् । पञ्च ऋचः यत्र सूक्ते तत् पञ्चर्चम् । विष्णोः पूः विष्णुपुरम् । रम्या पूः रम्यपुरम् । उभयत्र अभिधानात् क्लीवत्वम् । रम्यपुरः देशः । उपपुरम् । विमलापं सरः ।

पुः ६ १

### द्व्यन्तःप्रादिभ्योऽपस्येत् ॥ ११६९ ॥

एभ्यः परस्य कृतसमासान्तस्य अपशब्दस्य आदेः आतः ईत् स्यात् । द्वीपम् । अन्तरीपम् । समीपम् ।

पुः पुः

### प्रत्यन्ववेभ्यः सामलोमभ्याम् ॥ ११७० ॥

एभ्यः पराभ्याम् आभ्याम् अः स्यात् । प्रतिसामम् । प्रतिलोमम् । अनुलोमम् ।

पु ७

### अक्ष्णोऽदर्शने ॥ ११७१ ॥

अदर्शनार्थकाक्षिशब्दार्थात् अः स्यात् । गवाम् अक्षि इव गवाक्षम् । स्थूलाक्षा वेणुयष्टिः ।

पुः पु

### ब्रह्महस्तिभ्यां वर्चसः ॥ ११७२ ॥

आभ्यां वर्चसः अः स्यात् । ब्रह्मवर्चसम् । हस्तिवर्चसम् ।

५ः ५·

अवसमन्धेभ्यस्तमसः ॥ ११७३ ॥

एभ्यः तमसः अः स्यात्। अवतमसम्। सन्तमसम्। अन्धतमसम्।

५ः ५·

अन्ववतप्तेभ्यो रहसः ॥ ११७४ ॥

एभ्यः रहसः अः स्यात्। अनुरहसम्। अवरहसम्।

५ः ५·

प्रादिभ्योऽध्वनः ॥ ११७५ ॥

एभ्यः अध्वनः अः स्यात्। प्रगतः अध्वानं प्राध्वः।

·१· ७· ५ः

न—पूजने स्वतिभ्याम् ॥ ११७६ ॥

पूजने अर्थे गम्ये स्वतिभ्यां यथायथं प्राप्तः समासान्तः न स्यात्। सुसखा, अतिसखा। सुराजा, अतिराजा। पूजने किम्, अतिक्रान्तः राजानम् अतिराजः, अतिसखः इत्यादौ स्यात् एव।

५· ७·

किमः क्षेपे ॥ ११७७ ॥

निन्दायां किमः परस्मात् राजादेः समासान्तः न। किंराजा। किंसखा। प्रश्नार्थे तु, किंराजः इत्यादि।

५·

नञ्तत्पुरुषात्— ॥ ११७८ ॥

नञ्तत्पुरुषात् समासान्तः न स्यात्। न राजा अराजा। तत्पुरुषात् किम्, अधुरं शकटम्, अनपं सरः इत्यादौ स्यात् एव।

५· ·१·

पथो वा ॥ ११७९ ॥

पथ्यन्तात् नञ्तत्पुरुषात् समासान्तः वा स्यात्। अपन्थाः अपथः। बहुव्रीहौ तु अपथः इत्येव।

इति सर्वसमासविषयसमासान्तप्रकरणम्।

---

## अलुक्समासप्रकरणम्।

५· ६· ·१· ·१·

ओजःसहस्तमोऽम्भसस्तृतीयाया—न लुक्— ॥ ११८० ॥

समासे एभ्यः परस्याः तृतीयायाः लुक् न स्यात्। ओजसाकृतः। सहसाकृतः। तमसावृतः। अम्भसाकृतः आर्जवेन कृतः इत्यर्थः।

६· ·१· ७·

आत्मनश्च पूरणे ॥ ११८१ ॥

पूरणार्थे शब्दे परे आत्मशब्दात् तृतीयायाः न लुक्। आत्मनातृतीयः। जनार्दनस्तु आत्मचतुर्थः एव इत्यादौ तु बहुव्रीहिः।

७· ५· ·१· ६·

वैयाकरणाख्यायां परस्माच्च चतुर्थ्याः ॥११८२॥

परशब्दात् चात् आत्मशब्दात् परस्याः चतुर्थ्याः न लुक् स्यात्, वैयाकरणसमाख्यायाम्। परस्मैपदम् आत्मनेपदम् उभयत्र तादर्थ्ये चतुर्थी, अनेन एव ज्ञापकेन समासः।

५ः· ६·

स्तोकादिभ्यः पञ्चम्याः ॥ ११८३ ॥

भ्यः पञ्चम्याः न लुक् स्यात्। स्तोकान्मुक्तः। दूरादागतः। कृच्छ्रात्पतितः।

५ः ७ः ६

## वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु षष्ठ्याः ॥११८४॥

वागादिभ्यः परस्याः षष्ठ्याः क्रमेण युक्त्यादिषु परेषु लुक् न स्यात्। वाचोयुक्तिः। दिशोदण्डः। पश्यतोहरः।

१ ७

## देवानांप्रियो मूर्खे ॥ ११८५ ॥

मूर्खे अर्थे अलुक् छीकम् एतत् निपात्यते।

७ १ ७ ५ १ ७ ७ ७

## क्षेपे वा पुत्रे वाचस्तु पत्यौ जीवेऽर्थे ॥ ११८६ ॥

निन्दायां गम्यायां पुत्रशब्दे परे, जीवे अर्थे तु वाक्शब्दात् परस्याः, पत्यौ शब्दे परे षष्ठ्याः न लुक् वा स्यात्। दास्याः पुत्रः दासीपुत्रः। वाचस्पतिः वाक्पतिः जीवः। अन्यत्र वाक्पतिः एव, व्यस्ते तु वाचःपतिः।

५ ७

## ऋतो विद्याजन्मसम्बन्धे ॥ ११८७ ॥

विद्यासम्बन्धवाचिनः जन्मसम्बन्धवाचिनश्च ऋदन्तात् परस्याः षष्ठ्याः न लुक् स्यात्। होतुरन्तेवासी। होतुःपुत्रः। भ्रातुष्पुत्रः। पितुरन्तेवासी।

७ः

## स्वसृपत्योः ॥ ११८८ ॥

ऋदन्तात् परस्याः षष्ठ्याः न लुक् स्यात् स्वसृपतिशब्दयोः परयोः। मातुःपतिः। पितुःष्वसा पितुःस्वसा, वक्ष्यमाणेन वा षत्वम्।

५॰ ६॰ ७॰
## हलदन्तात् सप्तम्याः संज्ञायाम् ॥ ११८९ ॥

संज्ञायाम् हलन्तात् अदन्ताच्च परस्याः सप्तम्याः लुक् न स्यात्। कण्ठेकालः। त्वचिसारः।

५ः ७॰ १॰॰१॰
## गोयुङ्भ्यां स्थिरे षत्वञ्च ॥ ११९० ॥

स्थिरशब्दे परे आभ्यां परस्याः सप्तम्याः न लुक्, स्थिरस्य आदेः सस्य षत्वञ्च। गविष्ठिरः। युधिष्ठिरः।

७॰ ७॰ १॰
## तत्पुरुषे कृति बहुलम् ॥ ११९१ ॥

कृति (कृदन्ते) शब्दे परे तत्पुरुषसमासे सप्तम्याः बहुलं न लुक् स्यात्। सरसिजः मनसिजः। पक्षे लुकि सरोजम् मनोजम्। बहुलग्रहणात् कुरुचरः इत्यादौ नित्यं लुक्।

इति अलुक्समासप्रकरणम्।

---

## अथ समासाश्रयकार्य्यप्रकरणम्।

७ः ६॰ ६॰
## अप्रियादिषु स्त्रिया उक्तपुंस्कायाः पुंवत्—

७॰ ७॰ ७॰ ७ः॰१॰
## समानाधिकरणे स्त्रीलिङ्गे शब्दे तसादिषु च ॥ ११९२ ॥

प्रियादिवर्ज्जे समानाधिकरणे स्त्रीलिङ्गे शब्दे तसादिषु च परतः उक्तपुंस्कायाः स्त्रियाः पुंवद्रूपं स्यात्। शुभ्रा तनुः यस्य शुभ्रतनुः। सुन्दरी भार्य्या यस्य सुन्दरभार्य्यः। स्त्रीलिङ्गे किं, कल्याणी प्रधानं यस्य इति वाक्ये कल्याणीप्रधानः इत्यादौ

न। समानाधिकरणे किम्, शुभ्रायाः माता इत्यादिवाक्ये शुभ्रामाता इत्यादौ न। उक्तपुंस्कायाः इत्युक्तेः गङ्गा जाया यस्य इति वाक्ये गङ्गाजायः इत्यादौ न। प्रियादिषु तु, रम्या प्रिया यस्य सः रम्याप्रियः इत्येव। प्रिया मनोज्ञा कल्याणी सुभगा दुर्भगा सचिवा स्वसा कान्ता क्षान्ता समा चपला दुहिता वामा अबला तनया प्रियादयः। भक्तिशब्दः अपि अत्र पठ्यते, दृढभक्तिरिति ज्येष्ठे इति, भवति विरलभक्तिः इत्यादि-भूरिप्रयोगात् व्यभिचारात् अस्माभिः न पठितः। तथा तस्, त्र, तर, तम, चरट्, जातीय, कल्प, देशीय, रूप, पाश, त, त्व, था इत्येते तसादयः। तत्वयोस्तु जात्याख्याभिन्नयोः एव इष्यते इति सिद्धान्तः।

६:· ७:·

## कुक्कुट्यादीनामण्डादिषु ॥ ११९३ ॥

एषु परेषु कुक्कुट्यादीनां पुंवत् रूपं स्यात्। कुक्कुट्याः अण्डः कुक्कुटाण्डः। छाग्याः दुग्धम् छागदुग्धम्। महिष्याः क्षीरं महिषक्षीरम्।

७: ·१·

## क्यङ्मानिनोश्च ॥ ११९४ ॥

एतयोः परयोः प्रागुक्तं स्यात्। श्येनी इव आचरति श्येतायते। लोहिनी इव आचरति लोहितायते। दर्शनीयां मन्यते दर्शनीयमानी पुमान्। दर्शनीयमानिनी स्त्री।

६· ·१·

## ऊङो न— ॥ ११९५ ॥

ऊङ्प्रत्ययान्तस्य प्रागुक्तं न स्यात्। वामोरूभार्य्यः। एवं वामोरूयते, वामोरूमानिनी इत्यादि।

३· ३· ·१· ६·

**तद्धितेन वृणा च कोपधायाः ॥ ११९६ ॥**

तद्धितप्रत्ययेन वृणा च ककारोपधायाः स्त्रियाः प्रागुक्तं न स्यात्। रसिकाभार्य्यः। पाचिकाभार्य्यः। एवं रसिकात्वं पाचिकात्वम्। रसिकामानिनी इत्यादि। आभ्यां किं, पाकी (अर्भकौ) भार्य्या यस्य इत्यादौ धातुजककारोपधायाः न निषेधः, तेन तत्र पाकभार्य्यः इत्येव।

६· ७·

**वृद्धिसम्पादकतद्धितस्यारक्तविकारे ॥ ११९७ ॥**

रक्तविकारार्थकभिन्नवृद्धिसम्पादकतद्धितान्तायाः स्त्रियाः प्रागुक्तं न स्यात्। मथुरायां भवा माथुरी सा भार्य्या यस्य माथुरीभार्य्यः माथुरीत्वम् माथुरीयते माथुरीमानिनी इत्यादि। वृद्धीत्यादि किम्, मध्यमा भार्य्या यस्य सः मध्यमभार्य्यः इत्यादौ अवृद्धौ स्यात् एव। सम्पादकेत्युक्तेः व्याकरणम् अधीते या सा वैयाकरणी सा भार्य्या यस्य इति वाक्ये स्यात् एव, तत्र वृद्धेः अभावात् किन्तु वक्ष्यमाणेन औदागममात्रम्। अरक्तेत्याद्युक्तेः मञ्जिष्ठया रक्ता माञ्जिष्ठी सा शाटी यस्य सः माञ्जिष्ठशाटीकः, हेम्नः विकारः हैमी सा मुद्रा यस्य सः हैममुद्रः इत्यादौ स्यात् एव।

६· ६· ·१· ७·

**जातेः स्वाङ्गतश्चामानिनि— ॥ ११९८ ॥**

मानिन्शब्दवर्जे परे जातिवाचकस्त्रीप्रत्ययमात्रान्तायाः स्वाङ्गवाचकात् विहितेवन्तायाश्च प्रागुक्तं न स्यात्। शूद्रा भार्य्या यस्य शूद्राभार्य्यः। ब्राह्मणी भार्य्या यस्य सः ब्राह्मणीभार्य्यः। सुकेशी भार्य्या यस्य सः सुकेशीभार्य्यः। ईतः इत्युक्तेः, अकेशा सहकेशा वा भार्य्या यस्य इत्यादौ स्यात् इव। मानिनि

परे तु तयोः प्रागुक्तं स्यात्। शूद्रमानिनी, सुकेशमानिनी इत्यादि।

७॰ ७: ॰१॰ ६॰ ॰१॰

## कर्मधारये जातीयदेशीययोश्चानूङः पुंवत् ॥ ११९९ ॥

कर्मधारये समासे जातीयदेशीयप्रत्यययोः परतश्च सर्वेषाम् ऊङन्तभिन्नानां प्रियादिषु अपि परेषु पुंवत् स्यात। शुभ्रा प्रिया शुभ्रप्रिया, रम्या वामा रम्यवामा। रसिकभार्य्या, पाचकदुहिता, माथुरजाया, शूद्रजाया, सुकेशजाया। एवं जातीयदेशीययोः। ऊङस्तु, वामोरूभार्य्या।

६॰ ६॰ ६॰ १॰

## उक्तपुंस्कस्येवन्तस्यानेकाचो ह्रस्वस्तरतमकल्पेषु ब्रुवगोत्रमतहतेषु च उगितस्तु वा ॥१२००॥

७:॰ ७:॰ ॰१॰ ५॰ ॰१॰ ॰१॰

तरादिप्रत्ययेषु परेषु ब्रुवादिषु च उत्तरपदेषु उक्तपुंस्कस्य अनेकाचः ईवन्तस्य ह्रस्वः स्यात्, उगित्प्रत्ययोत्तरेवन्तस्य तु वा। ब्राह्मणितरा, ब्राह्मणिब्रुवा, ब्राह्मणिगोत्रा, ब्राह्मणिमता। उगितस्तु, विदुषितरा, पक्षे पुंवद्भावे विद्वत्तरा। विदुषीतरेति भाष्यविरुद्धम् इति कौमुदीकारः।

६॰ ६॰ ॰१॰

## अन्यस्या नद्या वा ॥ १२०१ ॥

अनेकाचः ईवन्तात् उक्तपुंस्कात् च भिन्नस्य नदीसंज्ञकशब्दस्य ह्रस्वः वा स्यात्। स्त्रीतरा स्त्रितरा। तनूतरा तनुतरा। वामोरूतरा वामोरुतरा। नद्याः इत्युक्तेः अनद्या न, तत्र सुभ्रूवरा इत्यादि एव।

६· ७·
मालाया भारिणि ॥ १२०२ ॥

भारिन्शब्दे परे मालान्तस्य ह्रस्वः स्यात्। मालभारी। बकुलमालभारी।

६· १· ७·
आवीपोर्ह्रस्वः संज्ञायाम् ॥ १२०३ ॥

आवन्तस्य ईबन्तस्य च ह्रस्वः स्यात् संज्ञायाम्। अजक्षीरम्। वैदेहिबन्धुः। कालिदासः।

६· ·१· ७:·
हृदयस्य हृल्लेखयदण्लासेषु ॥ १२०४ ॥

एषु परेषु हृदयस्य हृत् स्यात्। हृल्लेखः हृद्यम् हार्दम्। हृल्लासः। हृच्छब्देन एव सिद्धे हृदयलेखा इत्यादिप्रयोगनिवारणार्थं सूत्रम्।

६· ·१· ७:·
पादस्य—पद आजिगात्युपहतेषु ॥ १२०५ ॥

एषु पादस्य पदः स्यात्। पदाजिः। पदगः। पदातिः।

·१· ७:·
पद् हिमकाषिहतिषु ॥ १२०६ ॥

एषु पादस्य पद् स्यात्। पद्धिमम्। पत्काषी। पद्धतिः।

६· १· ७· ६·
उदकस्य—उद—उत्तरपदे उत्तरपदस्यस्य
·१· ७·
च संज्ञायाम् ॥ १२०७ ॥

उत्तरपदे परे उत्तरपदस्थस्य च उदकस्य उदः स्यात् संज्ञायाम्। उदमेघः। क्षीरोदः।

७ः

पेषंवासवाहनधिषु ॥ १२०८ ॥

एषु परेषु उदकस्य उदः स्यात् असंज्ञायाम् अपि। उद-पेषं पिनष्टि। उदवासः। उदधिः घटः। समुद्रे तु संज्ञाशब्द-तया पूर्वेण सिद्धः।

७॰ ६ः ॰१॰

कारे सत्यागदयोर्मुम्— ॥ १२०९ ॥

कारशब्दे परे अनयोः मुँम् स्यात्। उभौ इतौ। सत्य-ङ्कारः। अगदङ्कारः।

६ः ७॰

उष्णभद्रयोः करणे ॥ १२१० ॥

अनयोः मुँम् स्यात् करणे। उष्णङ्करणम्। भद्रङ्करणम्।

६॰ ७॰ ॰१॰

रात्रेः कृति वा ॥ १२११ ॥

कृदन्ते परे रात्रेः मुँम् स्यात् वा। अखिदर्थं सूत्रम्। रात्रिञ्चरः रात्रिचरः।

६॰ १॰ ७ः

समानस्य—सो—ज्योतिरादिषु ॥ १२१२ ॥

एषु परेषु समानस्य सः स्यात्। ज्योतिस्, जनपद, रात्रि, नाभि, रूप, नाम, गोत्र, स्थान, वर्ण, वयस्, वचन, जातीय, इति ज्योतिरादयः। तत्र रूपादिषु परेषु वा इति प्रक्रिया-कौमुदीकारः। तेन समानरूपः सरूपः वा।

७॰ ७॰ ७॰ ॰१॰ ॰१॰

तीर्थे ये उदरे तु वा ॥ १२१३ ॥

यविषये तीर्थशब्दे परे समानस्य सः स्यात्, यविषये उदर-

शब्दे परे तु वा स्यात्। सतीर्थ्यः (एकगुरुकः)। सोदर्य्यः समानोदर्य्यः। सोदरशब्दस्तु सहशब्देन समासात् सिद्धः इति मनोरमा।

१ः २·
पारस्करादीनि यथाप्रयोगम् ॥ १२१४ ॥

एतानि ससुट्कानि शिष्टप्रयोगानुसारेण निपात्यानि। पारस्करः। प्रस्कण्वः। हरिश्चन्द्रः। एते च आर्षौ। अन्यत्र न सुट्। किष्किन्ध्या गुहा। बृहस्पतिः जीवे, अन्यत्र बृहत्पतिः। प्रायश्चित्तं तपसि, अन्यत्र प्रायचित्तम्। आश्चर्य्यम् अद्भुते, अन्यत्र आचर्य्यम्। आस्पदम् आस्थाने, अन्यत्र आपदम्। गोष्पदम् परिमाणे, अन्यत्र गोपदम्। विष्किरः पक्षिणि। अवस्करः अन्नमले, अन्यत्र अवकरः इत्यादि।

६· ६· ·१· ७ः· ७·
अषष्ठीतृतीयान्तस्यान्यस्य दुँगाशीरादिष्वर्थे
·१· ·१
तु वा ॥ १२१५ ॥

आशीरादिषु परेषु अन्यशब्दस्य दुँक् स्यात्, न तु षष्ठीतृतीयान्तस्य, अर्थशब्दे परे तु वा। उकौ इतौ। आशिस्, आशा, आस्थित, आस्था, उत्सुक, कारक, राग, छप्रत्यय, इत्येते आशीरादयः। तत्र कारकेति शब्दे छे च परे षष्ठ्यन्तस्य अपि दृश्यते इति सिद्धान्तः। अन्यदाशीः। अन्यदाशा। अन्यदास्था। अन्यदास्थितः। अन्यद्रागः। अन्यदुत्सुकः। अन्यत्कारकः। अन्यदीयः। अषष्ठीत्यादि किम्, अन्यस्य अन्येन वा आशीः अन्याशीः इत्यादौ न। अन्यदर्थम् अन्यार्थम्।

७· ७· ७ः

**कोः—कत् तत्पुरुषे—ऽचि त्रिरथवदतृणेषु**

·१·

**च ॥ १२१६ ॥**

तत्पुरुषे कुशब्दस्य कत् स्यात् अजादौ त्र्यादिषु च परेषु । कुत्सितम् अन्नं कदन्नम् । कत्त्रयः । कद्रथः । कद्वदः । कत्तृणम् । तत्पुरुषे किम्, कुत्सितम् अन्नं यत्र इति बहुव्रीहौ न, तत्र क्वन्नम् इत्येव ।

·१· ७ः

**का—पथ्यक्षयोः ॥ १२१७ ॥**

एतयोः परतः कोः का स्यात् तत्पुरुषे । कापथः । काक्षम् ।

७·

**वा पुरुषे ॥ १२१८ ॥**

पुरुषशब्दे परे कोः का स्यात् वा । कापुरुषः कुपुरुषः ।

६· ७· ·१· ·१·

**ईषदर्थस्याच्यपि का ॥ १२१९ ॥**

ईषदर्थस्य कोः स्थाने अजादौ अपि का स्यात् । काम्लम् । काशीतम् ।

१· ·१· ७ः ·१·

**कवञ्चोष्णाग्न्योर्वा ॥ १२२० ॥**

अनयोः परतः ईषदर्थस्य कोः स्थाने कवं, चात् का स्यात् वा पक्षे कद् । कवोष्णम्, कोष्णम्, कदुष्णम् । एवं कवाग्निः, काग्निः, कदग्निः ।

१ः· २·

**पृषोदरादीनि यथोपदिष्टम् ॥ १२२१ ॥**

एतानि यथाशिष्टप्रयोगं निपात्यानि ।
भवेद्वर्णागमाद्धंसः सिंहो वर्णविपर्य्ययात् ।
गूढ़ोत्मा वर्णविकृतेर्वर्णलोपात् पृषोदरम् ॥

हन्तेः पदाद्यचि समागमे हंसः। हिनस्तेः पचाद्यचि हकारसकारयोः वैपरीत्ये सिंहः। आकारस्य उकारताप्राप्तेः गूढ़ोत्मा। पृषतः तकारलोपे पृषोदरम्। आकृतिगणः। अत्रैव गणे पाठात्।

लुम्पेदवश्यमः कृत्ये तुमः कामे मनस्यपि ।
मांसस्य पाके पचने समोऽन्तो वा हिते तते ॥

-इत्युक्तरीत्या अवश्यमादेः अन्तलोपः। अवश्यकार्य्यः। गन्तुकामः। गन्तुमनाः। मांसपाकः मांस्पाकः, सहितः संहितः इत्यादि ।

इति सर्वसमासाश्रयकार्य्यप्रकरणम् ।

---

## अथ षत्वप्रकरणम् ।

५· ६· ६· १·
### अङ्गुलेः सङ्गस्य सः—षः— ॥ १२२२ ॥

अङ्गुलिशब्दात् परस्य सङ्गशब्दस्य षत्वं स्यात्। अङ्गुलिषङ्गः।

५· ६·
### भीरोः स्थानस्य ॥ १२२३ ॥

भीरुशब्दात् परस्य स्थानशब्दस्य षत्वं स्यात्। भीरुष्ठानम्।

५· ६·
### ज्योतिरायुर्भ्यां स्तोमस्य— ॥ १२२४ ॥

आभ्यां स्तोमस्थसस्य षत्वं स्यात् । ज्योतिष्टोमः । आयुष्टोमः ।

५· ६·:

## अग्नेः स्तुत्स्तोमसोमानाम्— ॥ १२२५ ॥

अग्नेः परेषाम् एषां सस्य षत्वं स्यात् । अग्निष्टुत् । अग्निष्टोमः । अग्नीषोमौ ।

५: ६·

## मातापितृभ्यां स्वसुः ॥ १२२६ ॥

आभ्यां परस्य स्वसृशब्दादेः सस्य षत्वं स्यात् । मातृष्वसा । पितृष्वसा ।

५: ५: ७· ·१·

## षष्ठ्यन्ताभ्यां ताभ्यामलुक्समासे वा— ॥१२२७॥

षष्ठ्यन्ताभ्यां मातृपितृशब्दाभ्यां परस्य स्वसुः सस्य षत्वं वा स्यात् अलुक्समासे । मातुःष्वसा मातुःस्वसा । पितुःष्वसा पितुःस्वसा ।

५: ६· ७· ७· ·१·

## उपसर्गकप्रादुर्भ्यामस्तेर्यऽचि च ॥ १२२८ ॥

आभ्यां परस्य अस्तेः सस्य षत्वं स्यात् यादौ अजादौ च परे । निष्यात् निषन्ति प्रादुःष्यात् प्रादुःषन्ति । अन्यत्र, निस्तः प्रादुःस्तः ॥

५:· ६:·

## सुविनिर्दुर्भ्यः सुपिसूतिसमानाम् ॥१२२९॥

एभ्यः परेषाम् एषां सस्य षत्वं स्यात् । सुषुप्तिः । सुषूतिः । सुषमः । विषमः ।

५: ६· ७·

## निनदीभ्यां स्नातेः कौशले— ॥ १२३० ॥

कौशले गम्ये आभ्यां स्नातेः सस्य षत्वं स्यात्। निष्णातः नदीष्णातः कुशलः इत्यर्थः।

१· ७·

प्रष्ठोऽग्रगामिनि ॥ १२३१ ॥

प्रशस्ते अर्थे एषः निपात्यते। अन्यत्र, प्रस्थः परिमाणं गिरिसानु वा।

७· १·

आसने विष्टरः ॥ १२३२ ॥

अन्यत्र, विस्तरः।

अम्बगोभूमिसव्यद्वित्रिकुशङ्कुमञ्जिपुञ्जिपरमे-

५ः· ६·

बर्हिर्दिव्यग्निभ्यः स्थः ॥ १२३३ ॥

एभ्यः स्थाधातुजशब्दादेः सस्य षत्वं स्यात्। स्थः इति यथाप्रयोगं स्थ-स्थिन्-स्थानां ग्रहणम्। अम्बष्ठः। गोष्ठम्। भूमिष्ठः। सव्यष्ठः, सव्येष्ठी, सव्येष्ठा। द्विष्ठः। त्रिष्ठः। कुष्ठः। अङ्गुष्ठः। मञ्जिष्ठः। पुञ्जिष्ठः। परमेष्ठी। बर्हिष्ठः। दिविष्ठः। अग्निष्ठः।

१ः·

सुषेधादयः ॥ १२३४ ॥

एते कृतषत्वाः निपात्याः। सुषेधः, दुःषेधः, निषेधः, प्रतिषेधः, सुषेणः, हरिषेणः इत्यादयः। आकृतिगणः।

५· ७· ७·

ऋस्वात्तादौ तद्धिते ॥ १२३५ ॥

कृत्संज्ञकात् इण्वर्णात् परस्य सस्य षत्वं स्यात् तादौ अविते परे। सर्पिष्टमम्। हविष्टमम्। कृत्सात् किम्, गौस्वम् इत्यादौ न।

इति षत्वप्रकरणम्।

---

## अथ णत्वप्रकरणम्।

५· ७· ६· १·

### पूर्वपदात् संज्ञायां नस्य णत्वम्— ॥१२३६॥

पूर्वपदस्थात् णत्वनिमित्तात् ऋरषवर्णात् नस्य णत्वं स्यात् संज्ञायाम्। सूर्पणखा। द्रुणसः। द्रुणाः। खरणसः। खरणाः। संज्ञायां किं, धर्मनेता। त्रिनयनत्रिनेत्रादेस्तु क्षुभ्नादिषु पाठात् न णत्वम्।

५ः ·१· ६·

### पुरगादिभ्य एव वनस्य ॥ १२३७ ॥

एभ्यः एव परस्य वनस्य नस्य णत्वं स्यात् न अन्येभ्यः संज्ञायाम्। पुरगा, सिध्रका, मिश्रका, सारिका, कोटर, अग्रे, इति पुरगादयः। तत्र अग्रेशब्दस्य असंज्ञाशब्दतया अप्राप्तौ वचनम्। पुरगावणम्। सारिकावणम्। अग्रेवणम्। एभ्यः किम्, कुवेरवनम्। इन्द्रवनम्।

५ः ६· ७·

### प्रादिभ्यो वनस्यासंज्ञायाम् ॥ १२३८ ॥

एभ्यः परस्य वनस्य नस्य णत्वं स्यात् असंज्ञायाम् एव। प्र, परा, परि, निर्, अन्तर्, शर, प्लक्ष, आम्र, खदिर, पीयूक्ष, प्रादयः। प्रवणम्। निर्वणम्। अन्तर्वणम्। शरवणम्। इक्षुवणम्।

५: ५: ·१·

## ह्रस्वौषधिभ्यां द्विस्वराभ्यां वा ॥ १२३९ ॥

द्विस्वरवर्णयुक्ताभ्यां वृक्षौषधिवाचकाभ्यां परस्य वनस्य णत्वं वा स्यात्। शिरीषवणम् शिरीषवनम्। दूर्वावणम् दूर्वावनम्। वदरीवणम् वदरीवनम्। द्विस्वेति किम्, देवदारुवनम्।

५· ६·

## अदन्तादह्नस्य ॥ १२४० ॥

अदन्तात् पूर्वपदात् परस्य अह्नस्य णत्वं स्यात्। पूर्वाह्णः सर्वाह्णः। अदन्तात् किं, परागतम् अह्नः पराह्नः इत्यादौ आतः परस्य न।

५· ६·

## आहिताद्वाहनस्य ॥ १२४१ ॥

आरोप्य यत् उह्यते तत् आहितम्। तस्मात् पूर्वपदात् परस्य वाहनस्य णत्वं स्यात्। शरवाहणम्। इक्षुवाहणम्। आहितात् किम्, इन्द्रवाहनम् इत्यादौ न।

६· ७·

## पानस्य—देशे ॥ १२४२ ॥

देशे अर्थे पूर्वपदनिमित्तात् परस्य पानस्य नस्य णत्वं स्यात्। क्षीरपाणाः प्रतीच्याः सुरापाणाः प्राच्याः।

·१· · ७:

## वा भावकरणयोः ॥ १२४३ ॥

भावे करणे च वाच्ये निष्पन्नस्य पानशब्दस्य पूर्वपदस्थात् निमित्तात् परस्य नस्य णत्वं वा स्यात्। क्षीरपाणम् क्षीरपानम्। सुरापाणं सुरापानं चषकम्। (२१८ सू०) नामा-

न्तस्य णत्वे माषवापिणी। तुमि माषवापाणि। विभक्तिस्थस्य माषवापेण। अत्र सर्वत्र पक्षे अणत्वम्। एकाचस्तु रम्यषिना रम्यवीणि। सकवर्गस्य तु, हरिकामिणी हरिकामाणि हरिकामेण इत्यादौ नित्यम्। तत्र अयं विशेषः।

·१· ६··१· ८· ·१·

न—युवादेर्न पदव्यवधाने च ॥ १२४४ ॥

पूर्वोक्तविधिना प्राप्तस्य युवादेः पदान्तरव्यवधाने च णत्वं न स्यात्। युवन् अहन् पक्व अग्रगामिन् इत्यादि युवादि। रम्ययूना। रम्याह्ना, दीर्घाह्ना। रम्यपक्वेन। अग्रगामिना। पदव्यवधाने, माषकुम्भवापेन, क्षीरकुम्भपायिना।

५· ५: ६·

पदान्तात् षात् क्नतः ॥ १२४५ ॥

पदान्तस्थषकारात् परस्य क्नत्प्रत्ययस्य नस्य णत्वं न स्यात्। निष्पानम्। सर्पिष्पानम्। यजुष्पानम्। षात् किं, निरयणम्।

७:·

क्षुभ्नादिषु— ॥ १२४६ ॥

एषु नस्य णत्वं न स्यात्। क्षुभ्नाति। तृप्नोति। ते च (सि० पू० ३८३ पृ०) द्रष्टव्याः।

इति णत्वप्रकरणम्।

## अथ एकशेषप्रकरणम्।

६:· १· ७·

सरूपाणामेकशेषः समानविभक्तौ ॥ १२४७ ॥

समानविभक्तौ परतः समानरूपाणां मध्ये एकः एव शिष्यते, अपरः लुप्यते। घटौ। घटाः।

३· ·१· १· ८· १· ·१·

स्त्रिया सह पुमान् शिष्यते तत्कृतश्चेद्वि-

१·

शेषः— ॥ १२४८ ॥

स्त्रिया सह उक्तौ पुमान् एव शिष्यते, स्त्रीशब्दस्तु लुप्यते, यदि स्त्रीशब्दः तत्कृतविशेषः ( तस्मात् पुंवाचकात् एव कृतः विशेषः स्त्रीप्रत्ययादिः यस्य सः ) स्यात्। हंसः हंसी इति स्थिते हंसौ, हंसीशब्दस्य हंसशब्दात् एव विशेषः कृतः। तत्-कृतः किम्, हंसः मयूरी इत्यत्र न।

३· १· ·१· ·१· ·१·

अनपुंसकेन नपुंसकमेकवच्च वा ॥ १२४९ ॥

अनपुंसकेन सह उक्तौ नपुंसकम् एव अवशिष्यते, तत्कृतः चेत् विशेषः, तच्च एकवचनं वा स्यात्। कृतः कृता कृतं कृतानि कृतं वा।

३: १:

स्वसृदुहितृभ्यां भ्रातृपुत्रौ ॥ १२५० ॥

आभ्यां सह उक्तौ क्रमेण एतौ एव शिष्येते। भ्राता स्वसा भ्रातरौ। पुत्रः दुहिता पुत्रौ।

३· १· ·१·

मात्रा पिता वा— ॥ १२५१ ॥

मात्रा सह उक्तौ पिता एव अवशिष्यते। माता पिता पितरौ। पक्षे मातरपितरौ मातापितरौ।

३· १·
श्वश्रूा श्वशुरः ॥ १२५२ ॥

एतया सह उक्तौ श्वशुरः वा शिष्यते। श्वशुरौ श्वश्रूश्वशुरौ वा।

३ः· १ः· ·१· ·१· २·
नामादिभिस्त्यदादीनि मिथस्तु यथोत्तरम् ॥ १२५३ ॥

प्रातिपदिकमात्रैः सह उक्तौ त्यदादीनि, मिथश्च तेषां सह उक्तौ यथोत्तरम् अवशिष्यन्ते। घटः सः तौ। सः यः यौ। सः त्वं युवाम्। स त्वं अहम् वयम्। अयञ्च न समासः, तेन पन्थानौ इत्यत्र न समासान्तः इति सिद्धान्तः। कृत्तद्धितसमासैकशेषसनाद्यन्तावृत्तयस्तेषु कृत्तद्धितसमासैकशेषाणां विशिष्टैकार्थबोधकतया प्रातिपदिकसंज्ञा, ततश्च तदवयवस्य ( ५७२ सू० ) सुपः लुक्।

इति एकशेषप्रकरणम्।

---

## तद्धितसंज्ञाप्रकरणम्।

१ः· १ः·
मतुबादयस्तद्धिताः ॥ १२५४ ॥

वक्ष्यमाणाः मतुबादयः तद्धितसंज्ञाः स्युः। ते च प्रथमान्तादिभ्यः, तिङः, अव्ययात्, प्रातिपदिकमात्राच्च अर्थविशेषे स्युः।

१· १· १·
विभक्त्यादेशस्तद्धितोऽसर्वविभक्तिः ॥१२५५॥

विभक्तेः स्थाने आदिश्यमानाः तसिलादयः असर्वविभक्ति-

संज्ञाः स्युः। असर्वविभक्तित्वात् अव्ययत्वं विभक्त्यादेशे अपि लुग्गुणदीर्घत्वैत्वौत्वत्वाद्यादेशाः न इति सिद्धान्तः।

१: १·

तरतमौ घः ॥ १२५६ ॥

एतौ घसंज्ञौ स्तः।

१· ६· ६:· ६· १· ·१· ·१·

वृद्धं यस्याचामादेर्वृद्धिस्त्यदादि च ॥१५२७॥

यस्य अचाम् आदेः वृद्धिः तत्, त्यदादि च वृद्धसंज्ञं स्यात्।

·१· १· १·

पौत्रप्रभृति अपत्यं गोत्रम् ॥ १२५८ ॥

पौत्रप्रभृति अपत्यं गोत्रसंज्ञं स्यात्।

७· ७· १·

जीवति वंश्ये युवा ॥ १२५९ ॥

वंशप्रवर्त्तके जीवति सति पौत्रादि अपत्यं युवसंज्ञं स्यात्। गोत्रसंज्ञापवादः।

इति तद्धितसंज्ञाप्रकरणम्।

---

## अथ तद्धितकार्य्यप्रकरणम्।

७·

एको गोत्रे प्रत्ययः ॥ १२६० ॥

गोत्रे एकः एव प्रत्ययः स्यात्, न प्रत्ययपरम्परा।

६:· ६:· १:·

प्रत्ययादीनां फढखछघानामायन्नेयीनीयियः ॥ १२६१ ॥

प्रत्ययादिस्थानां फादीनां स्थाने क्रमेण एते स्युः। यथा— फस्य आयन्, ढस्य एय्, खस्य ईन्, छस्य ईय्, घस्य इय्। फादिषु अकारः उच्चारणार्थः।

६· १·

ठस्येकः ॥ १२६२ ॥

प्रत्ययादिस्थस्य ठकारस्य स्थाने इकः स्यात्।

५· १·

इसुसुक्तान्तात् कः ॥ १२६३ ॥

इसः, उसः, उक्प्रत्याहारात्, तान्ताच्च ठस्य कः एव स्यात्। इकापवादः। इसः, सर्पिष्कः। उसः, धनुष्कः। उकः, धैनुकम्, मातृकं, पैतृकम्। तान्तात्, द्विहतकः।

६ः· ६· १· ७· ७· ७· ·१·

अचामादेर्वृद्धिर्ञिति—णिति—किति—च तद्धिते— ॥ १२६४ ॥

ञिति णिति किति च तद्धिते परे अचां मध्ये आद्यचः वृद्धिः स्यात्।

६ः· ६· ·१·

केकयमित्रयुप्रलयानां यादेरित् ॥ १२६५ ॥

तेषु परेषु एषां यादेः इत् स्यात्। कैकेयः, मैत्रेयः, निपातनात् उलोपः। प्रालेयः।

६ः १ः

देविकासरय्वोर्दारवसारवौ ॥ १२६६ ॥

तेषु परेषु एतयोः एतौ निपात्यौ।

·१· पू: पू: १: ·१· पू: ·१·

न यवाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् ॥ १२६७ ॥

पदान्तस्थाभ्यां यवाभ्यां परस्य अचाम् आदेः वृद्धिः न स्यात्, ताभ्यां पूर्वौ तु ऐच्। तत्र सौसादृश्यात् यात् पूर्वः ऐः, वात् पूर्वः औः। व्याकरण-वैयाकरणम्। स्वश्व-सौवश्वम्। पदान्तात् किं, याष्टिकम्, वासिष्ठम्।

६: ·१·

द्वारादीनाञ्च ॥ १२६८ ॥

एषाम् अपि वृद्धिः न ऐजागमश्च। अपदान्ततया अप्राप्तौ पृथग्ग्रहणम्। द्वार स्वर स्वाध्याय स्वस्ति स्वर् स्वादु मृदु श्वन् श्वन् स्व द्वारादि। द्वार-दौवारिकम्। स्वर-सौवरम्।

·१· ६: ६: ·१·

न स्वागतादीनां श्वापदन्यङ्क्वोर्वा ॥१२६९॥

स्वागतादीनां वृद्धिनिषेधः, ऐजागमश्च न स्यात्। श्वापदन्यङ्क्वोस्तु वा स्यात्। स्वागत स्वध्वर स्वङ्ग व्यङ्ग व्यड् व्यवहार स्वागतादि। व्यवहार-व्यवहारिकम्। शौवापदं श्वापदम्।

पू· ६· ६· १·

अवयवादृतोरुत्तरपदस्य—वृद्धिः ॥ १२७० ॥

तेषु परेषु अवयववाचिनः परस्य ऋतुवाचकस्य अचाम् आदेः वृद्धिः न स्यात्, किन्तु उत्तरपदस्य एव अचाम् आदेः वृद्धिः स्यात्। पूर्ववार्षिकम्। चरमशारदम्।

पू:· ६·

सुसर्वार्द्धेभ्यो जनपदस्य— ॥ १२७१ ॥

एभ्यः परस्य उत्तरपदस्य जनवाचिनः अचाम् आदेः वृद्धिः स्यात् तेषु परेषु, न तु पूर्वपदस्य। सुपाञ्चालकः। सर्वमागधः। अर्द्धसौराष्ट्रः।

५॰ ६॰

## दिशोऽमद्रस्य ॥ १२७२ ॥

दिक्शब्दात् परस्य मद्रभिन्नजनपदवाचिनः उत्तरपदस्य एव अचाम् आदेः वृद्धिः, न इतरस्य। पूर्वपाञ्चालः। उत्तरवाङ्गः।

५॰ ६ः॰

## संख्यायाः संख्यसंवत्सरपरिमाणानाम् ॥१२७३॥

संख्यावाचकात् परेषाम् उत्तरपदस्थानाम् एषाम् अचाम् आदेः वृद्धिः स्यात् तेषु न अन्यस्य। द्विषाष्टिकम्। चतुःसाप्ततिकम्। द्विसांवत्सरिकम्। द्विप्रास्थिकम्। त्रिद्रौणिकम्।

७॰ ६॰ ॰१॰

## हृद्भगसिन्ध्वन्ते पूर्वपदस्य च ॥ १२७४ ॥

तेषु परेषु हृदाद्यन्ते पदे परे पूर्वपदस्य, चात् उत्तरपदस्य च अचाम् आदेः वृद्धिः स्यात्। सौहार्दम्। सौभाग्यम्। दौर्भागिनेयः। सौसैन्धवम्।

६ः॰ ॰१॰

## अनुशतिकादीनाञ्च ॥ १२७५ ॥

एषाम् उभयपदवृद्धिः स्यात् तेषु। अनुशतिक, इहलोक, परलोक, सर्वलोक, सर्वपुरुष, सर्वभूमि, परस्त्री, अधिभूत, अधिदेव, चतुर्विद्या, अनुशतिकादि। आनुशातिकम्। ऐहलौकिकम्। सार्वभौमः।

७॰

## देवताद्वन्द्वे ॥ १२७६ ॥

देवताद्वन्द्वसाध्यानाम् उभयपदवृद्धिः स्यात्। आग्नीषौमीयम्। मैत्रावारुणम्।

५· ६· ६· ·१· ·१·

## अर्द्धात् परिमाणस्य पूर्वस्य तु वा ॥१२७७॥

अर्द्धात् परस्य परिमाणवाचिनः अचाम् आदेः वृद्धिः स्यात्, पूर्वपदस्य तु वा तेषु परेषु। अर्द्धद्रौणिकम् आर्द्धद्रौणिकम्।

५· ६:·

## नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम् ॥१२७८॥

नञः परेषाम् एषाम् अचाम् आदेः वृद्धिः स्यात्, पूर्वपदस्य तु वा। आशौचम् अशौचम्।

६· ६· १· ७· ·१· १· ६:

## ओर्भस्य गुणो ढे तु लोपोऽकद्रुपाण्ड्वोः ॥१२७९॥

भसंज्ञस्य उवर्णस्य गुणः स्यात्, ढे परे तु तस्य लोपः, न तु कद्रुशब्दपाण्डुशब्दयोः। वाहविः पाण्डवः। ढे कमण्डलु-कामण्डलेयः। काद्रवेयः। पाण्डवेयः।

६· ६· १· ७·

## भस्य—नान्तस्य नलोपस्तद्धिते ॥ १२८० ॥

भसंज्ञस्य नान्तस्य नलोपः स्यात् तद्धिते परे। अनः अल्लोपापवादः। राजकम्।

·१· ६· ७·

## नाम्नोऽणि ॥ १२८१ ॥

अणि परे अनन्तस्य भसंज्ञकस्य नलोपः न स्यात्। यौवनम्। माघवनम्।

७· ·१·　　७:

**ये चाभावकर्मणोः ॥ १२८२ ॥**

यादौ प्रत्यये परे अनः नलोपः न स्यात्, न तु भावकर्मणोः । राजन्यः । भावकर्मणोस्तु, राज्यम् ।

·१·　६·　७· ७·

**नावर्ममनोऽपत्येऽणि ॥ १२८३ ॥**

अपत्यार्थे अणि परे वर्मभिन्नमनन्तस्य न नलोपनिषेधः । भाद्रमासः । मनः किं, सौत्वनः । अपत्ये किम्, चर्मणा परिवृतः चार्मणः । कर्मणि साधुः कार्मणः ।

६: ७·

**अध्वात्मनोः खे ॥ १२८४ ॥**

खे परे अनयोः नलोपः न स्यात् । अध्वनीनः । आत्मनीनः ।

५· ६· १·

**संयोगादेरिनश्च ॥ १२८५ ॥**

संयोगादेः इनश्च नलोपः न स्यात् । चाक्रिणम् ।

१·　७·

**ब्राह्मोऽजातौ ॥ १२८६ ॥**

अजातौ ब्राह्मः इति निपात्यते । जातौ तु, ब्राह्मणः ।

६:·　७·　१·

**षण्हन्धृतराज्ञामणि—टिलोपः ॥ १२८७ ॥**

अणि परे एषां टिलोपः स्यात् । औक्ष्णः । ताक्ष्णः । पौष्णः । वार्त्तघ्नम् । धार्त्तराज्ञम् ।

१·　७·

**औक्षमपत्ये ॥ १२८८ ॥**

अपत्ये अपि परे औचं निपात्यते। अन्यत्र, औच्चम्।

६· ६· १· ६:

अव्ययस्य टेर्लोपोऽनाराच्छाश्वतोः ॥ १२८९ ॥

आराच्छश्वद्भिन्नस्य भसंज्ञस्य अव्ययस्य टिलोपः स्यात्। वहिस्-वाह्यः। आरातीयः। शाश्वतिकः।

५· ·१· ६·

ज्यादादीयसोः ॥ १२९० ॥

ज्यात् परस्य ईयसोः आत् स्यात्। ज्यायान्।

७· ७· ६· १·

संज्ञायां मत्वर्थेऽचो दीर्घः ॥ १२९१ ॥

संज्ञायां मत्वर्थे परे अचः दीर्घः स्यात्। कृषीवलः।

इति तद्धितोपयोगिकार्य्यप्रकरणम्।

---

## प्रथमान्ताधिकारे मत्वर्थतद्धितप्रकरणम्।

५·

प्रथमायाः ॥ १२९२ ॥

प्रथमान्तात् वक्ष्यमाणाः प्रत्ययाः स्युः। अधिकारः अयम्।

·१· ८· ६· ७· ·१· ·१·

तदस्यास्मिन् वा मतुप् ॥ १२९३ ॥

प्रथमान्तात् अस्त्यर्थोपाधिकात् षष्ठ्यर्थे सप्तम्यर्थे च मतुँप् स्यात्। उपौ इतौ। गौः अस्ति अस्य अस्मिन् वा गोमान्। वह्निः अस्ति अस्य अस्मिन् वा वह्निमान्।

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने।
संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः॥

५· ५· ५··१· ६·१·
**अमान्तात् तदुपधात् भयश्च मतोर्वोऽयवा-**
५ः·
**दिभ्यः ॥ १२९४ ॥**

अवर्णान्तात्, मान्तात्, तदुभयोपधात्, भयन्ताच्च मतोः मस्य वः स्यात्, न तु यवादिभ्य। अवर्णान्तात्, धनवान् वृक्षवान् ज्ञानवान् विद्यावान्। मान्तात्, किंवान्। अवर्णोपधात्, यशस्वान् भास्वान्। मकारोपधात्, लक्ष्मीवान्। भयन्तात्, विद्युत्वान् ( १०१६ सू० ) पदत्वाभावेन न जश्। यवादेस्तु न, यवमान् भूमिमान्। यव, ऊर्मि, भूमि, कृमि, वशा, द्राक्षा, ध्वजित्, ककुद्, मरुत्, गरुत्, यवादि।

इटा सह वसोर्वस्य मतावुत्त्वं मतं ततः।
विदुष्मानेवमादि स्यात् विद्वच्छब्दात् कृते मतौ ॥

७·
**संज्ञायाम् ॥ १२९५ ॥**

संज्ञायां मतोः मस्य वः स्यात्। इति मस्य वत्वे ( १२८१ सू० ) दीर्घे अमरावती, शरावती।

उदन्वानुदधौ ज्ञेयो राजन्वान् स्यात् सुराजके।

५· ६· ·१·
**गुणवचनेभ्यो मतुपो लुक् ॥ १२९६ ॥**

गुणवाचिभ्यः मतुपः लुक् स्यात्। शुक्लः शुक्ला।

५ः· ५· १· ·१· ७·
**प्राण्यङ्गादातो लो—वा—मत्वर्थे— ॥१२९७॥**

मत्वर्थे प्राण्यङ्गात् आकारान्तात् लः वा स्यात्। चूडालः। शिखालः। पक्षे मतुप्। प्राण्यङ्गात् किम्, चिकीर्षावान्।

पुः०१०

सिध्मादिभ्यश्च ॥ १२९८ ॥

एभ्यः लः वा स्यात् मत्वर्थे। सिध्मलः। पित्तलः। ( सि० पू० ६८० पृ० ) सिध्मादिः द्रष्टव्यः।

पुः ७:

वत्सांसाभ्यां स्नेहवद्बलवतोः ॥ १२९९ ॥

आभ्यां क्रमेण अनयोः अर्थयोः वा लः स्यात् मत्वर्थे। वत्सलः स्नेहवान्। अंसलः बलवान्।

पु० १०

फेनादिलः ॥ १३०० ॥

फेनात् इलः वा स्यात् मत्वर्थे। फेनिलः फेनवान्।

पुः १० पुः० १०

लोमादिभ्यः शः, पामादिभ्यो नः, पिच्छादिभ्य इलः ॥ १३०१ ॥

पुः० १०

क्रमेण एभ्यः एते स्युः वा मत्वर्थे। लोमशः लोमवान्। पामनः पामवान्। पिच्छिलः पिच्छवान्। ते च गणाः (सि० पू० ६८१ पृ० ) द्रष्टव्याः।

पुः० १०

प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः ॥ १३०२ ॥

एभ्यः णः स्यात् वा मत्वर्थे। णः इत्। प्राज्ञः प्रज्ञावान्। श्राद्धः श्रद्धावान्।

पुः १:

तपःसहस्राभ्यां विनीनी ॥ १३०३ ॥

आभ्यां क्रमेण विनीनी स्यातां मत्वर्थे। अन्यबाधनार्थं सूत्रम्। इकारः इत्। तपस्वी। सहस्री।

५: ०१० ०१०

## ताभ्यामण् च ॥ १३०४ ॥

ताभ्याम् अण् च स्यात् मत्वर्थे। तापसः। साहस्रः।

५: ०१० ०१०

## सिकताशर्कराभ्यामण् वा ॥ १३०५ ॥

आभ्याम् अण् स्यात् वा मत्वर्थे। सैकतः। शार्करः।

७० १: ०१०

## देशे लुबिलौ च ॥ १३०६ ॥

देशे वाच्ये आभ्याम् अणः लुप् इलः, स्यात् अण्मतुपौ। सिकताः सन्ति अस्मिन् देशे सिकताः तद्धितलुपि प्रकृतिलिङ्ग-वचनतेति सिद्धान्तः। सिकतिलः सैकतः सिकतावान्। एवं शर्करा इत्यादि।

७० ५० १०

## औन्नत्ये दन्तादुरः ॥ १३०७ ॥

उन्नताः दन्ताः सन्ति अस्य दन्तुरः।

५:० १० ०१०

## ऊषादिभ्यो रो वा ॥ १३०८ ॥

एभ्यः रः वा स्यात् मत्वर्थे। ऊषरः। शुषिरः। ऊष शुषि मुष्क मधु मख सुख कुञ्ज नग पाण्डु इति ऊषादि।

५: १० ५० १०

## द्युद्रुभ्यां मः, केशाद्वः— ॥ १३०९ ॥

द्युमः। द्रुमः। केशवः। पक्षे मतुबादि।

५: ७·

गाण्डाजगाभ्यां संज्ञायाम् ॥ १३१० ॥

गाण्डीवं गाण्डिवम् अर्जुनधनुः। अजगवं पिनाकम्।

५:· १·

रजःकृषिपरिषत्पर्षद्‌भ्यो वलः ॥ १३११ ॥

एभ्यः वलः स्यात् मत्वर्थे। (१०१६ सू०) पदत्वाभावे न विसर्गः, रजस्वला। दीर्घे कृषीवलः, परिषद्वलः।

५: ७·

दन्तशिखाभ्यां संज्ञायाम् ॥ १३१२ ॥

संज्ञायाम् आभ्यां वलः स्यात् मत्वर्थे। दन्तावलः हस्ती। शिखावलः मयूरः।

१:· १:·

ज्योत्स्नादयो निपात्याः ॥ १३१३ ॥

ज्योतिः अस्ति अस्यां ज्योत्स्ना। तमस्-तमिस्रा। शृङ्ग-शृङ्गिणः। ऊर्जस्-ऊर्जस्वी ऊर्जस्वलः। गो-गोमी। मल-मलिनः मलीमसश्च।

५· ५· १:

अनेकाजोऽत इनिठौ ॥ १३१४ ॥

अनेकाचः अवर्णान्तात् इनिठौ स्तः मत्वर्थे। इकारः इत्। दण्डी। ठस्य इके दण्डिकः।

५:· १··१·

तुन्दादिभ्य इलश्च ॥ १३१५ ॥

एभ्यः इलः स्यात्, चात् इनिठौ मतुप् च। तुन्दिलः तुन्दी तुन्दिकः तुन्दवान्। तुन्द उदर पिचण्ड (स्वाङ्गाद्वि-वृद्धा) तुन्दादि।

५: १· ·१·

**अस्मायामेधास्रजो विनिर्वा ॥ १३१६ ॥**

एभ्यः विनिः वा स्यात् मत्वर्थे। इकारः इत्। पक्षे यथा-प्राप्तम्। यशस्वी यशस्वान्। मायावी मायी मायिकः माया-वान्। दीर्घे आमयावी।

५: १·

**शृङ्गवृन्दाभ्यामारकः ॥ १३१७ ॥**

आभ्याम् आरकः स्यात् मत्वर्थे। शृङ्गारकः। वृन्दारकः।

५: १· ·१·

**फलबर्हाभ्यामिनो वा ॥ १३१८ ॥**

आभ्याम् इनः वा स्यात् मत्वर्थे। फलिनः। बर्हिणः।

५· १· ·१·

**हृदयादालुश्च ॥ १३१९ ॥**

अस्मात् आलुः, चात् इनिठादयः। हृदयालुः हृदयी हृदयिकः हृदयवान्।

५: १· ·१·

**पर्वमरुद्भ्यां तो वा ॥ १३२० ॥**

आभ्यां तः वा स्यात् मत्वर्थे। पर्वतः। मरुत्तः।

५· १· ७· ५· ७· ·१·

**बलाद्‌ऊलोऽसहने वातात्समूहे च ॥ १३२१ ॥**

बलशब्दात् असहने अर्थे, वातात् तु समूहे च अर्थे ऊलः स्यात्। बलं न सहते बलूलः। वातं न सहते वातस्य समूहः वा वातूलः।

वाग्मी प्रशस्तवचनो वाचाटः कुवक्तिमान्।
स वाचालश्च वाचः स्युर्मिन्याटालेषु ते क्रमात्।

प्रभौ स्वामी स्वान् मिनी स्यात् करी हस्ती गजे त्विनी।
ब्रह्मचारिणि वर्णी च करादस्ताच्च वर्णत: ॥

५: ·१·

अर्शआदिभ्योऽच् ॥ १३२२ ॥

एभ्य: मत्वर्थे अच् स्यात्। च: इत्। (सि० उ० ६८६ पृ०) आकृतिगण:। पदत्वाभावेन न विसर्गादि, अर्शस:।

५: १·

रोगगर्ह्यप्राण्यङ्गाभ्यामिनि: ॥ १३२३ ॥

ठादिबाधनार्थम् इदम्। रोगात्-कुष्ठी शूली। गर्ह्यप्राण्यङ्गात्, ककुदावर्त्ती काकुतालुकी।

५: ·१··१·

वातातिसाराभ्यां कुँक् च ॥ १३२४ ॥

आभ्याम् इनि: स्यात्, तयो: कुँक् च। वातकी। अतिसारकी।

५·

धर्मशीलवर्णान्तात् ॥ १३२५ ॥

धर्मान्तात्, शीलान्तात्, वर्णान्तात् च इनि: स्यात् मत्वर्थे। विप्रधर्मी। क्षत्रधर्मी। धर्मशीली। विप्रवर्णी।

५: ७·

पुष्करादिभ्यो देशे ॥ १३२६ ॥

देशे वाच्ये एभ्य: इनि: स्यात्। पुष्करिणी। पद्मिनी। अन्यत्र, पुष्करवान् हस्ती। पुष्करादि ( सि० पू० ६८८ पृ०)।

५: १·

अहंशुभंमोर्यु: ॥ १३२७ ॥

एभ्यः युः स्यात्। अहंयुः। शुभंयुः। शंयुः।

५: १० ७०

## तुन्दिवलिभ्यां भो वृद्धौ ॥ १३२८ ॥

वृद्धौ गम्यायाम् आभ्यां भः स्यात्। वृद्धा तुन्दिः अस्ति अस्य तुन्दिभः। वलिभः।

इति प्रथमान्ताधिकारे मत्वर्थीयतद्धितप्रकरणम्।

---

## अथ प्रथमान्ताधिकारे स्वार्थिकतद्धिताः।

५० १० ०१० ७० १० ७०

## देवात् तो वा स्वार्थे—तदन्तः स्त्रियाम् ॥१३२९॥

स्वार्थे देवशब्दात् तः स्यात् वा, तदन्तश्च स्त्रियाम्। देवता।

५० ०१०

## तीयादीकक् ॥ १३३० ॥

स्वार्थे तीयान्तात् ईकक् स्यात् वा। कः इत्। किस्वात् वृद्धिः। द्वितीयः द्वैतीयीकः। तृतीयः तार्त्तीयीकः।

५:० ०१०

## असुरादिभ्योऽण् ॥ १३३१ ॥

स्वार्थे एभ्यः अण् स्यात्। आसुरः। राक्षसः। वायसः। मारुतः। दाशार्हः। सात्वतः। पैशाचः। वासवः। कार्षापणः। वैसारिणः मत्स्यः। औषधम्।

५:० १०

## शाखादिभ्यो यः ॥ १३३२ ॥

शाखा एव शाख्यः। मुख्यः। जघन्यः। अग्र्यः। शरण्यः।

पुः १०

## यावादिभ्यः कः ॥ १३३३ ॥

यावकः। मणिकः। ( सि० पू० ७२४ पृ० ) यावादिः।

अज्ञाने कुत्सिते नाम्नि ह्रस्वेऽल्पे नीतिशालिनि।
दयायां कः सुपः स्वार्थे शास्त्रकारैर्निदर्शितः॥

इत्युक्तेः अज्ञातः अश्वः अश्वकः। कुत्सिते कारटकः। संज्ञायां शूद्रकः आर्य्यकः दण्डकः। ह्रस्वे वृक्षकः। अल्पे तैलकं बिन्दुकं जालकम्। नीतियुक्ते धानकाः अपूपकाः। दयायां पुत्रकः बालकः। स्वार्थे चोरकः।

पुः १०

## भागरूपनामभ्यो धेयः ॥ १३३४ ॥

स्वार्थे। भागधेयः। रूपधेयम्। नामधेयम्।

पुः १०

## चतुर्वर्णादिभ्यः ष्यञ् ॥ १३३५ ॥

षञौ इतौ। चातुर्वर्ण्यम्। ( सि० पू० ६५४ पृ० ) चतुर्वर्णादि।

पुः १०

## विनयादिभ्यष्ठक् ॥ १३३६ ॥

वैनयिकः सामुदयिकः। (सि० पू० ७२५ पृ०) विनयादि।

पुः १०

## प्रज्ञादिभ्यो णः ॥ १३३७ ॥

प्राज्ञः। वाणिजः। नैगमः। (सि० पू० ७२६ पृ०) प्रज्ञादि।

पुः १०

## अनन्तादिभ्यो ञः ॥ १३३८ ॥

आनन्तम्। भैषज्यम्। आवसथ्यम्। ऐतिह्यम्।

५· १· ५· ·१· ·१· ७·

अध्युत्तरपदात् खोऽञ्चोस्तु वाऽदिशि ॥ १३३९ ॥

स्वार्थे अध्युत्तरपदात् खः स्यात्, अञ्चन्तात् तु वा, न तु दिशि। खस्य ईन्। रामाधीनः। नित्यसमासः अयम्। प्राक् प्राचीनः। सम्यक् समीचीनः। दिशि तु, प्राची दिक्।

५ः· १·

विसंप्रोद्भ्यः कटः ॥ १३४० ॥

एभ्यः स्वार्थे कटः स्यात्। विकटः। सङ्कटः। प्रकटः।

५· १ः ७·

वेः शालशङ्कटौ विस्तारे ॥ १३४१ ॥

विस्तारवति स्वार्थे वेः एतौ स्तः। विशालम्। विशङ्कटम्।

७· ५ः १ः

पृथग्भावे विनञ्भ्यां नानाञौ ॥ १३४२ ॥

पृथग्भाववति स्वार्थे आभ्याम् एतौ क्रमेण स्तः। ञः इत्। विना। नाना।

५ः १· ७ः

उपाधिभ्यां त्यक आसन्नाधिरूढयोः ॥ १३४३ ॥

क्रमेण एताभ्याम् एतयोः अर्थयोः त्यकः स्यात्। आसन्नं स्थानम् उपत्यकम्। अधिरूढा भूमिः अधित्यका।

१ः·

निविडाधिकानुकाभिकाभीकप्रतीका नि-

१ः·

पात्याः ॥ १३४४ ॥

नैविडः अध्यादिभ्यः कः, अभिप्रत्योः दीर्घश्च।

कस्ना कुटी कुटीरः स्यात् कुतुपोऽल्पकुतुस्तथा।

अल्पा वधूर्वधूटी स्यात् चिरंटी तु सुवासिनी ॥

५ः ·१·

## अल्पत्वे वत्सोक्षाश्वर्षभेभ्यस्तरट् ॥ १३४५ ॥

अल्पत्ववति स्वार्थे एभ्यः तरट् स्यात् । टः इत् । वत्सतरः वत्सतरी । उक्षतरः । अश्वतरः । ऋषभतरः ।

५ः ७· १·

## सुप्तिङ्भ्यामीषदसमाप्तौ कल्पदेश्यदेशीयाः ॥ १३४६ ॥

ईषदसमाप्तिः स्वार्थस्य किञ्चित् अपकर्षः । तद्वति स्वार्थे सुपः तिङश्च एते स्युः । ईषदसमाप्तः पटुः पटुकल्पः पटुदेश्यः पटुदेशीयः । स्त्रियास्तु पुंवत्, पटुदेशीया । एवं पचतिकल्पम् पचतिदेश्यम् पचतिदेशीयम् ।

५· १· ·७·

## सुपो बहुः प्राक् ॥ १३४७ ॥

ईषदसमाप्तौ अर्थे सुबन्तात् प्राक् बहुः स्यात् । ईषदसमाप्तः गुडः बहुगुडः द्राक्षा ।

६· १· ५··१·

## प्रशंसायां रूपस्तिङश्च ॥ १३४८ ॥

प्रशंसावति स्वार्थे सुपः तिङश्च रूपः स्यात् । पटुरूपः । पचतिरूपम् ।

५· ७· १·

## सुपः कुत्सिते पाशः ॥ १३४९ ॥

कुत्सिते स्वार्थे सुबन्तात् पाशः स्यात् । कुत्सितः वैद्यः वैद्यपाशः । गणकपाशः ।

७· ५· १:

## असहाये एकादाकिनिकौ ॥ १३५० ॥

असहाये स्वार्थे एकशब्दात् एतौ स्तः। इकारः इत्। असहायः एकः एकाकी एककः।

७· ·१· ५· ·१· ·१·

## भूतपूर्वे चरट् गोष्ठात् तु खञ् ॥ १३५१ ॥

भूतपूर्वे स्वार्थे प्रथमान्तात् चरट् स्यात्, गोष्ठात् तु खञ्। टञौ इतौ। भूतपूर्वः आढ्यः आढ्यचरः, आढ्यचरी। भूतपूर्वं गोष्ठं गौष्ठीनम्।

कुशाग्राच्छ इवार्थे स्यात् कुशाग्रीयं ततो भवेत्।
काकतालोपमेये तु काकतालीयमिष्यते।
एवं घुणाक्षरीयं स्यादनुद्देश्यफलोदये।
स्थानान्तात् स्थानसदृशे पितृस्थानीय इष्यते।
जात्यन्ताज्जातियुक्ते छे विप्रजातीयसाधनम्।
जातौ तु विप्रजातिः स्यादेवं शास्त्रार्थनिर्णयः।
प्राचुर्य्येण प्रस्तुतेऽर्थे तद्विशिष्टे मयट् भवेत्।
तेनान्नमेवान्नमयं यज्ञाद्यन्नमयं मतम्।
तदात्मके मयट् तद्वत् वाङ्मयादि ततो भवेत्।
सन्दिष्टार्थां तु या वाणी वाचिकं तदितीष्यते।
स्वार्थे मृदस्तिकः प्रोक्तो मृत्तिकेति ततो भवेत्।
प्रशंसायां तु सस्नौ च मृत्स्ना मृत्स्ना ततः स्मृता ॥

७· १·

## प्रकारवति जातीयः ॥ १३५२ ॥

सामान्यस्य भेदकः विशेषः प्रकारः। तद्वति स्वार्थे जातीयः

स्यात्। पटुप्रकारः पटुजातीयः। (११८८ सू०) पुंवद्भावे शुभ्रा प्रकारा शुभ्रजातीया, पाचकजातीया।

७· १:

अतिशायने—तमेष्ठौ ॥ १३५३ ॥

अतिशयविशिष्टे स्वार्थे प्रथमान्तात् तमेष्ठौ स्तः। अयम् एषाम् अतिशयेन आढ्यः आढ्यतमः। पाचकतमः। लघुतमः। इष्ठस्तु गुणवचनात् एव।

५· ७· ७· ·१· १:

द्विवचनात् विभज्ये उपपदे च तरेयसू * ॥१३५४॥

द्वयोः मध्ये एकस्य अतिशयेन विभक्तव्ये (निर्द्धार्य्ये) उपपदे च तरेयसू स्याताम्। पूर्वसूत्रापवादः। उकारः इत्। अयम् अनयोः अतिशयेन आढ्यः आढ्यतरः। लघुतरः। पाचकतरः। प्रतीच्याः प्राच्येभ्यः आढ्याः आढ्यतराः। पटुतराः। ईयसुस्तु गुणवचनात् एव।

५· १: ·१·

गुणवचनादिष्ठेयसू वा ॥ १३५५ ॥

गुणवाचकात् एतौ वा स्तः, पक्षे तरतमौ। तौ च प्रागुक्तार्थविशेषे एव। अयम् एषाम् अतिशयेन लघुः इति इष्ठे (१८६ पृ० २० प०) डिद्वद्भावे टिलोपे लघिष्ठः गरिष्ठः।

---

* बहूनां मध्ये एकस्यातिशायनेऽपि तरेयसू स्तः इति विधानार्थं विभज्ये उपपदे च इत्युक्तम्। तच्च उदाहरणेन ज्ञापितम्। मुग्धबोधकारेण तु तरतमादीनां सामान्यतो द्वयोरपि बहूनां मध्ये एकस्यातिशायेन विधानं कृतं। तच्च अपाणिनीयत्वात् उपेक्षणीयम्। तरतमप्रत्ययान्तवत् द्विबहूनाम् एकस्य उत्कर्षवाचकं तरतमप्रकृत्यन्तरम् अपि अस्ति, तेन तारतम्येन वर्त्तमान इत्यादिशारीरकभाष्यप्रयोगः।

अयम् अनयोः अतिशयेन पटुः पटीयान् । लघीयान् । गरीयान् । प्रतीच्याः प्राच्येभ्यः पटवः पटीयांसः । (१८६ पृ० ८५०) स्थराद्यादेशे स्थूल-स्थविष्ठः स्थवीयान् । दूर-दविष्ठः । प्रिय-प्रेष्ठः अनेकाच्त्वाभावात् न डिद्भावः, तेनैव ज्ञापकेन अवर्णस्य अपि न लोपप्रसङ्गः । वृद्धज्येष्ठः (१२८० सू० ) आत्त्वे ज्यायान् ।

५० १०

तिङो घः ॥ १३५६ ॥

तिङन्तात् अपि उक्ते अर्थे घः स्यात् ।

७० ५ः० ६०

अद्रव्यप्रकर्षे किमेत्तिङव्ययेभ्यो घस्य तरा-

१ः

न्तमामौ * ॥ १३५७ ॥

किमः, एतदन्तात्, तिङः, अव्ययाच्च परस्य घस्य स्थाने एतौ स्तः, न तु द्रव्यप्रकर्षे । किन्तराम् किन्तमाम् । प्राह्णेतराम् प्राह्णेतमाम् । अतएव सुपः अलुक् । पचतितराम् पचतितमाम् । सुतराम् । नितराम् । उच्चैस्तमाम् । उच्चैस्तराम् द्रव्ये तु, उच्चैस्तरः तरुः ।

५ः० ६ः ६० ७० १०

किमेकयत्तद्भ्यो द्वयोरेकस्य निर्द्धारणे डतरो

६ः० १०

बहूनां डतमः ॥ १३५८ ॥

जातिगुणक्रियासंज्ञाभिः समुदायात् एकदेशस्य पृथक्करणं निर्द्धारणम् । तद्वति स्वार्थे एतेभ्यः एतौ स्तः । तत्र द्वयोः

* घसंज्ञकयोः तरतमयोः एव अर्थे तरांतमामौ स्तः इत्यर्थः ।

मध्ये एकस्य निर्द्धारणे डतरः, बहूनां मध्ये एकस्य निर्द्धारणे डतमः। डः इत्, तेन टेः लोपः। जात्या, अनयोः कः विप्रः कतरः विप्रः, एषां कः विप्रः कतमः विप्रः। गुणेन, कतरः कतमः शुक्लः। क्रियया, कतरः कतमः पाचकः। संज्ञया, कतरः कतमः मैत्रः। एवम् एकतरः एकतमः। यतरः यतमः। ततरः ततमः।

इति स्वार्थिकतद्धितप्रकरणम्।

---

## अथ प्रथमान्ताधिकारे प्रमाणाद्यर्थीयाः।

·१· ६· १· १:·

### तदस्य प्रमाणं द्वयसड्दघ्नड्मात्राः ॥१३५९॥

प्रथमान्तात् प्रमाणम् अस्य इत्यर्थे एते स्युः। टः इत्, तेन स्त्रियाम् ईप्।

प्रथमश्चोर्द्ध्वमाने स्याद् द्वितीयश्च तदर्थके।
तृतीयो मानसामान्ये शास्त्रकारैरुदाहृतः।

वंशद्वयसः हस्तिदघ्नः। गजपतिद्वयसीः इति माघः। हस्तिमात्रम्। हस्तमात्रम्। प्रस्थमात्रम्। द्रोणमात्रम्।

५· ·१· ·१·

### पुरुषादण् च ॥ १३६० ॥

चात् द्वयसादयः। पुरुषः प्रमाणम् अस्य पौरुषम्, पुरुषद्वयसं, पुरुषदघ्नं, पुरुषमात्रम्।

५:· १· १·

### यत्तदेतद्भ्यः परिमाणं वतुः ॥ १३६१ ॥

संख्यापरिच्छेदः परिमाणम्। तत् अस्य इत्यर्थे प्रथमा-

भ्येभ्यः एभ्यः वतुः स्यात्। उकारः इत्। यत् परिमाणम् अस्य इति वाक्ये वतौ (७३८ सू०) आत्वे यावान् तावान्। ०

बहुत्वे कतियत्यादि डत्यन्तन्तु निपात्यते।

क्रियानियान् निपात्यश्च किमाद्येकादिसंख्ययोः॥

काः संख्याः येषां कति। का संख्या यस्य कियान्। एवम् इयान्। कियन्तस्तु कियच्छब्दैकशेषे।

६॰ ७॰ ५॰ ॰१॰

## अस्यावयवे संख्यायास्तयट्-- ॥ १३६२ ॥

अवयवे वर्त्तमानात् प्रथमान्तात् संख्यावाचकशब्दात् अस्य इति षष्ठ्यर्थे अवयविनि द्योत्ये तयट् स्यात्। टः इत्। पञ्च अवयवाः अस्य पञ्चतयः, पञ्चतयी।

५ः ॰१॰ ॰१॰

## द्वित्रिभ्यामयट् वा ॥ १३६३ ॥

आभ्याम् अयट् स्यात् वा प्रागुक्ते अर्थे। द्वयं द्वितयम्। त्रयं त्रितयम्। संख्यामात्रे अपि तयादयः, तेन घटद्वितयम्।

५॰ ॰१॰ ७॰ ॰१॰ २॰

## उभादयट् वृत्तौ च नित्यम् ॥ १३६४ ॥

उभशब्दात् उक्ते अर्थे वृत्तिमात्रे च (समासादौ) नित्यम् अयट् स्यात्। उभयम् उभयी। उभयधनम्।

॰१॰ ७॰ १॰ ५॰

## तदस्मिन्नधिकं दशान्तात् शदन्तविंशति-

५ः ॰१॰ १॰

## भ्याञ्च डः ॥ १३६५ ॥

अस्मिन् अधिकम् इत्यर्थे दशान्तात् शदन्तविंशतिभ्यां च डः स्यात्। डः इत्। एकादश अधिकाः अस्मिन् शते एका-

दशम् शतम् एकादशाधिकम् इत्यर्थः। दशान्तात् किम्, केवलदशतः मा भूत्। विंशत् अधिकाः अस्मिन् विंशं शतम् एवं चत्वारिंशम्। विंशतेस्तु डिति ( १११३ सू० ) तिलोपे विंशम्।

·१· १· ३· ५ः· १·

## तत् क्ततमनेनेष्टादिभ्य इनिँः॥ १३९६ ॥

तत् क्ततम् अनेन इत्यर्थे इष्टादिभ्यः क्तान्तेभ्यः इनिँः स्यात्। इकारः इत्। इष्टम् अनेन इष्टी। अधीतम् अनेन अधीती। इष्टादिः आकृतिगणः।

श्राद्धं भुक्तमनेनेति श्राद्धी श्राद्धिक इष्यते।
पदान्वेष्टा त्वनुपदी शास्त्रकारैर्निपात्यते *।
अन्यदेहे चिकित्स्यस्तु रोगः चेत्रिय इष्यते।
इन्द्रेण जुष्टे दत्ते वा स्यादिन्द्रियनिपातनम्॥

·१· ६· १· ५ः· १·

## तदस्य सञ्जातं तारकादिभ्य इतः॥ १३९७ ॥

तारकादिभ्यः प्रथमान्तेभ्यः सञ्जातम् अस्य इत्यर्थे इतः स्यात्। तारका सञ्जाता अस्य तारकितम्। फलितम्। तारकादि ( सि० पू० ६६६ पृ० )।

·१· ६· १· ·१·

## तदस्य पण्यं ठक्॥ १३९८ ॥

लवणं पण्यम् अस्य लावणिकः। मौक्तिकः।

·१· ६· १·

## तदस्य शिल्पम्॥ १३९९ ॥

---

* प्रथमान्ताधिकारे अपि प्रसङ्गात् पदान्वेष्टा इत्यादिद्वितीयान्तप्रकृतिकस्य उदाहरणम्, एवम् अग्रे अपि।

भृतिलाभोपयोगिद्रव्यं तदीयकौशलञ्च शिल्पम् । मृदङ्ग शिल्पम् अस्य मार्दङ्गिकः । पाणविकः । अत्र मृदङ्गादिपदं तत्तद्वादने लाक्षणिकम् ।

·१· ६· १· ·१· ५: ·१· ·१·

**तदस्य प्रहरणं ठक् शक्तियष्टिभ्यान्तु ईकक् ॥ १३७० ॥**

प्रहरणम् अस्य इत्यर्थे प्रथमान्तात् ठक्, शक्तियष्टिभ्यान्तु ईकक् । प्रासः प्रहरणम् अस्य प्रासिकः । कौन्तिकः । पारश्वधिकः । धानुष्कः । शाक्तीकः । याष्टीकः ।

·१· ·१· १· ·१· १· ६· ·१·

**अस्ति नास्ति दिष्टमिति मतिरस्य ठक् ॥ १३७१ ॥**

अस्ति इति, नास्ति इति दिष्टं ( सर्वं भाग्यकृतम् ) इति च मतिः अस्य इत्यर्थे ठक् स्यात् । अस्ति इति मतिः अस्य आस्तिकः । एवं नास्तिकः, दैष्टिकः ।

·१· ६· १· ·१· ५: ·१· १·

**तदस्य शीलं ठक् छत्रादिभ्यस्तु णः ॥ १३७२ ॥**

शीलम् अस्य इत्यर्थे प्रथमान्तात् ठक्, छत्रादिभ्यस्तु णः । उदरं ( तत्पूरणम् ) शीलम् अस्य औदरिकः । धार्मिकः । याज्ञिकः । गुरोः दोषावरणं छत्रं तत् शीलम् अस्य छात्रः । ( सि० पू० ६१६ पृ० ) छत्रादिः द्रष्टव्यः ।

·१· ७· ३· ८· ·१·

**तदस्मिन् वृद्ध्यादिना दीयते कः ॥ १३७३ ॥**

प्रथमान्तात् वृद्ध्यायलाभकरोत्कोचादिरूपेण दीयते अस्मिन् इत्यर्थे कः स्यात् । पञ्च वृद्ध्यादिना दीयन्ते अस्मिन् शते पञ्चकम् । दशकं, द्विकम् इत्यादि ।

·१· ७· ·१· ७· ७· ·१·

सास्मिन् पौर्णमासीमासि संज्ञायामण् ॥१३७४॥

सा पौर्णमासी अस्मिन् मासि इत्यर्थे संज्ञायाम् अण् स्यात् पौषी पौर्णमासी अस्मिन् मासे पौषः। एवं माघ., फाल्गुनः इत्यादि।

५· ·१·

आग्रहायण्याः ठक् फाल्गुनीचैत्रीश्रावणी-

५:· ·१·

कार्त्तिकीभ्यो वा ॥ १३७५ ॥

उक्ते अर्थे। आग्रहायणी पौर्णमासी अस्मिन् मासे आग्रहायणिकः, पक्षे अण्। फाल्गुनी पौर्णमासी अस्मिन् मासे फाल्गुनिकः फाल्गुनः। चैत्रिकः चैत्रः।

·१· ६· ·१· ·१·

साऽस्य देवताण् ॥ १३७६ ॥

प्रथमान्तात् देवता अस्य इत्यर्थे अण् स्यात्। शिवः देवता अस्य शैवः। वैष्णवः।

५· १: ५· ·१·

माहेन्द्रात् घाणौ सोमाट्‌ट्यण् ॥ १३७७ ॥

उक्ते अर्थे। टणौ इतौ। माहेन्द्रियं माहेन्द्रम्। सौम्यं हविः। टित्त्वात् स्त्रियाम् ईपि।

५· ६· ६· १· ७·

हलस्तद्धितयस्य भस्य लोपोऽनाति ॥ १३७८ ॥

आकारादिभिन्ने प्रत्यये परे भसंज्ञकस्य हलः परस्य तद्धितयस्य लोपः स्यात्। इति यलोपे सौमी। एवं सूर्यः देवता

अस्याः इति अणि स्त्रियाम् ईपि (८०७ सू०) यलोपे सौरी ऋक्।

५ः १०

**वाय्वृतुषःपितृभ्यो यः॥ १३७९॥**

अस्य देवता इत्यर्थे एभ्यः यः स्यात्। वायुः देवता अस्य वायव्यम्। ऋतव्यम्। उषस्यम्। पितुः ये।

०१०१० ७० ७०

**ऋतो ये तद्धिते॥ १३८०॥**

ऋकारस्य रः स्यात् तद्धिते ये परे। पित्र्यम्।

५० ०१०

**अग्नेर्ढक्॥ १३८१॥**

अग्निः देवता अस्य आग्नेयः चरुः। आग्नेयी ऋक्।

७० ६० १ः ०१०

**संग्रामेऽस्य प्रयोजनयोद्धारावण्॥ १३८२॥**

संग्रामे वाच्ये प्रथमान्तात् प्रयोजनं योद्धा वा अस्य इत्यर्थे अण् स्यात्। सुभद्रा प्रयोजनम् अस्य सौभद्रः संग्रामः। भरताः योद्धारः अस्य भारतः संग्रामः।

१० ६० १० १० ०१० ०१०

**सोऽस्य निवासोऽभिजनो वाऽण्॥ १३८३॥**

प्रथमान्तात् निवासः अस्य इति अभिजनः वा अस्य इत्यर्थे अण् स्यात्। मथुरा निवासः अभिजनः वा अस्य माथुरः। सम्प्रति वासस्थानं निवासः। पूर्ववासस्थानम् अभिजनः।

१ः १ः

**पङ्क्त्यादयो निपात्याः॥ १३८४॥**

पङ्क्ति विंशति त्रिंशत् चत्वारिंशत् पञ्चाशत् षष्टि सप्तति अशीति नवति शत सहस्र पङ्क्त्यादि। पञ्च पदानि परिमाणम् अस्य पङ्क्तिः छन्दः, पदस्य द्व्यक्षरत्वात् द्विगुणितपञ्चाक्षरयुक्तपादकत्वात्तथात्वम्। द्वे दशके परिमाणम् अस्य विंशतिः। एवं त्रीणि दशकानि परिमाणम् अस्य इत्याद्यर्थे त्रिंशदादीनि निपात्यन्ते।

इति प्रथमान्ताधिकृततद्धितप्रकरणम्।

---

## अथ द्वितीयान्ताधिकृततद्धिताः।

५·

### द्वितीयायाः॥ १३८५॥

द्वितीयान्तात् वक्ष्यमाणाः तद्धिताः स्युः।

·२· ८· ·२· ८· ·१··१··१·

### तदधीते तद्वेद वेत्यण् *॥ १३८६॥

द्वितीयान्तात् अधीते वेद वा इत्यर्थे अण् स्यात्। व्याकरणम् अधीते वेद वा वैयाकरणः। औपनिषदः।

५:· ·१·

### वेदादिभ्यष्ठक्॥ १३८७॥

उक्ते अर्थे एभ्यः ठक् स्यात्। वैदिकः। वेद पुराण संहिता न्याय तर्क ज्योतिष यज्ञ धर्म वृत्ति लक्षण निमित्त संग्रह सूत्रान्त वेदादि।

५:· १·

### मीमांसादिभ्यो वुः॥ १३८८॥

---

* अक्षरग्रहणमात्रम् अध्ययनम्, अर्थज्ञानं वेदनम्, इत्यनयोः भेदात् उभयार्थग्रहणम्।

मीमांसकः। पदकः। क्रमकः। शिक्षकः।

छन्दोऽधीते छान्दसः स्यात् श्रोत्रियोऽत्र निपात्यते।

•२• ८• ७: ५• •१• १•

## तद्गच्छति पथिदूतयोरणनुपदात् तु खः ॥१३८९॥

पथिदूतयोः वाच्ययोः द्वितीयान्तात् गच्छति इत्यर्थे अण्, अनुपदात् तु खः स्यात्। मथुरां गच्छति दूतः पन्था वा माथुरः। अनुपदं गच्छति अनुपदीनः।

•८• ७• ७• •१•

## अधिकृत्य कृते ग्रन्थेऽण् ॥ १३९० ॥

द्वितीयान्तात् अधिकृत्य कृते ग्रन्थे अण् स्यात्। सुभद्राम् अधिकृत्य कृतः ग्रन्थः सौभद्रः। शाकुन्तलः।

७• •१• •१•

## आख्यायिकायां वा लुप् ॥ १३९१ ॥

पूर्वसूत्रेण कृततद्धितस्य लुप् स्यात् वा आख्यायिकारूपे ग्रन्थे वाच्ये। वासवदत्ताम् अधिकृत्य कृता आख्यायिका वासवदत्ता। शकुन्तला। तद्धितलुपि प्रकृतिलिङ्गता इति स्त्रीत्वम्।

५• १• १•

## द्वन्द्वाच्छो बहुलम् ॥ १३९२ ॥

द्वन्द्वसमाससाध्यात् द्वितीयान्तात् उक्ते अर्थे बहुलं छः स्यात्। छस्य ईय्। वाक्यञ्च पदञ्च अधिकृत्य कृतं प्रकरणं वाक्यपदीयम्। किरातञ्च अर्जुनञ्च अधिकृत्य कृतं काव्यं किरातार्जुनीयम्। बहुलग्रहणात् मालतीमाधवम् इत्यत्र अण् एव।

तद्रक्षतीति ठक् प्रोक्तस्तेन सामाजिको भवेत्।

तत् करोतीति शब्दात् ठक् शाब्दिकस्तेन कीर्त्तितः ।
पक्षिमीनमृगान् हन्तीत्यर्थे शाकुनिकादयः ।
धावत्यर्थे त्वनुपदात् ठकानुपदिकः स्मृतः ।
ललाटात् पश्यतीत्यर्थे भवेत् लालाटिकष्ठका ।
अर्थं गृह्णात्यार्थिकः स्यात् धर्मं चरति धार्मिकः ।
रथात् रथ्यं युगाद् युग्यं वहत्यर्थे यता भवेत् ।
शकटादण् वहत्यर्थे शाकटं तेन कीर्त्तितम् ।
विध्यत्यर्थे पदात् येन पद्या स्यात् शर्करादिका ।
ज्ञेयो धन्यो धनं लब्धा गणाद्गण्यस्तथा मतः * ।
वशाद्वश्यो गते त्वर्थे यता चेते बुधैः स्मृताः ।
अलं गच्छत्यध्वनः खो यश्च तस्माद्विधीयते ।
तेनाध्वनीनोऽध्वन्यश्च क्रमादेतौ मतौ सताम् ।
अलं यातीत्यभ्यमित्रात् यखौ छश्च विधीयते ।
अभ्यमित्र्योऽभ्यमित्रीणोऽप्यभ्यमित्रीय इत्यपि ।
वहत्यर्थे धुरो ढः स्यात् यत् खश्च क्रमशो भवेत् ।
धौरेयस्तेन धुर्य्यः स्यात् धुरीणश्चापि धूर्वहे ।
धुरः सर्वधुरीणः स्यात् सर्वादेः खे तदर्थके ।
आपन्नार्थे संशयात् ठक् तेन सांशयिको मतः † ।
गच्छत्यर्थे योजनात् ठक् तेन यौजनिकः स्मृतः ।
पथष्ठक् स्यात्तदर्थे च पथिकः पथिकी स्त्रियाम् ।
नित्यं यातीति पान्थः स्यात् पथो णेन निपात्यते ॥

* गणं गणनां प्रशंसया संख्यानम् इति यावत् तं लब्धा इत्यनुकर्षात् गण्यः प्रशंसनीयः इत्यर्थः ।

† संशयशब्दस्य तद्विषयत्वपरत्वे सांशयिकः, विषयः अपि भवति इति द्रष्टव्यम् । अतएव सांख्यतत्त्वकौमुद्यां सांशयिकेन गृहस्थेन इत्युक्तम् ।

५· ८· ·१· ५· १· ·१·

सङ्घात् समवैति ठक् सेनाया ण्यश्च ॥ १३८३ ॥

द्वितीयान्तात् सङ्घवाचिनः समवैति इत्यर्थे ठक्, सेनायाः ण्यः, चात् ठक् । सामूहिकः । सैन्यः, सैनिकः ।

८· ८· ·१· ·१· ५·

समावेशयति पचतीति वा परिमाणात्

·१·

ठक् ॥ १३८४ ॥

द्वितीयान्तात् परिमाणवाचिनः समावेशयति, पचति इति वा अर्थे ठक् स्यात् । प्रस्थं समावेशयति प्रास्थिकः कटाहः । द्रोणं पचति द्रौणिका ब्राह्मणी ।

·२· ८· ·१· ·१·

तदर्हतीति यत् ॥ १३८५ ॥

सोमम् अर्हति इति सोम्यः विप्रः । शीर्षच्छेदम् अर्हति इति शीर्षच्छेद्यः चौरः । दण्ड्यः । वध्यः । कशाम् अर्हति इति कश्यः । अर्घ्यः । गृह्यः । भाग्यः । इभ्यः । मूल्यम् ।

अर्हत्यर्थे तु शालायाः खे शालीनः सलज्जकः ।

कडङ्गरीयश्छेन स्यादर्हत्यर्थे कडङ्गरात् ॥

५:· १: ५· १:

शतादिभ्यो यठकौ पात्राद्घ घयौ ॥ १३८६ ॥

शतम् अर्हति इति शत्यः शतिकः । पात्रम् अर्हति इति पात्रियः पात्र्यः ।

५· १:

दक्षिणायाश्छयत्रौ ॥ १३८७ ॥

दक्षिणाम् अर्हति इति दक्षिणीयः दाक्षिण्यः ।

५· १· ५· ·१· ·२· ८· ·१·
यज्ञाद्द ऋत्विजः खञ् तत्कर्मार्हतीति
॥ १३९८ ॥

तत्कर्म अर्हति इत्यर्थे यज्ञात् घः, ऋत्विजः खञ् स्यात्। यज्ञकर्म अर्हति यज्ञियः। आर्त्विजीनः।

·२· ८· ५· ·१· ५· ·१· ·१·
तद्व्याप्नोति कालाट्ठक् द्विगोर्लुग्वा ॥ १३९९ ॥

व्याप्नोति इत्यर्थे कालवाचिनः ठक् स्यात्, द्विगोस्तु तस्य वा लुक्। पक्षं व्याप्नोति पाक्षिकं मासिकं चान्द्रायणम् अशौचञ्च। दाशाह्निकं दशाहम्। द्वादशरात्रिकं द्वादशरात्रम्। त्रैवार्षिकं त्रिवर्षम्। षाड्वार्षिकं षड्वर्षम्।

५:· ५:· १·
पथ्यङ्गकर्मपात्रपत्रेभ्यः सर्वादिभ्यः खः ॥ १४०० ॥

व्याप्नोति इत्यर्थे एभ्यः खः स्यात्। सर्वपथं व्याप्नोति सर्वपथीनः। सर्वाङ्गीनः। सर्वकर्मीणः।

८· ५· १·
प्राप्नोत्याप्रपदात् खः ॥ १४०१ ॥

आप्रपदं प्राप्नोति आप्रपदीनः।

८· ·१· ५:
अनुभवतीति परम्परापुत्रपौत्राभ्यां खञ्खौ
॥ १४०२ ॥

अनुभवति इत्यर्थे आभ्यां क्रमेण खञ्खौ स्तः। परम्पराम् अनुभवति पारम्परीणः। पुत्रपौत्रान् अनुभवति पुत्रपौत्रीणः।

५ः ७· १·

अवारपारात्यन्तानुकामेभ्यो गन्तरि खः ॥१४०३॥

एभ्यः गन्तरि अर्थे खः स्यात्। अवारं गन्ता अवारीणः। अवारपारेति व्यस्तस्य समस्तस्य विपरीतस्य अपि ग्रहणं, तेन अवारपारीणः पारावारीणः।

·१· २· ७· ८·

समांसमीना प्रतिवर्षं प्रसूतायां निपात्यते ॥ १४०४ ॥

समां समां प्रसूते समांसमीना।

·२· ८· ·१· ·१·

तदर्हतीति वत् ॥ १४०५ ॥

राजानम् अर्हति राजवत्। पूज्यवत्। यथावत्।

इति द्वितीयान्ताधिकृततद्धितप्रकरणम्।

---

## अथ तृतीयान्ताधिकृततद्धिताः।

५·

तृतीयायाः ॥ १४०६ ॥

तृतीयान्तात् वक्ष्यमाणाः प्रत्ययाः स्युः।

३· १· ५· ·१·

तेन रक्तं—रञ्जनादण् ॥ १४०७ ॥

तेन रक्तम् इत्यर्थे तृतीयान्तात् रञ्जनवाचिनः अण् स्यात्। मञ्जिष्ठया रक्तं माञ्जिष्ठं, स्त्रियाम् ईपि माञ्जिष्ठी।

५ः ·१·

लाक्षारोचनाभ्यां ठक् ॥ १४०८ ॥

तेन रक्तम् इत्यर्थे आभ्यां ठक् स्यात्। कः इत्। लाक्षिकम्। रौचनिकम्।

५॰ १॰ ५॰ १॰
नील्या अः पीतात् कः ॥ १४०९ ॥

नील्या रक्तं नीलम्। पीतेन रक्तं पीतकम्।

३॰ १॰ ७॰ ५॰ ॰१॰ ६॰ ॰१॰ ॰१॰
तेन युक्तं काले नक्षत्रादण् तस्य च वा
॰१॰
लुक् ॥ १४१० ॥

काले वाच्ये तेन युक्तम् इत्यर्थे नक्षत्रवाचिनः अण् स्यात्, तस्य च वा लुक्। पुष्येण युक्ता रात्रिः अणि स्त्रियाम् ईपि (८०७ सू॰) यलोपे पौषी। श्रवणेन युक्तः कालः श्रावणः। पक्षे, पुष्यं, श्रवणम्।

३॰ १॰ ७॰ ॰१॰
तेन परिवृतं रथेऽण् ॥ १४११ ॥

रथे वाच्ये तेन परिवृतम् इत्यर्थे अण् स्यात्। समन्तात् वेष्टितः परिवृतः। चर्मणा परिवृतः रथः चार्मणः।

३॰ ॰१॰ ॰१॰ ॰१॰
तेन ग्राह्यादीत्यण् ॥ १४१२ ॥

तृतीयान्तात् ग्राह्यम् इत्याद्यर्थे अण् स्यात्। चक्षुषा ग्राह्यम् चाक्षुषं रूपम्। श्रावणः शब्दः। रासनः रसः। अश्वैः उह्यः आश्वः रथः। वृषभैः वाह्यं वार्षभं शकटम्।

३॰ ॰१॰ ॰१॰ ॰१॰५॰ ॰१॰ १॰
तेनैकादिगित्यणुरसस्तु यः ॥ १४१३ ॥

एका समाना दिक् स्थानं यस्य सः एकदिक्। एकदिक्

इत्यर्थे तृतीयान्तात् अण् स्यात्, उरसस्तु यः । सुदाम्ना पर्वतेन एकदिक् सौदामनी (१२८३ सू०) न नलोपः । उरसा एकदिक् उरस्यम् ।

३· १· ·१· ·१· ५· ·१· १·

## तेन कृतमित्यण् पाणिनेस्तु छः ॥ १४१४ ॥

तृतीयान्तात् कृतम् इत्यर्थे अण् स्यात्, पाणिनेस्तु छः । मक्षिकाभिः कृतं माक्षिकं सारघं मधु । पाणिनिना कृतं पाणिनीयं व्याकरणम् ।

३· ८· १· ८· ८· ·१· ·१· ·१·

## तेन दीव्यति जितं खनति तरति वेति ठक् ॥ १४१५ ॥

तृतीयान्तात् दीव्यति इत्याद्यर्थे ठक् स्यात् । अक्षैः दीव्यति जितः वा आक्षिकः । खनित्रेण खनति खानित्रिकः । उडुपेन तरति औडुपिकः ।

३· ८· ·१· ·१· ५:· ·१· १·

## तेन चरतीति ठक् रथादिभ्यस्तु ठः प्लवग-

५· १·

## गादुभयम् ॥ १४१६ ॥

तृतीयान्तात् चरति इत्यर्थे ठक्, रथादिभ्यस्तु ठः, प्लवगगात् ठक्ठौ स्तः । हस्तिना चरति हास्तिकः । रथिकः । आश्विकः । प्लावगगिकः, प्लवगगिकः ।

३· ८· ·१· ५:· ·१· ५· ·१· ·१·

## तेन जीवतीति वेतनादिभ्यष्ठक् व्रतात्तु खञ् ॥ १४१७ ॥

वेतनेन जीवति वैतनिकः । धनुषा-धानुष्कः, (१२६३

सू० ) ठस्य कः। वाहन जाल वेश शक्ति उपदेश पाद उप-
स्थान ब्रैतमादि। शातीनः।

२· ८· ५ः· ·१·
तेन प्रवर्त्तते सहओजोऽम्भोभ्यष्ठक् ॥ १४१८ ॥

सहसा ( बलेन ) प्रवर्त्तते साहसिकः। औजसिकः।

३· १· ·१· ५· १·
तेन संयुक्तमिति गृहपतेर्ण्यः ॥ १४१९ ॥

गृहपतिना संयुक्तः गार्हपत्यः अग्निः।

३· ७· ५· १· ५· ·१· ·१·
तेन निर्मिते छन्दसो य उरसोऽण् च ॥ १४२० ॥

छन्दसा निर्मितं छन्दस्यम्। उरस्यः, औरसः।

३· १· ५· ·१· ५· ·१· १· ६·
तेन साध्यं सप्तपदात् खञ् द्विगोस्तु खस्तस्य
·१· ·१· ·१·
च न लुक् ॥ १४२१ ॥

सप्तभिः पदैः ( उच्चारितैः ) साध्यं साप्तपदीनं मैत्रम्।
द्वाभ्याम् अहोभ्यां साध्यः द्व्यहीनः यज्ञः। खस्य अत्र न
लुक्।

३· १· १ः
तेन वित्तं चुञ्चुचनौ * ॥ १४२२ ॥

विद्यया वित्तः ( ख्यातः ) विद्याचुञ्चुः विद्याचनः।
इमो घञन्तान्निर्वृत्ते पाकिमादि ततो भवेत्।
संरावादेर्णिनो ख्यातौ तेन सांराविणादयः॥

---

* चणप्रत्ययस्य मूर्द्धन्यणत्ववत्त्वमपि केचित् इच्छन्ति।

नावा तार्य्ये तु नाव्यः स्यात् वयस्यो वयसा समे।
तुलया संमिते तुल्यो मूल्यं मूलसमे मता॥

२· १:· ५· ·१·
**तेन परिजय्यलभ्यकार्य्याः कालात् ठक् ॥ १४२३ ॥**

तृतीयान्तात् परिजय्याद्यर्थे कालवाचकात् ठक् स्यात्। मासेन परिजय्यः ( जेतुं शक्यः ) मासिकः व्याधिः। मासेन लभ्यं मासिकं वेतनम्। मासेन कार्य्यं मासिकं चान्द्रायणम्।

१:· १:·
**अषडक्षीणालंकर्मीणालंपुरुषीणा निपात्याः ॥ १४२४ ॥**

षड्भिः अक्षैः ( इन्द्रियैः कर्णैः ) न श्रुतः अषडक्षीणः मन्त्रः द्वाभ्याम् एव कृतः इत्यर्थः। अलंकर्मणे अलंकर्मीणः। अलंपुरुषाय अलंपुरुषीणः।

३· ७· १·
**तेन तुल्यक्रियायां वतिः ॥ १४२५ ॥**

तृतीयान्तात् तुल्यक्रियायां द्योत्यायां वतिः स्यात्। इकारः इत्। मैत्रेण तुल्यं पचति मैत्रवत्। अत्र मैत्रतुल्य-क्रियातुल्या प्रकृतक्रिया इति गम्यते। वत्यन्तत्वात् अव्ययत्वम्।

इति तृतीयान्ताधिकृततद्धितप्रकरणम्।

---

अथ चतुर्थ्यन्ताधिकृततद्धिताः।

**चतुर्थ्याः ॥ १४२६ ॥**

चतुर्थ्यन्तात् वक्ष्यमाणाः प्रत्ययाः स्युः।

४· १· ·१· ५ः १· ७· १·

तस्मै हितमित्यवयवरथाभ्यां यः संज्ञायां स

·१· ७·

च स्त्रियाम् ॥ १४२७ ॥

दन्ताय हितम् दन्त्यम्। नसि हितं नस्यम्। शिरस्यम्। रथाय हिता रथ्या सुपद्धतिः।

५ः ·१·

कर्मन्ब्रह्मभ्यां च ॥ १४२८ ॥

कर्मणे हितं कर्मण्यम्। ब्रह्मण्यम्।

५ः·

आत्मन्विश्वजनसर्वजनपञ्चजनभोगान्तेभ्यः

१·

खः ॥ १४२९ ॥

एभ्यः खः स्यात् हितार्थे। आत्मनीनः (११८४ सू०) नलोपाभावः। विश्वजनीनः। सर्वभोगीनः।

५· ७· ७· १·

विकृतेस्तदर्थायां प्रकृतौ छः ॥ १४३० ॥

चतुर्थ्यन्तात् विकृतिवाचकात् तदर्थायां प्रकृतौ वाच्यायां छः स्यात्। अङ्गारेभ्यः इमानि अङ्गारीयाणि काष्ठानि। कुण्डलाय इदं कुण्डलीयं स्वर्णम्।

५· ·१·

बलेर्ढक् ॥ १४३१ ॥

उक्तेऽर्थे। बलये इमे बालेयाः तण्डुलाः।

४· ८· ५ः· ·१·

तस्मै प्रभवति संग्रामादिभ्यष्ठक् ॥ १४३२ ॥

तस्मै प्रभवति इत्यर्थे चतुर्थ्यन्तेभ्यः एभ्यः ठक् स्यात्। संग्राम, संनाह, संयोग, सम्पराय, संवेश, संसर्ग, निसर्ग, उपसर्ग, प्रवास, उपवास, सङ्घात, सन्ताप, संग्रामादि। संग्रामाय प्रभवति सांग्रामिकः।

५· १:
योगाद्‌ यठञौ ॥ १४३३ ॥

उक्ते अर्थे योगात् यठञौ स्तः। योग्यः यौगिकः।

५· ·१·
कार्मण उकञ् ॥ १४३४ ॥

कर्मणे प्रभवति कार्मुकम्।

७· ५· १·
तादर्थ्ये देवतान्तात् यः ॥ १४३५ ॥

तादर्थ्ये चतुर्थ्यन्तात् देवतान्तात् यः स्यात्। पितृदेवतायै इदं पितृदेवत्यम्। अग्निदेवत्यम्।

५: ·१· ६· ·१·
पादार्घाभ्यां चातिथेर्ञ्यः ॥ १४३६ ॥

चतुर्थ्यन्ताभ्यां आभ्याम् अपि तादर्थ्ये यः। अतिथेस्तु ञ्यः। ञः इत्। पादाय इदं पाद्यम्। अर्घ्यम्। अतिथये इदम् आतिथ्यम्।

२· ८· ·१· ५··१· १··१·
तदर्थं प्रयच्छति ठक् वृद्धेस्तु वृधुषिश्च ॥१४३७॥

तदर्थं प्रयच्छति इत्यर्थे चतुर्थ्यन्तात् ठक्, वृद्धिशब्दस्य तु वृधुषिः आदेशश्च स्यात्। द्विगुणाय प्रयच्छति द्वैगुणिकः। वृद्धये प्रयच्छति वार्धुषिकः। मूलात् अधिकलाभः वृद्धिः।

५· १·
कुशीदात् ठः ॥ १४३८ ॥

कुसीदाय (द्रव्यं) प्रयच्छति कुसीदिकः।

इति चतुर्थ्यन्ताधिकृततद्धितप्रकरणम्।

---

## अथ पञ्चम्यन्ताधिकृततद्धिताः।

५·
पञ्चम्याः ॥ १४३९ ॥

पञ्चम्यन्तात् वक्ष्यमाणाः प्रत्ययाः स्युः।

५· १· ·१· ·१· ५ः· ·१· ·१·
तत आगत इत्यण् तीर्थायस्थानेभ्यस्तु ठक् ॥ १४४० ॥

आगतः इत्यर्थे पञ्चम्यन्तात् अण् स्यात्, तीर्थात् आयस्थानवाचिभ्यश्च ठक्। मथुरायाः आगतः माथुरः। तीर्थात् आगतः तैर्थिकः। शुल्कशालातः आगतः शौल्कशालिकः। आपणिकः।

५ः· ·१·
विद्याजन्मसम्बन्धिभ्यो वुञ् ॥ १४४१ ॥

आगतः इत्यर्थे पञ्चम्यन्तात् विद्यासम्बन्धिनः जन्मसम्बन्धिनश्च वुञ् स्यात्। अः इत्। उपाध्यायात् आगतः औपाध्यायिकः। पितामहात् आगतः पैतामहकम्।

५· ·१· ५· ·१· १·१·
ऋतष्ठक् पितुस्तु यश्च ॥ १४४२ ॥

ऋदन्तेभ्यः तेभ्यः ठञ् स्यात्, पितृशब्दात् तु यः चात् ठञ् स्यात्। मातृकम्। भ्रातृकम्। पितुस्तु पित्र्यं, पैतृकम्।

५· ८··१··१· ५··१· १·

तस्मात् प्रभवतीत्यण् विदूरात् तु ञ्यः ॥१४४३॥

पञ्चम्यन्तात् प्रभवति इत्यर्थे अण्, विदूरशब्दात् तु ञ्यः स्यात्। हिमवतः प्रभवति हैमवती गङ्गा। विदूरात् प्रभवति वैदूर्य्यः मणिः।

५· ७· २·· १·

तस्मादनपेते धर्मपथ्यर्थन्यायेभ्यो यः ॥१४४४॥

धर्मात् अनपेतः धर्म्यः। पथ्यः। अर्थ्यः। न्याय्यः।

इति पञ्चम्यन्ताधिकृततद्धितप्रकरणम्।

## अथ षष्ठ्यन्ताधिकृततद्धिताः।

५·

षष्ठ्याः ॥ १४४५ ॥

षष्ठ्यन्तात् वक्ष्यमाणाः प्रत्ययाः स्युः। अधिकारः अयम्।

६· १· ·१··१·

तस्यापत्य—मित्यण् ॥ १४४६ ॥

षष्ठ्यन्तात् अपत्यम् इत्यर्थे अण् स्यात्। यदोः अपत्यं यादवः।

५·· १· ५·

दित्यदितियमपत्यन्तेभ्यो ण्योऽगणपतेः ॥१४४७॥

अपत्यम् इत्यर्थे षष्ठ्यन्तेभ्यः एभ्यः ण्यः स्यात्, न तु गण-

पतेः। अणः अपवादः। दितेः अपत्यं दैत्यः। आदित्यः *। याम्यः। आधिपत्यः। प्राजापत्यः। गणपतेस्तु, गाणपतः।

५· ५ः· ·१· ·१·

## अतो बाह्वादिभ्यश्चेञ् ॥ १४४८ ॥

अपत्यम् इत्यर्थे अदन्तात् बाह्वादिभ्यश्च इञ् स्यात्। दशरथस्य अपत्यं दाशरथिः। (सि० पृ० ४६८ पृ०) बाह्वादिः द्रष्टव्यः। बाहविः। सौमित्रिः।

·१· ७·

## व्यासस्याकङ् इञि ॥ १४४९ ॥

इञि परे व्यासस्य आकङ् स्यात्। ङः इत्। वैयासकिः।

७· ७· ·१· ५ः· ·१·

## गोत्रे—भवे च नडादिभ्यः फञ् ॥ १४५० ॥

गोत्रे भवे च अर्थे एभ्यः फञ् स्यात्। ञः इत्। फस्य आयन्। (सि० पृ० ४९९ पृ०) नडादि। द्वैपायनः। नारायणः।

५ः· ·१·

## गर्गादिभ्यो यञ् ॥ १४५१ ॥

गोत्रे अर्थे एभ्यः यञ्। (सि० पृ० ५०१ पृ०) गर्गादिः द्रष्टव्यः। गार्ग्यः। वात्स्यः। आगस्त्यः। पौलस्त्यः।

५ः· ·१· ७· ·१·

## विदादिभ्योऽञपत्ये च ॥ १४५२ ॥

एभ्यः गोत्रे अपत्ये च अञ् स्यात्। इञाद्यपवादः (सि० पृ० ५०१पृ०) विदादि। वैदः। और्वः। काश्यपः। पौत्रः। दौहित्रः। कौशिकः। भारद्वाजः। शौनकः।

---

* शुभ्रादित्वात् अदितेः ढक् अग्रे वक्ष्यते, तेन दैतेयः।

७· ५ः ७· ·१· ५· ·१·

## गोत्रे यञिञ्भ्यां यूनि फञ् द्रोणात् तु

·१· ·१·

## फिञ् वा ॥ १४५३ ॥

गोत्रे यौ यञिञौ तदन्ताभ्यां युवसंज्ञके अपत्ये फञ् स्यात्, द्रोणात् तु फिञ् वा । गर्गस्य अपत्यं युवा इत्यर्थे यञि तदन्तात् फञि च (१३७८ सू०) यलोपनिषेधे गार्ग्यायणः वात्स्यायनः । दक्षस्य गोत्रापत्यं युवा इति इञि फञि च इवर्णलोपे दाक्षायणः । द्रोणस्य तु इञि फिञि च द्रौणायणिः, पक्षे इञि द्रौणिः ।

५ः· ·१· ७·

## शिवादिभ्योऽणपत्ये— ॥ १४५४ ॥

अपत्ये अर्थे एभ्यः अण् स्यात् । इञः अपवादः । (सि० पू० ५०४ पृ० ) शिवादिः द्रष्टव्यः । शैवः ।

५ः·

## नदीमानुषीपर्य्यायेभ्यः ॥ १४५५ ॥

एभ्यः अपि अण् स्यात् । ढकः अपवादः । नद्याः, यामुनः सारस्वतः । गाङ्गेयस्तु देवत्वविवक्षया नदीपरत्वे गाङ्गः इत्येव । मानुष्याः, पार्थः सौभद्रः । आबन्तात् एव अण्, ईबन्तात् तु ढक् एव, तेन कौन्तेयः, द्रौपदेयः ।

५ः·

## ऋष्यन्धकवृष्णिकुरुवंशेभ्यो वा * ॥ १४५६ ॥

एभ्यः अपि अपत्ये अण् स्यात् । पक्षे इञादिः । मन्त्र-

* वाग्रहणम् अपाणिनीयम् अपि नाकुलिः आर्जुनिः फाल्गुणिः कार्ष्णिः इत्यादिभूरिप्रयोगम् अनुसृत्य कृतम् ।

द्रष्टारः ऋषयः। वासिष्ठः, गौतमः, वैश्वामित्रः। अन्धक-वंशात् आन्धकः। वृष्णिवंशात् वासुदेवः, आनिरुद्धः। कुरु-वंशात् नाकुलः, साहदेवः। पक्षे इञ्।

५॰ ५॰ ॰१॰ ॰१॰॰१॰

संख्यादेर्मातुरण् उर् च ॥ १४५७ ॥

संख्यापूर्वात् मातृशब्दात् अण् स्यात् अपत्ये, मातुः उर् च। द्वयोः मात्रोः अपत्यं द्वैमातुरः। षाण्मातुरः।

५ः ॰१॰ ५ः १ः ७॰

पुंस्त्रीभ्यां च ताभ्यां स्नञावणि ॥ १४५८ ॥

आभ्याम् अपत्ये अर्थे अण्, ताभ्याञ्च क्रमेण अणि परे स्नञौ आगमौ स्याताम्। पुंसः अपत्यम् पौंस्नः, स्त्रियाः स्त्रैणः। इदमाद्यर्थे अपि दृश्येते।

५॰ ॰१॰ ॰१॰

कन्यायाः कनीन् च ॥ १४५९ ॥

कन्याशब्दात् अण् स्यात्, तस्याश्च कनीनादेशः। ढकः अपवादः। कन्यायाः अपत्यं कानीनः।

५ः॰ ॰१॰

स्त्रीभ्यो ढक् ॥ १४६० ॥

स्त्रीप्रत्ययान्तेभ्यः अपत्ये ढक् स्यात्। सरमायाः अपत्यं सारमेयः। वैनतेयः। रौहिणेयः बुधः।

५॰ ५॰ ५॰ ५ः॰ ॰१॰

द्व्यचोऽनिञ इतः शुभ्रादिभ्यश्च ॥ १४६१ ॥

इञन्तभिन्नात् द्विस्वरयुक्तात् इदन्तात् शुभ्रादिभ्यश्च अपत्ये ढक् स्यात्। अत्रि—आत्रेयः। अग्नि—आग्नेयः।

शुभ्रादि ( सि० पू० ५०६ पृ० ) द्रष्टव्यम्। शौभ्रेयः। मार्कण्डेयः। काद्रवेयः। आदितेयः। वैमात्रेयः।

६: १ ७

## कल्याण्यादीनामिनङ् ढकि ॥ १४६२ ॥

ढकि परे आसाम् इनङादेशः स्यात्। (सि० पू० ५०८पृ०) कल्याण्यादि। सौभागिनेयः। दौर्भागिनेयः।

५: ५ १: ७ १ १

## मातृपितृभ्यां स्वसुश्छण्टकौ ढकि लोपश्च ॥१४६३॥

आभ्यां परस्मात् स्वसृशब्दात् अपत्ये अर्थे छण्टकौ स्तः ढकि परे, तयोः अन्त्यलोपश्च। मातृष्वस्रीयः, मातृष्वसेयः। पितृष्वस्रीयः। पितृष्वसेयः।

५: १

## राजन्श्वशुराभ्यां यः ॥ १४६४ ॥

आभ्याम् अपत्ये यः स्यात्। राजन्यः। श्वशुर्यः।

५ १ ७

## क्षत्राद् घो जातौ ॥ १४६५ ॥

क्षत्रियः जातिः क्षात्रिः अन्यः।

५ १

## कुलात् खः ॥ १४६६ ॥

कुलीनः।

सत्कुलात् खे सत्कुलीनः सकुल्यः सकुलायता।
खञा माहाकुलीनः स्यात् दौष्कुलेयो ढका तथा ॥

५ १ ५ १ १

## स्वसुश्छो भ्रातुर्व्यश्च ॥ १४६७ ॥

यात् छः। स्वस्रीयः। भ्रातृव्यः। भ्रात्रीयः।

पृ॰ ७॰ १ः ॰१॰ ॰१॰

## मनोर्जातावञ्यतौ षुक् च ॥ १४६८ ॥

मनोः अपत्यं मानुषः मनुष्यः।

अपत्ये कुत्सिते मूढ़े मनोरौत्सर्गिके स्मृतः।

नकारस्य च मूर्द्धन्यस्तेन सिध्यति माणवः * ॥

पृ॰ ॰१॰

## जनपदवचनक्षत्रियादञ् ॥ १४६९ ॥

जनपदवाचकशब्दस्य क्षत्रियपरत्वे तदन्तात् अपत्ये अर्थे अञ् स्यात्। पाञ्चालः। कैकयः। कैकटः। ऐक्ष्वाकः। निपातनात् अन्त्यलोपः।

पृ॰ ॰१॰

## द्व्यञ्मगधकलिङ्गादण् ॥ १४७० ॥

द्व्यचः, आङ्गः, वाङ्गः, सैन्धवः। मागधः। कालिङ्गः।

पृः॰ १॰

## कुर्वादिभ्यो ण्यः ॥ १४७१ ॥

अपत्ये अर्थे एभ्यः ण्यः। कौरव्यः। काव्यः। (सि॰ पृ॰ ५१८ पृ॰)।

पृः॰ ॰१॰

## वृद्धेत्कोशलेभ्यः ष्यञ् ॥ १४७२ ॥

वृद्धात् मालव्यः। इतः आवन्त्यः। कौशल्यः।

पृ॰ ॰१॰

## पाण्डोर्ड्यण् ॥ १४७३ ॥

---

* तदुत्तरं स्वार्थिके के माणवकः अपि कुत्सितार्थस्य अणा एव द्योतनात् न तदर्थके इति बोध्यम्।

इञ्त्वेन अणि द्व्यचत्वेन अञि च प्राप्ते आरम्भः। पाण्डवः।

५ः ७ ६ः १ २ १

**यस्कादिभ्यो गोत्रे विहितानां लुप् तेनैव**

७ ७

**बहुत्वेऽस्त्रियाम् ॥ १४७४ ॥**

यस्कादिभ्यः गोत्रे अर्थे विहितानां लुप् स्यात्, तदन्तत्वेन एव बहुत्वे, न तु स्त्रियाम्। यस्क, अत्रि, भृगु, कुत्स, वसिष्ठ, गोतम, अङ्गिरस्, यस्कादि। यस्काः। अत्रयः। भृगवः। बहुत्वे किम्, आत्रेयः आत्रेयौ इत्यत्र न। तेनैव किं, प्रियभार्गवाः। स्त्रियां तु, आत्रेय्यः। आपत्यार्थकाः अपि केचित् प्रत्ययाः भवाद्यर्थे भवन्ति। प्रयोगानुसारात् ते च अवगन्तव्याः।

इति षष्ठ्यन्ताधिकारे अपत्यार्थतद्धितप्रकरणम्।

---

## अथ षष्ठ्यन्ताधिकारे तद्राजाद्यर्थीयाः।

५ः १ः ६ः ७

**जनपदवाचिक्षत्रियेभ्यो विहितास्तेषां राजनि ॥ १४७५ ॥**

जनपदवाचिक्षत्रियरूढेभ्यः विहिताः अञादयः तद्राजनि (तेषां राजनि) अपि अर्थे स्युः। पञ्चालानां राजा पाञ्चालः। कैकेयः। आङ्गः। वाङ्गः। मागधः।

६ १ २ १ ७ ७

**तद्राजस्य लुप् तेनैवार्थबहुत्वेऽस्त्रियाम् ॥१४७६॥**

तद्राजार्थकप्रत्ययस्य लुप् स्यात्, तदन्तत्वेन एव बहुत्वे, न तु स्त्रियाम्। पञ्चालानां राजानः पञ्चालाः, अङ्गाः, वङ्गाः।

बहुत्वे किं, वाङ्गः वाङ्गी। तेनैव किं, प्रियः वाङ्गः येषां ते प्रियवाङ्गाः इत्यादौ समासकृतबहुत्वे न। स्त्रियान्तु, वाङ्गः वाङ्ग्यः।

७ ५ः

## स्त्रियां कुरुकुन्त्यवन्तिभ्यः॥ १४७७ ॥

एभ्यः परस्य तद्राजार्थकप्रत्ययस्य लुप् स्यात् स्त्रियाम्। कुरूः, अत्र ण्यस्य लुपि (८२७ सू०) ऊङ्। कुन्ती, अवन्ती। उभयत्र ण्यञः णित्त्वात् स्त्रियाम् ईप्। लुपा लुप्तत्वेन उभयत्र स्त्रीत्वम्।

६ १ १ १ ५ः १

## तस्य समूह इत्यण् भिक्षादिभ्यश्च ॥१४७८॥

षष्ठ्यन्तात् भिक्षादिभ्यश्च समूहः इत्यर्थे अण् स्यात्। भिक्षादिग्रहणं बाधकप्रत्ययबाधनार्थम्। काकानां समूहः काकम् औलुकं वाडवम् श्वानम् कापोतं मायूरम् भिक्षादि। (सि० पू० ५३४ पृ०) भैक्षम्।

५ः १ ५ः १

## वृक्षवाचिभ्यः खण्डो दूर्वादिभ्यः काण्डः* ॥१४७९

एतेभ्यः क्रमेण एतौ स्तः समूहे अर्थे। वृक्षखण्डः। तरुखण्डः। पादपखण्डः। दूर्वाकाण्डम्। तमस्काण्डम्। कर्मकाण्डम्।

५ः १

## उक्षोष्ट्रादिभ्यो वुञ् ॥ १३८० ॥

उष्ट्रादि (सि० पू० ५३४ पृ०) वार्षकम्। औष्ट्रकम्। राजन्यकम्।

---

* केचित् खण्डः इत्यत्र षण्डः इत्येव पठन्ति उदाहरन्ति च।

गणिकायास्तु गाणिक्यं केदारात् ठञ्यञौ च वुञ्।
कैदारिकं च कैदार्य्यं कैदारकमपीष्यते॥

५ः ०१०

अचित्तधेनुहस्तिभ्यष्ठक्॥ १४८१॥

अचित्तात्, आपूपिकं शाष्कुलिकम्। धैनुकम्। हास्तिकम्।

५० १ः ५० १ः

अश्वाच्छाणौ केशाद् यञ्ठकौ॥ १४८२॥

आश्वीयम्, आश्वम्। कैश्यम्, कैशिकम्।
पाशः पक्षश्च हस्तश्च स्युरेते केशतो गणे।
केशपाशः केशपक्षः केशहस्तस्ततो भवेत्॥

५ः० १० १० ०१० ७०

ग्रामजनगजबन्धुसहायेभ्यस्तः स च स्त्रियाम्॥ १४८३॥

एभ्यः समूहे तः स्यात् तदन्तश्च स्त्रियाम्। ग्रामता। जनता। बन्धुता।

५ः० १०

पाशादिभ्यो यः॥ १४८४॥

एभ्यः यः, सः च स्त्रियाम्। पाश्या। तृण्या। वात्या। धूम्या।

५ः० १०

कमलादिभ्य इनिः—॥ १४८५॥

एभ्यः इनिः, सः च स्त्रियाम्। इकारः इत्। कमल पद्म अम्भोज सरोज कुमुद नल कैरव कमलादि। कमलिनी। कुमुदिनी। नलिनी, उपचारात् तदृक्षे अपि एतदन्तं प्रयुज्यते।

६· १· ·१· ·१·

तस्येदमित्यण् ॥ १४८६ ॥

षष्ठ्यन्तात् इदम् अर्थे अण् स्यात्। सिन्धोः इदं सैन्धवम्।

५· १·

रथाद्यः ॥ १४८७ ॥

रथस्य इदं रथ्यम्।

५ः· ·१·

वाहनाध्वर्य्युपरिषद्भ्योऽञ् ॥ १४८८ ॥

हास्तिनम्। वार्षभम्। औष्ट्रम्। आध्वर्य्यवम्। पारिषदम्।

५ः १·

छन्दोगनटाभ्यां यः ॥ १४८९ ॥

इदम् अर्थे। छान्दोग्यम्। नाट्यम्।

६· ७· ५ः· ७· ·१··१·

तस्य विकारे प्राण्योषधिवृक्षेभ्योऽवयवे चाण् ॥ १४९० ॥

षष्ठ्यन्तात् विकारे अर्थे प्राण्यादिभ्यः अवयवे च अर्थे अण् स्यात्। अश्मनः विकारः आश्मनः। मार्त्तिकः। कपोतस्य विकारः अवयवः वा कापोतः। दौर्वं काण्डं भस्म वा। वैल्वं भस्म मूलं वा।

५ः ·१· ·१·

त्रपुजतुभ्यां षुक् च ॥ १४९१ ॥

आभ्यां विकारे अर्थे अण्, तस्मिन् च सति तयोः षुगागमः स्यात्। उकौ इतौ। त्रापुषम्। जातुषम्।

·१· ·१· ७:

**मयट् वाऽभक्ष्याच्छादनयोः ॥ १४९२ ॥**

षष्ठ्यन्तात् विकारे अवयवे च अर्थे मयट् वा स्यात्, न तु भक्ष्याच्छादनयोः । पक्षे अण् । अश्ममयम् आश्मनम् । भक्ष्ये तु, मौद्गः सूपः । आच्छादने, कार्पासं वस्त्रम् ।

५· ५:· ·१ २·

**वृद्धात् शरादिभ्यश्च नित्यम् ॥ १४९३ ॥**

वृद्धसंज्ञकात् षष्ठ्यन्तात् शरादिभ्यश्च उक्ते अर्थे नित्यं मयट् स्यात्, न तु भक्ष्याच्छादनयोः । वृद्धात् आम्रमयं शालमयम् । शरादि ( सि० पू० ५९९ पृ० )। शरमयम्, इक्षुमयम् । भक्ष्ये तु अण् एव, ऐक्षवम् ।

५· ७· ५· ७· ५· ७·

**पिष्टाद्द्रव्ये गोः पुरीषे ऊर्णाया वस्त्रे ॥१४९४॥**

एतेषु वाच्येषु एभ्यः नित्यं मयट् स्यात् । पिष्टमयम् अन्नम् । गोमयम् । ऊर्णामयं वस्त्रम् । इदन्तु अपाणिनीयम् । तन्मते और्णम् एव ।

७· ५: ७· ·१· ·१·

**असंज्ञायां तिलयवाभ्यां संज्ञायां तु वुक् ॥१४९५॥**

भक्ष्यार्थम् । तिलमयम् । यवमयम् अन्नम् । संज्ञायां तु, तैलकं, यावकम् ।

७· १·

**संज्ञायां कः ॥ १४९६ ॥**

पिष्टकः अपूपः । चूर्णकः । मण्डकः ।

५· ·१·

**एण्या ढक् ॥ १४९७ ॥**

ऐणेयं मांसं चर्म वा।

० ५ः १०

## गोपयोर्भ्यां यः ॥ १४९८ ॥

गव्यं पयो मांसं वा। पयस्यं नवनीतम्।

७० ०१० ०१० ५ः०

## फले लुक् न प्लक्षादिभ्यः ॥ १४९९ ॥

विकारार्थे तद्धितस्य फले वाच्ये लुक् स्यात्, न तु प्लक्षादिभ्यः। आमलक्याः विकारः (फलम) आमलकम् बदरम्। प्लक्षादेस्तु, प्लाक्षम्। न्यग्रोध अश्वत्थ इङ्गुदी शिग्रु बृहती प्लक्षादि।

५० १ः ०१०

## जम्ब्वा लुग्लुपौ वा ॥ १५०० ॥

जम्बूशब्दात् परस्य विकारार्थकस्य तद्धितस्य फले वाच्ये लुग्लुपौ वा स्तः। पक्षे प्रत्ययस्थितिः। जम्बु लुपा लुप्तत्वे प्रकृतिलिङ्गता जम्बूः। जाम्बवम्।

५ः० ५ः० ०१० ०१०

## फलपाकशुष्यद्भ्यो हरितक्यादिभ्यश्च लुप् ॥१५०१॥

फलपाकेन शुष्यद्भ्यः (व्रीह्यादिभ्यः) हरितक्यादिभ्यश्च विकारार्थकप्रत्ययस्य फले वाच्ये लुप् स्यात्। व्रीहेः विकारः फलं व्रीहिः। यवः। मुद्गः। (सि० पृ० ५५१ द्र०) हरितक्यादि। हरितक्याः विकारः फलं हरितकी।

६० १० ०१ ०१०

## तस्य धर्म्यमिति ठक् ॥ १५०२ ॥

षष्ठ्यन्तात् धर्म्यम् इत्यर्थे ठक् स्यात्। आपणस्य धर्म्यम् आपणिकम।

हृदयस्य प्रियं हृद्यं पौरुषेयो ढञा प्रिये ।
पुत्राद्यञो निमित्तेऽर्थे पुत्रः पुत्रीय इष्यते ॥

६· १· १· ५ः ·१·
## तस्येश्वर इति सर्वभूमिपृथिवीभ्यामण् ॥१५०३॥

सर्वभूमेः ईश्वरः सार्वभौमः । पृथिव्याः—पार्थिवः ।

७· १ः
## भूतपूर्वे रूप्यचरटौ ॥ १५०४ ॥

षष्ठ्यन्तात् भूतपूर्वे अर्थे रूप्यचरटौ स्तः । टः इत् । राज्ञः भूतपूर्वा भूमिः राजरूप्या । शुभ्रायाः भूतपूर्वा भूमिः शुभ्रारूप्या । चरटि, राजचरी शुभ्रचरी ।

६· १· १ः ७ः
## तस्य भावस्त्वतौ स्त्रीनपुंसकयोः ॥ १५०५ ॥

षष्ठ्यन्तात् भावः इत्यर्थे त्वतौ स्तः, तदन्तौ च क्रमेण स्त्रीनपुंसकयोः स्तः । भावः शब्दस्य प्रवृत्तिनिमित्तं यद्धर्मं निमित्तीकृत्य शब्दः स्वार्थे प्रवर्त्तते सः धर्मः । शब्दस्य प्रवृत्तिनिमित्तं स च जातिगुणक्रियासंज्ञादिः । घटत्वं घटता । शुक्लत्वम् शुक्लता । पाचकत्वं पाचकता । चैत्रत्वं चैत्रता ।

५ः· १· ·१·
## पृथ्वादिभ्य इमनिर्वा ॥ १५०६ ॥

एभ्यः भावे इमनिः स्यात् वा । इकारः इत् । पक्षे त्वतौ । इमनि डिद्भावे प्रथयादेशे च प्रथिमा, म्रदिमा । ( सि· पू० ६५३ पृ० ) पृथ्वादि ।

५ः· ·१· १·
## वर्णदृढादिभ्यः ष्यञ् च ॥ १५०७ ॥

शुक्लादिवर्णवाचिभ्यः दृढादिभ्यश्च भावे ष्यञ् स्यात्, चात्

इमनिः त्वतौ च। पक्षे इतौ। शौक्ल्यम् शुक्लिमा शुक्लत्वम् शुक्लता। दार्ढ्यम् द्रढ़िमा दृढ़त्वम् दृढ़ता। दृढ़ादि (सि॰ पू॰ ६५३ पृ॰) द्रष्टव्यम्।

७॰ ५॰ १॰ ॰१॰

## संख्येये संख्यावचनात् कः वा * ॥ १५०८ ॥

संख्येये वर्त्तमानात् सख्यावाचकात् भावे कः स्यात् वा। पक्षे त्वतौ। पञ्चानां भावः पञ्चकम् पञ्चत्वम् पञ्चता पञ्चसंख्या इत्यर्थः।

५ः॰ ७॰ ॰१॰ ॰१॰

## गुणवचनब्राह्मणादिभ्यः कर्मणि च ष्यञ् † ॥ १५०९ ॥

एभ्यः भावे कर्मणि च ष्यञ् स्यात्। शुक्लस्य भावः कर्म वा शौक्ल्यम्। ब्राह्मणस्य भावः कर्म वा ब्राह्मण्यम्। ब्राह्मणादि (सि॰ पू॰ ६५४ पृ॰)।

भावे कर्मणि सख्युर्यः सख्यं तेन निदर्शितम्।
स्तेनात् तदर्थके ये च स्तेयमेतत् निपात्यते।
वाणिज्यं वणिजो येन दूत्यं दूतात्तदर्थयोः॥

५ः॰ ॰१॰

## पत्यन्तपुरोहितादिभ्यो यक् ॥ १५१० ॥

भावे कर्मणि च अर्थे एभ्यः यक् स्यात्। आधिपत्यम्। सैनापत्यम्। पौरोहित्यम्। पुरोहितादि (सि॰पू॰ ६५५पृ॰)।

* कविधानम् अपाणिनीयम् अपि भूरिप्रयोगात् कृतम्।

† गुणम् उक्तवान् इति व्युत्पत्त्या गुणवाचकस्य एव द्रव्यपरत्वे प्रत्ययः, तेन शुक्लादिशब्देभ्यः एव द्रव्यपरेभ्यः प्रत्ययः, न रूपादिशब्देभ्यः, तेषां गुणिपरत्वाभावात्।

५: ०१०

प्राणिजातिवयोवचनाभ्यामञ् ॥ १५११ ॥

आभ्यां प्रागुक्ते अर्थे अञ् स्यात्। प्राणिजातिः, अश्वस्य भावः कर्म वा आश्वम्, वार्षभम्। वयोवचनात्, कौमार, कैशोरम्।

५० ५० ५:०० १०

इगन्ताल्लघुपूर्वाद्धायनयुवादिभ्यश्च ॥१५१२॥

एभ्यः अण् स्यात्। शुचि—शौचम्। मौनम्। लाघवम्। गौरवम्। लघुपूर्वात् किं, पाण्डुत्वम्। द्वैहायनम्। चातुर्हायनम् *। यौवनम्। युवादि ( सि० पृ० ६५६ पृ० )।

५० ५० ०१० ५००१० ०१०

योपधाद्गुरूपोत्तमाद्वुञ् सहायात् तु यञ्

०१०

च ॥ १५१३ ॥

गुरूपान्त्यवर्णयुक्तात् योपधात् वुञ् स्यात्, सहायात् तु यञ्वुञौ। रामणीयकम्। कामनीयकम्। साहायकम्। साहाय्यम्। साख्यम् अत्र निपात्यते इति केचित्।

७० ७० ५: ०१०

भवने क्षेत्रे व्रीहिशालिभ्यां ढक् ॥ १५१४ ॥

व्रीहीणां भवनं क्षेत्रं व्रैहेयम्। शालेयम्।
यथामुखात् संमुखाच्च षष्ठ्यन्तात् दर्शने तु खः।
यथामुखीनस्तेन स्यात् सम्मुखीनस्तथा भवेत्॥

* चातुर्हायणम् इत्यत्र णत्वम् अपि इच्छन्ति।

६· ७· ५ः· १· ५· ·१· १·
तस्य मूले कर्णादिभ्यो जाहः पक्षात् तु तिः
॥ १५१५ ॥

कर्णस्य मूलं कर्णजाहम्। (सि॰ पू॰ ६६२ सू॰) कर्णादि।
पक्षस्य मूलं पक्षतिः।

६· ७· ५· ·१·
तस्य पूरणे संख्याया, डट् ॥ १५१६ ॥

तस्य पूरणे अर्थे संख्यावाचिभ्यः डट् स्यात्। डटो इतौ।
एकादशानां पूरणः एकादशः। द्वादशः।

५· ५· ·१·
नान्तादसंख्यादेर्मट् ॥ १५१७ ॥

असंख्यादेः नान्तात् मट् स्यात्। डटः अपवादः। पञ्चमः।
अष्टमः। नवमः। दशमः। संख्यादेस्तु डटि।

५ः· ·१· ६·
षट्कतिकतिपयचतुर्भ्यस्थुँक् डटः— ॥१५१८॥

एभ्यः डटः थुँगागमः स्यात्। उको इतौ। षष्ठः।

५ः· ·१·
बहुगणपूगसङ्घेभ्यस्तिथुँक् * ॥ १५१९ ॥

एभ्यः डटः तिथुँक् स्यात्। उको इतौ। बहुतिथः। गण-
तिथः। पूगतिथः। सङ्घतिथः।

५· ·१·
वतोरिथुँक् ॥ १५२० ॥

वत्यन्तात् डटः इथुँक् स्यात्। यावतिथः। तावतिथः।

---

* पूगसङ्घयोः ग्रहणात् असंख्यावाचित्वे अपि ताभ्यां डट्।

५ः　१· ६· ·१· ·१·

## द्वित्रिभ्यां तीयस्त्रेस्तृ च ॥ १५२१ ॥

आभ्यां तीयः स्यात् पूरणे अर्थे, त्रेः तृ च आदेशः। डटः अपवादः। द्वितीयः। तृतीयः।

५ः·　·१ ·१·

## विंशत्यादिभ्यस्तमड् वा ॥ १५२२ ॥

संख्यादिभ्यः अपि। पक्षे डट्। विंशतितमः विंशः। एकविंशतितमः एकविंशः।

२·　५ः·

## नित्यं शतादिमासार्द्धमाससंवत्सरेभ्यः ॥१५२३॥

शततमः। सहस्रतमः। मासतमः। अर्द्धमासतमः।

५·　·१·　५·

## षष्ट्यादेश्चासंख्यादे ॥ १५२४ ॥

षष्टितमः। सप्ततितमः। संख्यादेस्तु, एकषष्ठः।

१ः·　१ः·

## पितृव्यादयो निपात्याः ॥ १५२५ ॥

पितुः भ्राता पितृव्यः। मातुः भ्राता मातुलः। पितुः पिता पितामहः। मातुः पिता मातामहः।

इति षष्ठ्यन्ताधिकृततद्धितप्रकरणम्।

---

### अथ सप्तम्यन्ताधिकृततद्धिताः।

५·

## सप्तम्याः ॥ १५२६ ॥

सप्तम्यन्तात् वक्ष्यमाणाः प्रत्ययाः स्युः। अधिकारः अयम्।

७· १· ·१· ·१· ५ः ·१· १·

**तत्र संस्कृतमित्यण् शूलोखाभ्यां तु यः ॥१५२७॥**

सप्तम्यन्तात् संस्कृतम् इत्यर्थे अण्, शूलोखाभ्यान्तु यः स्यात्। भ्राष्ट्रे संस्कृताः भ्राष्ट्राः यवाः। पैठरः। शूले संस्कृतं शूल्यम्। उख्यं मांसम्।

७· ·१··१· ·१·

**तत्र पिष्टादौत्यण् ॥ १५२८ ॥**

सप्तम्यन्तात् पिष्टादि इति अर्थे अण् स्यात्। दृषदि पिष्टाः दार्षदाः सक्तवः। उलूखले चुस्तं औलूखलं चूर्णम्। चतुर्दश्यां दृष्टं चातुर्दशं रक्षः।

७· ·१· ·१· ·१·

**तत्र भवादौ[illegible]ण् ॥ १५२९ ॥**

सप्तम्यन्तात् भवादिषु अर्थेषु अण् स्यात्। भव, जात, बद्ध, शोभी, क्षत, क्रीत, कुशल, सम्भूत, उप्त, देय, साधु, पुष्यत्, पच्यमान, इति भवादि। मथुरायां भवादि माथुरः। प्रकृतिभेदात् अर्थभेदे प्रत्ययभेदाः अग्रे वक्ष्यन्ते। वसन्ते पुष्यन्ती वासन्ती। शरदि पच्यमानाः शारदाः।

५· १· ५ः ७·

**राष्ट्राद्दः पारावाराभ्यां व्यस्तसमस्तवैपरीत्ये**

१·

**खः ॥ १५३० ॥**

राष्ट्रे भवादि राष्ट्रियः। पारीणः। अवारीणः। पारावारीणः। अवारपारीणः।

५· १ः

**ग्रामाद्यखौ ॥ १५३१ ॥**

ग्रामे भवादि ग्राम्यः ग्रामीणः ।

५:· ७:· ·१·

**कुलकुक्षिग्रीवाभ्यः श्वस्यलङ्कारेषु ढकञ्**

**॥ १५३२ ॥**

आभ्यः क्रमेण एतेषु वाच्येषु भवाद्यर्थे ढकञ् स्यात् । ञः इत् । कुले भवः कौलेयकः श्वा । कुक्षौ बद्धः कौक्षेयकः असिः । ग्रैवेयकः ग्रीवाशोभी अलङ्कारः ।

५:· ·१·

**नद्यादिभ्यो ढक् ॥ १५३३ ॥**

भवाद्यर्थे । नादेयम् । ( सि० पू० ५५६ पृ० ) नद्यादि ।

५:· ·१·

**दक्षिणापश्चात्पुरोभ्यस्त्यक् ॥ १५३४ ॥**

दक्षिणा इति आजन्तम् । दाक्षिणात्यः । पाश्चात्यः । पौरस्त्यः ।

५:· १· ५· ·१· ·१·

**द्युप्रागपागुदक्प्रत्यग्भ्यो यो दिवोऽनुत्वञ्च**

**॥ १५३५ ॥**

दिवि भवादि दिव्यम्, उत्वाभावः । प्राच्यं प्रतीच्यम् ।

५:· १·

**अमेहक्वतसिभ्यस्त्यः ॥ १५३६ ॥**

अमा ( सह ) भवादि अमात्यः । इहत्यः । क्वत्यः । कुत्रत्यः । तत्रत्यः । ततस्त्यः । कुतस्त्यः ।

५· ·१· ५· ·१· ·१·

**अव्ययात् तनट् शश्वतस्तु तुकञ् ॥ १५३७ ॥**

भवाद्यर्थे अव्ययात् तनट् स्यात्, अप्रत्ययस्तु इकञ्। प्रातस्तनम्। दोषातनी। सायन्तनी। सदातनः। निपातनात् दाग्रागमे नादेशे सनातनः। शाश्वतिकः।

५: १:
## ह्यश्श्वोभ्यां त्यतनटौ॥ १५३८॥

ह्यः (गताहनि) भवादि ह्यस्त्यं ह्यस्तनम्। श्वः (अनागताहनि) भवादि श्वस्त्यं श्वस्तनम्।

५: १· ५· ·१··१·
## वृद्धान्याभ्यां छः राज्ञः कुक् च॥ १५३९॥

शालायां भवादि शालीयम्। आरातीयः। त्यदादेः (१२५७ सू०) वृद्धसंज्ञतया तदीयः यदीयः एतदीयः (१२१५ सू०) टुकि अन्यदीयः। राजकीयम्।

५· १: १··१·
## वत्वन्तभवतष्ठक्छौ पदत्वञ्च॥ १५४०॥

वत्वन्तभवच्छब्दात् एतौ स्तः, तस्मिन् च पदत्वम्। भावत्कः। भवदीयः। वत्वन्तेति किं, मवन्तात् मा भूत्।

५: ·१· ·१· ७· ७· ·१·
## युष्मदस्मद्भ्यां वा खञ् तस्मिन्नणि च युष्मा-
१: ७· ·१· १:
## काकास्माकौ एकवचने तु तवकममकौ॥ १५४१॥

आभ्यां वा खञ् स्यात्। तस्मिन् खञि औत्सर्गिके अणि च परे अनयोः एतौ स्तः, एकवचने तु तवकममकौ। युष्मासु भवादि यौष्माकीनः, पक्षे छे युष्मदीयः। आस्माकीनः अस्मदीयः। एकवचने तु, तावकीनः त्वदीयः। मामकीनः

मदीयः। औत्सर्गिके त्वणि तु, यौष्माकम्। आस्माकम्। तावकम्। मामकम्।

५· ·१· ७ः·

अरण्याद् वुञ् पथिग्रन्थहस्तिषु ॥ १५४२ ॥

एषु वाच्येषु भवाद्यर्थे अरण्यात् वुञ् स्यात्। आरण्यकः पन्थाः ग्रन्थः (वेदैकदेशः) हस्ती वा।

५· ५ः· ·१· १·

गर्त्तोत्तरपदात् गहादिभ्यश्च छः ॥१५४३॥

शृगालगर्त्तीयम। गहादिः आकृतिगणः। मत्वर्थीयः। पर्वतीयः। उपाध्यायीयः।

५ः· ५ः· ·१· · ·१·

स्वार्थादिभ्योऽध्यात्मादिभ्यश्च ठक् ॥ १५४४ ॥

स्वार्थिकः। आध्यात्मिकम्। आधिभौतिकम्। आधिदैविकम्।

५ः· १·

वह्निर्देवपञ्चजनगम्भीरेभ्यो ण्यः ॥ १५४५ ॥

(१२८९ सू०) टिलोपे वाह्यः दैव्यः पाञ्चजन्यः। गाम्भीर्य्यः।

५ः १· ६· १· ·१·

मध्यमाधराभ्यां मोऽधरस्य रलोपश्च ॥ १५४६ ॥

मध्ये भवादि मध्यमः। अधरे भवादि अधमः।

५· १ः

आदेर्यमौ ॥ १५४७ ॥

आद्यः। आदिमः।

५: १० ५० १:० ०१०
अन्तपश्चादग्रां डिमोऽग्राद्यघच्छाश्च * ॥ १५४८ ॥

चात् डिमः। डः इत्, तेन टिलोपः। अन्तिमः। पश्चिमः। अग्रः अग्रियः अग्रीयः अग्रिमः।

५० ०१०
कालात् ठक् † ॥ १५४९ ॥

कालवाचिनः भवाद्यर्थे ठक् स्यात्। कालिकः। सामयिकः। मासिकः। पाक्षिकः। वार्षिकः। सांवत्सरिकः।

५:० ०१० ५० ०१० ०१०
निशाप्रदोषाभ्यां वा श्वसस्तुट् च ॥ १५५० ॥

आभ्यां श्वसश्च वा ठक्, ठकि श्वसः तुडागमः स्यात्। पक्षे निशाप्रदोषाभ्यामण् श्वसस्तु त्यतनटौ। नैशिकं नैशम्। प्रादोषिकं प्रादोषम्। शौवस्तिकम्।

५:० ०१० ५० ०१० ७०
सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् शरदस्तु श्राद्धे
०१०
ठक् ॥ १५५१ ॥

ठकः अपवादः। (सि० पू० ५७१ पृ०) सन्धिवेलादि। सान्धिवेलम्, पार्वणम्, सान्ध्यम्। ऋतोः, शैशिरं ग्रैष्मं, वासन्तं शारदिकं श्राद्धं, अन्यत्र शारदम्।

५० १० ७० ०१० ५:० ०१० ०१०
प्रावृष एण्यो जाते तु वर्षाभ्यश्च ठक् ॥१५५२॥

---

* अन्तशब्दात् यः अपि दृश्यते, तेन अन्त्यः इत्यादि सिध्यति।
† अङ्गः अङ्गादेशः अपि वाच्यः, तेन आङ्गिकाम् इति सिध्यति।

ऋत्वण: अपवाद:। प्रावृषि भव: प्रावृषेण्य:। प्रावृषि जातस्तु प्रावृषिक:। वर्षासु जात: वार्षिक:।

५· १: १··१· ७·

हेमन्तादणठञौ तलोपश्चाणि ॥ १५५३ ॥

हैमन:। हैमन्तिक:।

७· ५: ·१· ५· ·१· ·१·

सम्भूते कोशकच्छिभ्यां ढक् ग्रीवाया अण् च ॥ १५५४ ॥

कोशे सम्भूतं कौशेयं वसनम्। ग्रैवेयं ग्रैवम्।

५:· १· ७·

दिगादिभ्यो यो भवे— ॥ १५५५ ॥

दिशि भवं दिश्यं रहस्यम्। (सि॰ पू॰ ५७८ पृ॰) दिगादि।

५· १· ५: ·१·

शरीरावयवाद्य योऽहिकुच्छिभ्यां ढक् ॥ १५५६ ॥

भवे अर्थे शरीरावयवात् य: स्यात्, अहिकुच्छिभ्यां ढक्। दन्त्यम्। ओष्ठ्यम्। कौक्षेयम्। आहेय:।

५: १· ७· ७·

कर्णललाटाभ्यां क: स्त्रियां भूषायाम् ॥१५५७॥

कर्णिका ललाटिका भूषा।

५:· १·

जिह्वामूलाङ्गुलिवर्गान्तेभ्यश्छ: ॥ १५५८ ॥

जिह्वामूलीयम्। अङ्गुलीयम्। कवर्गीय:। पवर्गीय:।

७· १· ·१· ·१·

तत्र नियुक्त इति ठक् ॥ १५५९ ॥

समस्यन्तात् नियुक्तः इत्यर्थे ठक् स्यात्। आपणे नियुक्तः आपणिकः।

७· १· ५:· ·१·

तत्र साधुर्वितण्डाद्दर्त्तिसंग्रहायुर्वेदेभ्यष्ठक् ॥१५६०॥

वैतण्डिकः। वार्त्तिकः। सांग्रहिकः।

५:··१· ५·

संग्रामापूपसङ्घातनिवासेभ्यश्च संयुगात्

·१·

खञ् ॥ १५६१ ॥

संग्रामे साधुः सांग्रामिकः। आपूपिकः। साङ्घातिकः। नैवासिकः। सांयुगीनः।

५:· ·१·

पथ्यतिथिवसतिभ्यो ढञ् ॥ १५६२ ॥

पथि साधुः पाथेयम्। आतिथेयम्। वासतेयम्।

५· ·१· ५· १:

परिषदो ण्यः सभाया यठौ ॥ १५६३ ॥

परिषदि साधुः पारिषद्यः। सभ्यः सभिकः।

७· १· ·१· १·

समानतीर्थे वासीति यः ॥ १५६४ ॥

समानतीर्थे (गुरौ) वसति इति सतीर्थ्यः। यद्विषये (१२१३ सू०) समानस्य सादेशः।

७· ८· ·१· १· ६· १· ·१·

समानोदरे शेते इति यः प्रकृतेः सोदरो वा ॥ १५६५ ॥

समानोदरे शेते समानोदर्यः सोदर्यः।

७· १· ५: ·१· · ·

**तत्र विदितः सर्वभूमिपृथिवीभ्यामण्॥ १५६६॥**

सर्वासु भूमिषु विदितः सार्वभौमः। पार्थिवः।

५:· ·१·

**इहलोकसर्वलोकेभ्यष्ठक्॥ १५६७॥**

इह विदितः ऐहिकः। लोके विदितः लौकिकः। सार्वलौकिकः, अनुशतिकादित्वात् उभयपदवृद्धिः।

७· १· ५:· १· ५· ·१· ·१·

**तत्र प्रसितः स्वाङ्गेभ्यः कः उदरात् तु ठक् ॥ १५६८॥**

दन्ते प्रसितः दन्तकः। औदरिकः आद्यूनः इत्यर्थः।

घटते कर्मणीत्यर्थे कर्मठस्तु निपात्यते।

प्रसीव्यमानाऽद्य खो वा साद्यखीना टिलोपतः॥

परशब्दाङ्गवे के कुक् परकीयं ततो भवेत्।

स्वभवे च स्वकीयं स्यात् स्वीयं केचिच्च मेनिरे॥

उपनीविप्रायभव औपनीविक इष्यते।

उपजानुप्रायभवे औपजानुकसाधनम्॥

इति सप्तम्यन्ताधिकृततद्धितप्रकरणम्।

---

## अथ चातुरर्थिकतद्धिताः।

·१· ७·८· ७· ·१·

**तदस्मिन्नस्ति देशेऽण्—॥ १५६९॥**

प्रथमान्तात् अस्ति अस्मिन् इत्यर्थे देशे वाच्ये अण् स्यात्। मतुबाद्यपवादः। पर्वतः अस्ति अस्मिन् देशे पार्वतः।

३· १·

**तेन निर्वृत्तम् ॥ १५७० ॥**

तृतीयान्तात् निर्वृत्ते ( निष्पन्ने ) अर्थे अण्। कुशाम्बेन निर्वृत्ता पुरी कौशाम्बी। हस्तिना निर्वृत्तं हास्तिनम्।

६· १· १· ·१·

**तस्य निवासोऽदूरभवश्च ॥ १५७१ ॥**

षष्ठ्यन्तात् निवासः इत्यस्मिन् अदूरभवः इत्यस्मिन् च अर्थे अण्। शिवेः निवासः शैवः। विदिशायाः अदूरभवं वैदिशं पुरम्। एते चत्वारः अर्थाः।

५ः· ·१· ५ः १· ·१·

**कुमुदनडवेतसेभ्यो ड्मतुप् नडशादाभ्यां ड्वलश्च ॥ १५७२ ॥**

चतुर्षु अर्थेषु एभ्यः ड्मतुप् स्यात्, नडादिभ्यां ड्वलश्च। डडपाः इतः। कुमुद्वान्। वेतस्वान्। नड्वलः नड्वान्। शाद्वलः।

७· ७ः· ६ः· ५ः· ·१· ·१·

**जनपदे बहुषु तेषां वरणादिभ्यश्च लुप् ॥ १५७३ ॥**

चतुर्षु अर्थेषु विहितानां तेषां जनपदे ( ग्रामसमूहे ) वाच्ये बहुषु, वरणादिभ्यस्तु अबहुषु अपि लुप् स्यात्। पञ्चालानां निवासाः जनपदाः पञ्चालाः अङ्गाः वङ्गाः। बहुषु किम्, पाञ्चालः पाञ्चाली। वरणा ताम्रपर्णी जम्बू चम्पा उज्जयिनी गया मथुरा तक्षशिला गोमती वरणादि। गयायाः अदूरभवः गया।

इति चातुरर्थिकतद्धितप्रकरणम्।

---

## अथ अव्ययतद्धिताः ।

५· ७· १·

### संख्यायाः क्रियाजन्मगणनायां कृत्वसुः ॥१५७४॥

संख्यावाचकात् क्रियाजन्मगणनायां कृत्वसुः स्यात् । उकारः इत् । पञ्चकृत्वः पचति । दशकृत्वः ददाति ।

५:· १· ६· ·१· ·१·

### द्वित्रिचतुर्भ्यः सुरेकस्य सकृच्च ॥ १५७५ ॥

प्रागुक्ते अर्थे एभ्यः सुः स्यात्, एकशब्दात् तु सुः, एकस्य सकृदादेशश्च । उकारः इत् । द्विर्ददाति । त्रिःपचति । रात् सस्यैव इति नियमात् सलोपे चतुर्भुङ्क्ते । एकशब्दात् सौस-कृदादेशे संयोगान्तलोपे सकृत् पठति ।

५· ·१· ·१·

### बहोर्धा वा ॥ १५७६ ॥

उक्ते अर्थे । बहुधा बहुकृत्वः वा भुङ्क्ते ।

५· ·१· ७·

### संख्याया धा क्रियाप्रकारे ॥ १५७७ ॥

क्रियाप्रकारे अर्थे संख्यावाचकात् धा स्यात् । पञ्चधा दशधा दत्ते ।

ऐकध्यमेकधा वा स्यात् द्वैधं द्वेधा द्विधा तथा ।
त्रैधं त्रेधा त्रिधा षोढा षड्धेत्येते निपातिताः ॥

५· ५· ·१· ·१·

### बह्वल्पार्थात् कारकाच्छस्—वा ॥ १५७८ ॥

बह्वर्थात् अल्पार्थाच्च कारकात् शस् स्यात् वा । बहूनि बहुभिः, बहुभ्यः वा ददाति बहुशः ददाति । एवम् अल्पशः पचति । शसि पुंवद्भावः इष्यते ।

५· ५··१· ७·
संख्यायाः परिमाणार्थैकवचनाच्च वीप्सायाम्
॥ १५७९ ॥

संख्यावाचकात् परिमाणार्थैकवचनाच्च कारकात् वीप्सायां शस् स्यात् वा। द्वौ द्वौ, द्वाभ्यां द्वाभ्यां वा ददाति द्विशः ददाति। शसा वीप्सोक्तेः न द्वित्वम्। पादं पादं पादेन पादेन वा पचति पादशः पचति। एकवचनात् किं, पादौ पादौ पादान् पादान् पचति इत्यादौ न।

६· ७··१··१· १·
तस्य तत्रेव वा वतिः ॥ १५८० ॥

षष्ठ्यन्तात् सप्तम्यन्ताच्च इवार्थे वतिः स्यात्। कृष्णस्य इव कृष्णे इव वा कृष्णवत्।

इति अव्ययतद्धितप्रकरणम्।

---

अथ अव्ययेष्वसर्वविभक्तितद्धिताः।

५· ६ः· ·१· ·१·
प्रातिपदिकात् सर्वविभक्तीनां तसिँल् वा—
॥ १५८१ ॥

प्रातिपदिकमात्रात् सकलविभक्तिस्थाने तसिँल् स्यात् वा। इतौ इतो। लोकतः। शास्त्रतः। सर्वतः। विभक्त्यादेशतया स्थानिवद्भावे त्यदाद्यत्वे यतः ततः। तद्धितविषये त्यदाद्यत्वे इदंपर्यन्तानाम् एव ग्रहणात् न युष्मदस्मदोः अत्वम्, तेन मत्तः अस्मत्तः। पक्षे यथायथं विभक्तयः।

कस्मात् कुत इतस्माद्देतस्मादत इष्यते।

किमादिभ्यस्तु पञ्चम्यास्तसिल्येते निपातिताः॥

परेस्तसिल् स्यात् सर्वार्थात् परितस्तेन जायते।
उभयार्थादभेस्तद्वदभितस्तेन साध्यते॥

५:० ६० १० ५:०

## किंसर्वनामबहुभ्यः सप्तम्या—स्त्रोऽद्व्यादिभ्यः ॥ १५८२ ॥

द्व्यादिभिन्नेभ्यः किमादिभ्यः परस्याः सप्तम्याः स्थाने त्रः स्यात् वा। द्व्यादिमध्यपतितत्वात् किमः पृथग्ग्रहणम्। सर्वस्मिन् अर्वयोः सर्वेषु वा सर्वत्र। यत्र। तत्र। बहुत्र। द्व्यादेस्तु द्वयोः त्वयि मयि।

किमः कुत्र ततःकुत्र कुह क्वेति च वा भवेत्।
इह स्यादिदमस्त्वे तु शास्त्रेष्वेते निपातिताः॥
भवद्योगे तु सर्वासां स्थाने त्रः स्यादतोऽर्चिते।
प्रयुज्यते तत्रभवानेवमत्रभवानपि॥

५:० ७० ०१०

## सर्वैकान्यकिंयत्तद्भ्यः काले दा ॥ १५८३ ॥

एभ्यः काले अर्थे सप्तम्याः दा वा स्यात्। सर्वस्मिन् काले सर्वदा। एकदा। अन्यदा। किमः ( २४७ सू० ) कत्वे कदा। यदा। तदा।

सर्वतो दाविधौ शास्त्रे वा सदेति निपात्यते।
अस्मिन् कालेऽधुनेदानीञ्चेदमस्तु विभाषया॥
तदानीञ्च तदा पक्षे तस्मिन् काले तदो भवेत्।
अनद्यतनकाले हि किं यत्तद्भ्यस्तु वा ततः॥
किमः कर्हि कदेत्येवं यदो यर्हि यदेति च।
तदस्तर्हि तदा नित्यं त्वेतर्हि चेदमेतदोः॥
अस्मिन्नह्नि भवेदद्य सद्यो भवति तत्क्षणे।

अस्मिन् वर्षे ऐषमः स्यात् पूर्ववर्षे परुद् भवेत् ॥
तथा पूर्वतरे वर्षे परारि स्यात् निपातितम् ।
पूर्वादिभ्यस्त्वहन्यर्थे सप्तम्या एद्युस् इष्यते ॥
तेन पूर्वेद्युरन्येद्युरितरेद्युरितीदृशम् ।
परस्मिन्नहनीत्यर्थे परेद्यवि निपातितम् ॥

५:॰ ५॰ ७॰
किंसर्वनामबहुभ्यस्तृतीयायाः प्रकारेऽद्वया-
५:॰ ॰१॰
दिभ्यस्था ॥ १५८४ ॥

प्रकारे अर्थे एभ्यः तृतीयास्थाने था स्यात् वा, न तु द्वयादिभ्यः । सर्वप्रकारैः सर्वथा । यथा । तथा । बहुधा । द्वयादेस्तु, द्वाभ्यां त्वया मया ।

किमिदंभ्यां थाविधौ तु कथमित्थं क्रमादिमे ।

५:॰ ६:॰
दिक्शब्देभ्यः प्रथमापञ्चमीसप्तमीनां दिग्दे-
७:॰ १॰ ५॰ ॰१॰ ॰१॰
शकालेष्वस्तातिरञ्चतेस्तु लुक् ॥ १५८५ ॥

दिशि रूढेभ्यः दिग्देशकालवृत्तिभ्यः परासाम् आसां स्थाने अस्तातिः स्यात्, अञ्चन्तात् तु तस्य लुक् । इकारः इत् । परस्तात् । प्राक् ।

५:॰ १॰ ॰१॰ ६:॰ १:॰ ॰१॰ ७:
पूर्वाधरावरेभ्योऽसिश्च तेषां पुरधवश्च तयोः
॥ १५८६ ॥

एभ्यः परासां तासां स्थाने असिः स्यात् अस्तातिः स्यात् प्रागुक्ते विषये, असौ अस्तातौ च परतः तेषां स्थाने क्रमेण

पुर, अध, अव्, इत्यादेशाश्च स्युः। इकारः इत्। पूर्वा पूर्वस्याः पूर्वस्यां वा पुरः पुरस्तात्। अधर-अधः अधस्तात्। अवर-अवः अवस्तात्।

ऊर्द्ध्वादस्तातिविषये उपरिष्टात् तथोपरि।
अपराच्च तथा पश्चात् शास्त्रेष्वेते निपातिताः॥

५ः १०

## दक्षिणोत्तराभ्यामतसुः॥ १५८७॥

आभ्यां परासां तासां स्थाने अतसुः स्यात् वा प्रागुक्तविषये। अस्तातेः अपवादः। उकारः इत्। दक्षिणा दक्षिणस्याः दक्षिणस्यां वा दक्षिणतः। उत्तरतः। तसिलैव सिद्धेः अस्तातिवारणार्थं अतसर्थेत्यादिना षष्ठीविधानार्थञ्च सूत्रम्।

५ः० १० ०१०

## उत्तराधरदक्षिणेभ्य आतिर्वा॥ १५८८॥

इकारः इत्। उत्तरा उत्तरस्या उत्तरस्यां वा उत्तरात्। अधरात्। पक्षे यथाप्राप्तम्।

०१००१० ७० ५०

## एनब्वाऽदूरेऽपञ्चम्याः॥ १५८९॥

प्रागुक्तेभ्यः परासां तासां स्थाने एनप् वा स्यात् अदूरे गम्ये, न तु पञ्चम्याः। उत्तरेण दक्षिणेन। पक्षे यथाप्राप्तम्।

५ः ०१० ७० ०१० १०

## दक्षिणोत्तराभ्यामाच् दूरे त्वाहिः॥ १५९०॥

आभ्याम् अदूरे गम्ये तासाम् आच् स्यात्। दूरे तु आहिः, न तु पञ्चम्याः। चकारः इत्। दक्षिणा उत्तरा। दूरे तु, दक्षिणाहि उत्तराहि।

इति असर्वविभक्तितद्धितप्रकरणम्।

## अथ अव्ययेषु च्विप्रभृतितद्धिताः ।

७· ५· १··१· ७·

### अभूततद्भावे सुपश्च्विर्वा कृभ्वस्तिप्रयोगे ॥१५८१॥

अन्यथाभावं प्राप्तायां प्रकृतौ वर्त्तमानात् विकारशब्दात् सुबन्तात् च्विः वा स्यात् कृभ्वस्तिप्रयोगे । चकारेकारौ इतौ । अशुक्लं शुक्लं करोति इत्यर्थे च्वौ ( ७३५ सू० ) वमात्रस्य लोपे ( ५७४ सू० ) अस्य ईत्त्वे ( १०५७ सू० ) गतिसमासे शुक्लीकरोति । एवं अशुक्लः शुक्लः भवति अस्ति वा इत्यर्थे शुक्लीभवति शुक्लास्ति । दिवाभूता रात्रिः दोषाभूतमहः इत्यादिभाष्यप्रयोगात् अव्ययस्य न ईत्त्वम् इति स्थितिः ।

७· १·

### च्वौ—दीर्घः ॥ १५८२ ॥

च्वौ परे पूर्वस्वरस्य दीर्घः स्यात् । अशुचिं शुचिं करोति शुचीकरोति । लघूकरोति । ऋतः ( ५६७ सू० ) रीङि मात्रीकरोति ।

६ः १·

### अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपः ॥ १५८३ ॥

च्वौ परे एषाम् अन्त्यलोपः स्यात् । अरूकरोति । सुमनीकरोति । सुरजीकरोति । नीरजीकरोति । अराजानं राजानं करोति इत्यादौ च्वौ प्रत्यये सुपः लोपे पदान्ततया नस्य लुपि ( १५८ सू० ) नलुपः असिद्धता नियमेन अत्र सिद्धत्वात् अस्य ईत्त्वे राजीकरोति ।

७· १··१· ३· ७·

### च्विविषये सातिर्वा साकल्येन सम्पद्यमाने ॥ १५८४ ॥

इकारः इत्। अजलं जलं साकल्येन सम्पद्यते तत् तथा करोति जलसात्करोति जलसाद्भवति जलसादस्ति। पूर्वे च्विः। अग्निसात्करोति इत्यादौ तु न षत्वम्।

७· १· ७·

## तदधीनवचने सातिः कृभ्वस्तिसम्पदिप्रयोगे ॥ १५९५ ॥

तदधीनत्वे अर्थे सुबन्तात् सातिः स्यात् कृभ्वादिप्रयोगे। देवाधीनं करोति देवसात्करोति देवसाद्भवति देवसादस्ति देवसात्सम्पद्यते।

७· ·१· ·१·

## देये त्रा च ॥ १५९६ ॥

तदधीने देये अर्थे त्रा, चकारात् सातिः स्यात् कृभ्वादिप्रयोगे। विप्राधीनं देयं करोति विप्रत्राकरोति विप्रत्राभवति इत्यादि। पक्षे विप्रसात्करोति इत्यादि।

५· ५· ५· ·१· ७·

## संख्याया गुणान्तायास्तीयान्तायाश्च कृषौ

७· ·१·

## कृञ्योगे—डाच्— ॥ १५९७ ॥

गुणान्तायाः तीयान्तायाश्च संख्यायाः कृषौ अर्थे डाच् स्यात् कृञ्प्रयोगे। डचौ इतौ। द्विगुणं कर्षणं करोति द्विगुणाकरोति। द्वितीयं कर्षणं करोति द्वितीयाकरोति। तृतीयाकरोति।

५: ७·

## सपत्रनिष्पत्राभ्यामतिव्यथने ॥ १५९८ ॥

अतिव्यथने अर्थे कृञ्प्रयोगे आभ्यां डाच् स्यात्।

सपत्राकरोति मृगं सपुङ्खशरप्रवेशनेन अतिव्यथितं करोति इत्यर्थः ।

५: ७· ५· ७·

सुखप्रियाभ्यामानुलोम्ये दुःखात् प्रातिलोम्ये

॥ १५९९ ॥

कृञ्योगे आभ्याम् आनुलोम्ये द्योत्ये, दुःखात् तु प्रातिलोम्ये डाच् । सुखाकरोति प्रियाकरोति अनुकूलयति इत्यर्थः । दुःखाकरोति पीड़यति इत्यर्थः ।

५· ७· ५· ७·

शूलात् पाके सत्यादशपथे ॥ १६०० ॥

शूलाकरोति शूलेन पचति इत्यर्थः । सत्याकरोति क्रेतव्यम् इति वाक्येन तथ्यं करोति इत्यर्थः ।

५· १··१· ७··१· १·

अव्यक्तानुकरणात् द्विश्च तस्मिंश्च टिलोपः

॥ १६०१ ॥

अव्यक्तस्य अनुकरणात् (पटत्भमत्प्रभृतेः) डाच् स्यात् कृञ्प्रयोगे, तस्मिन् च प्रकृतेः द्वित्वं, टिलोपश्च स्यात् । पटपटाकरोति ।

५· ५· १: ७· ६· ·१·

किमः सुबन्ताच्चिच्चनावनिर्धारणे सुपो न

·१·

लुक् ॥ १६०२ ॥

सुबन्तात् किमः चिच्चनौ स्याताम् अनिर्धारणे गम्ये, तत्र

च सुप: न लुक्। किञ्चित् किञ्चन। केनचित् केनचन।
विभक्त्यादेशास्ततया कुत्रचित् क्वचित् इत्यादि।

इति च्विप्रभृत्यव्ययतद्धितप्रकरणम्।

## अथाकच्।

स्वार्थे कस्यापवादेन सर्वनाम्नां विकल्पत:।
टे: प्रागकच् ततस्तेषां सम्मता सर्वनामता॥
त्यदाद्यत्वं ततस्तेषां पुंवद्भावादिकं भवेत्।
स्वार्थिके केन तस्सिद्धिस्तदन्तस्यान्यशब्दता॥
तेनासकौ चामुको वा त्यदाद्यत्वेन सिध्यति।
अकजयुक्ताददस्शब्दात् सौरौत्वन्तु विभाषया॥
औत्वपक्षे दस्य सत्वं मत्वं तदन्यपक्षत:।
याऽसकौ रह इत्यादि माघकाव्यप्रयोगत:॥
अत्राहममुक: साक्षीत्येवं योगीश्वरोक्तित:।
द्विविधं हि भवेत् साधु त्यदाद्यत्वं तु सर्वथा॥
सर्विकस्या: प्रिय इति वाक्ये स्यात् सर्वकप्रिय:।
केचिद्विभाषयेच्छन्ति तेभ्य: स्याट्टस्मिनाद्यत:॥
मुनेर्मनोवृत्तिरिव स्विकायामिति नैषधे।
प्रयुक्तं यत् स्मृतिग्रन्थेऽसुकि मासीति साधु तत्॥
अव्ययानां तु केषाञ्चित्तथैवाकच् विभाषया।
उच्चै: स्यादुच्चकैर्नीचैन
सर्वनाम्नां सुबन्तानां तिङन्तानामकज्विधि:।
प्रयोगादर्शनाल्लोके स तु शास्त्रे व्यवस्थित:॥
रसो रूपं तथा गन्ध: स्पर्श: शब्दो रसादय:।
एतेभ्यो मतुबेव स्यात् नेनि: ठौ वा भवेन्न च॥

रसवान् रूपवांस्तेन न रसी रसिको न वा ।
रूपी पटोऽनित्य इति प्रयोगेऽतो न साधुता ॥
एकाक्षरकृदन्ताच्च मतुबेव न तौ मतौ ।
पाकवानेवमेव स्यात् न पाकी न च पाकिकः ॥
भोगियोगीत्यादिसिद्धैर् घिनुण् स्यात् सार्थकस्ततः ।
न जातिवचनात्तौ च समम्यर्थे कथञ्चन ॥
मतुबेव भवेत्तस्मात् घटवद् भूतलं ततः ।
न घटि घटिकं वापि प्रयोगो न हि जायते ॥
मत्वर्थीयात् सरूपात् तु न सरूपान्तरं पुनः ।
गुणिमानेवमेव स्यात् गुणवत्त्वान् न वा भवेत् ।
गुणवत्त्वान् प्रयोगस्तु न साधुरिति देशना ॥

इति तद्धितप्रकरणम् ।

---

## अथ द्वित्वप्रकरणम् ।

अचः परस्य द्वित्वं वा यरो हलि विभाषया ।
द्विधा रूपं भवेत्तेन यक्षा सिद्ध्यति सिध्यति ॥
अचः परस्माद्रेफात् तु यरो द्वित्वञ्च वा भवेत् ।
कार्य्यं कार्यमार्त्तिरार्तिर्दुर्ग्गं दुर्गमितीदृशम् ॥
हलः परा झरो लोप्याः सवर्णे झरि पाक्षिकः ।
कन्धो कन्धस्ततो रूपं द्विधा स्यात् शास्त्रसम्मतम् ॥

( ८७९ सू० ) द्विर्ले वृक्षं वृक्षं प्रति, यां यां प्रति, येन येन गतम्, यस्मै यस्मै दत्तम् इत्यादि ।

६० ११ ११

एकस्य द्वित्वं समासवच्चास्य ॥ १६०३ ॥

सुबन्तस्य एकशब्दस्य द्वित्वं, समासवद्भावश्च। तेन सुपः लुक्। एकैकः। एकैकेन। एकैकस्मै।

७· ६· १·

कर्मव्यतिहारे सर्वनाम्नः समासवत्त्वम् ॥ १६०४ ॥

स्वस्य यादृशक्रियायां यस्य यत्कारकत्वं तस्य तादृश्याम् एव क्रियायां स्वस्य तत्कारकत्वं कर्मव्यतिहारः। तत्र द्योत्ये सर्वनाम्नः द्वित्वं, समासवत्त्वञ्च स्यात्। इतरेतरं पश्यति। इतरेतरस्मै ददाति।

६: ६: ६· १·

पूर्वपदस्ययोरन्यपरयोर्विभक्तेः सुँः ॥ १६०५ ॥

एतयोः परस्याः विभक्तेः स्थाने सुँः स्यात्। उकारः इत्। समासवद्भावेन विभक्तेः लोपे प्राप्ते वचनम्। अन्योन्यं नमन्ति विप्राः, परस्परस्मै ददाति। अन्योन्येषां पुष्करैराममृशन्त इति माघः।

द्विशब्दस्य द्विर्वचने रहस्ये द्वन्द्वमिष्यते।
अन्योऽन्यार्थे तथान्योन्यां तत्रैवार्थे परस्पराम्।
यथाशब्दस्य द्विर्भावे यथास्वे च यथायथम्।
समासवत्त्वं द्वित्वञ्च स्यात्तथा गुणवाचिनः।
उष्णोष्णः शीतशीतश्च श्वेतश्वेतादिकं ततः ॥

इति द्वित्वप्रकरणम्।

अम्बिकानाम नगरी वर्द्धमानप्रदेशगा।
तस्यां निवासी विप्रः श्रीतारानाथसमाह्वयः ॥
वात्स्यवंश्यकालिदासपण्डितोत्तंससम्भवः।
कलकाता नगरे विद्यामन्दिरेऽध्यापकोऽधुना ॥

प्रसिद्धशब्दसङ्घातसाधनार्थमिदं नवम् ।
आशुबोधं व्याकरणं पाणिन्यादिमतेऽकरोत् ॥
वेदाश्विग्रहराशीशमिते संवत्सरे गते ।
सुप्रचाराय सर्वत्र मुद्रायन्त्रे न्ययोजयत् ॥

सम्पूर्णम् ।